# BRAHMA SÛTRA VRITTI

WITH ADWAITA MANJARI

BY

**A PUPIL OF SHRIMAN SHANKAR**

EDITED BY

**MAHADEVA GANGADHAR BAKRE**

Printed and Published at

**THE GUJARATI PRINTING PRESS**

by Manilal Itcharam Desai

No. 8, SASSOON BUILDINGS, CIRCLE, FORT,

**BOMBAY.**

V. S. 1971 A. D.1914

**Price Twelve Annas.**

श्रीमच्छंकरभगवच्छिष्यप्रणीता

# ब्रह्मसूत्रवृत्तिः

## ( अद्वैतमञ्जरी )

वाक्रेइत्युपाह्वगङ्गाधरभट्टसुतेन महादेवशर्मणा
संशोधिता

साच

मुम्बय्या

कोट सासुन बिल्डिंग नं. ८ इत्यत्र

मणिलाल इच्छाराम देशाई इत्यनेन स्वीये

' गुजराती ' मुद्रणालयेऽङ्कयित्वा

तत्रैव प्रकाशिता ।

---

विक्रमसंवत् १९७१ खिस्ताब्दः १९१४

मूल्यं द्वादशाणकाः ।

# ब्रह्मसूत्रस्थाधिकरणानुक्रमणिका ।



## तृतीयाध्याये पादः ४



## चतुर्थाध्याये पादः १

समाप्ता ब्रह्मसूत्राधिकरणसूची ।





हृदयेश्वराचार्यकृता वृत्तिरियमिति वृद्धाः।






श्रीमच्छंकरभगवत्पादशिष्यप्रणीता

# ब्रह्मसूत्रवृत्तिः ।

## ( अद्वैतमञ्जरी )

### प्रथमाध्यायस्य प्रथमः पादः ।

जिज्ञासाधिकरणम् ॥ १ ॥

**अथातो ब्रह्मजिज्ञासा ॥ १ ॥**

'शान्तो दान्त' इत्यादिश्रुतेः 'आत्मा वा अरे द्रष्टव्यः' इत्यादिश्रुतेश्च अथ साधनचतुष्टयसंपत्त्यनन्तरम् अतः अधिकारस्य संपूर्णत्वात् ब्रह्मजिज्ञासा कर्तव्या ब्रह्मविचारः कर्तव्य इत्यर्थः ॥ १ ॥

जन्माद्यधिकरणम् ॥ २ ॥

जिज्ञास्यस्य ब्रह्मणो लक्षणमाह—

**जन्माद्यस्य यतः ॥ २ ॥**

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेः अस्य प्रपञ्चस्य जन्मादि यतः कारणात् भवति, तत् ब्रह्मेत्यर्थः । जगज्जन्मस्थितिलयकारणत्वं ब्रह्मणो लक्षणमुक्तं भवति ॥ २ ॥

शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

लक्षणमुक्त्वा प्रमाणमाह—

**शास्त्रयोनित्वात् ॥ ३ ॥**

'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यादिश्रुत्या शास्त्रप्रमाणकत्वात् ब्रह्मणः अप्रामाणिकत्वं नास्तीत्यर्थः ॥ ३ ॥

समन्वयाधिकरणम् ॥ ४॥

शास्त्रप्रमाणकत्वे हेतुं वदन्नेव अनुमानादिप्रमाणकत्वं निराकरोति—

**तत्तु समन्वयात् ॥ ४॥**

तत् ब्रह्म शास्त्रप्रमाणकं, कुतः? समन्वयात् 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुत्या उपक्रमोपसंहारादिलिङ्गैश्च सर्वेषां वेदान्ताना ब्रह्मण्येव तात्पर्यनिर्णयादित्यर्थः। तुशब्देन अनुमानादिप्रमाणकत्वं निरस्यति। 'नावेदविन्मनुते तं बृहन्तम्। नैषा तर्केण मतिरापनेया' इत्यादिश्रुत्या अनुमानादिप्रमाणकत्वस्य निरस्तत्वात्। 'न चक्षुषा गृह्यते' इत्यादिश्रुत्या प्रत्यक्षादिप्रमाणकत्वस्य च निरस्तत्वेन परिशेषात् शास्त्रप्रमाणकत्वं ब्रह्मणो निश्चीयत इत्यर्थः॥ ४॥

ईक्षत्यधिकरणम्॥ ५॥

ब्रह्मणः शास्त्रप्रमाणकत्वं प्रसाध्य प्रधानस्य स्वातन्त्र्येण जगत्कारणत्वं निराकरोति 'ईक्षतेर्नाशब्दम्' इत्यादिना 'श्रुतत्वाच्च' इत्येवमन्तेन सूत्रसंदर्भेण[1]—

**ईक्षतेर्नाशब्दम्॥ ५॥**

अशब्दं शब्दाप्रतिपाद्यं प्रधानं जगत्कारणं न भवति। कुतः? ईक्षतेः 'तदैक्षत' इति श्रुतौ जगत्कारणस्य ईक्षितृत्वश्रवणात् जडस्य प्रधानस्य ईक्षितृत्वासंभवादित्यर्थः॥ ५॥

अप्तेजसोरिव प्रधानस्यापि गौणमीक्षणं संभवतीत्याशङ्क्य निराकरोति—

**गौणश्चेन्नात्मशब्दात् ॥ ६॥**

ईक्षतिशब्दो गौण इति चेन्न। आत्मशब्दात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति श्रुतौ जगत्कारणे आत्मशब्दप्रयोगात् मुख्यमेवेक्षणं न गौणमित्यर्थः॥ ६॥

ब्रह्मैव जगत्कारणमित्यत्र हेत्वन्तरमाह—

**तन्निष्ठस्य मोक्षोपदेशात् ॥ ७॥**

'तस्य तावदेव चिरम्' इति श्रुतौ जगत्कारणध्याननिष्ठस्य मोक्षोपदेशात् जडप्रधानध्यानेन मोक्षासंभवादित्यर्थः॥ ७॥

---

१ अध्यायपरिसमाप्तिपर्यन्तेन सूत्रसंदर्भेणेति पाठः।

स्थूलारुन्धतीन्यायेन प्रथमं प्रधानध्यानं कृत्वा पश्चात् ब्रह्मध्यानं कुर्वतो मोक्षो भविष्यतीत्याशङ्क्य निराकरोति—

हेयत्वावचनाच्च ॥ ८ ॥

हेयत्वस्य निषेधस्य अवचनात् अनुक्तेरित्यर्थः । न प्रधानध्यानान्मोक्ष इति निषेधाकथनात् स्थूलारुन्धतीन्यायेनापि न प्रधानस्यावकाश इत्यर्थः ८

ब्रह्मणो जगत्कारणत्वे हेत्वन्तरमाह—

स्वाप्ययात् ॥ ९ ॥

'सता सोम्य तदा संपन्नो भवति' इति श्रुतौ सुषुप्तिकाले सर्वेषामन्तःकरणविशिष्टानां जीवानां स्वाधिष्ठाने लयश्रवणाज्जडप्रधाने चेतनानां जीवानां लयासंभवात् ब्रह्मैव जगत्कारणमित्यर्थः ॥ ९ ॥

हेत्वन्तरमाह—

गतिसामान्यात् ॥ १० ॥

गतिः तात्पर्यं, सर्वेषां वेदान्तानां ब्रह्मणि तात्पर्यसाम्यादित्यर्थः ॥१०॥

श्रुतत्वाच्च ॥ ११ ॥

'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुतौ जगत्कारणस्य सर्वज्ञत्वश्रवणाच्च ब्रह्मैव जगत्कारणमित्यर्थः ॥ ११ ॥

आनन्दमयाधिकरणम् ॥ ६ ॥

आनन्दमयोऽभ्यासात् ॥ १२ ॥

'अन्योऽन्तर आत्माऽऽनन्दमयः' इति श्रुतौ आनन्दमयः परमात्मैव, न जीवः । कुतः ? अभ्यासात् आनन्दशब्दस्य बहुश्रुतिषु ब्रह्मण्येव प्रयोगदर्शनादित्यर्थः ॥ १२ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

मयट्प्रत्ययस्य मृण्मयो घट इत्यादौ विकारवाचकत्वान्निर्विकारस्य ब्रह्मणः आनन्दविकारत्वासंभवात् आनन्दमयः न परमात्मेति चेन्न । प्राचुर्यार्थेऽपि 'अन्नमयो यज्ञः' इत्यादौ मयट्प्रत्ययविधानात् आनन्दप्रचुरत्वस्य ब्रह्मण्यपि संभवादित्यर्थः ॥ १३ ॥

तद्धेतुव्यपदेशाच्च ॥ १४ ॥

'को ह्येवान्यात् कः प्राण्यात्' इति श्रुतौ सकलजीवानन्दहेतुत्वस्य व्यपदेशादपि आनन्दमयः परमात्मेत्यर्थः ॥ १४ ॥

मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रे ब्रह्मण उपक्रान्तत्वादपि आनन्दमयो ब्रह्मेत्यर्थः ॥ १५ ॥

सिद्धान्तमुक्त्वा पूर्वपक्षं निराकरोति—

नेतरोऽनुपपत्तेः ॥ १६ ॥

आनन्दमयः इतरः जीवो न भवति । कुतः ? अनुपपत्तेः आनन्दप्रचुरत्वादिधर्माणां जीवेऽनुपपत्तेरित्यर्थः ॥ १६ ॥

भेदव्यपदेशाच्च ॥ १७ ॥

'अन्योऽन्तर आत्मानन्दमयः' इति श्रुतौ आनन्दमयस्य जीवाद्भेदव्यपदेशाच्च आनन्दमयो न जीव इत्यर्थः । ननु, 'अन्योऽन्तर आत्मा प्राणमयः, अन्योऽन्तर आत्मा मनोमयः, अन्योऽन्तर आत्मा विज्ञानमयः' इत्यादिवाक्येषु विद्यमानानामन्यशब्दानां जीवान्यत्वप्रतिपादकत्वाभावात् 'अन्योऽन्तर आत्मानन्दमयः' इति वाक्यस्थस्य अन्यशब्दस्य कथं जीवान्यत्वप्रतिपादकत्वमिति चेन्न । आनन्दमयादन्यस्य ब्रह्मवल्ल्यामनुक्तत्वेन आनन्दमयशब्दस्य 'ब्रह्मविदाप्नोति परम्' इति उपक्रान्तब्रह्मप्रतिपादकत्वे निश्चिते सति अत्रत्यान्यशब्दस्य जीवान्यत्वप्रतिपादकत्वनिश्चयादिति भावः ॥ १७ ॥

आनन्दमयः प्रधानमस्त्वित्याशङ्क्याह—

कामाच्च नानुमानापेक्षा ॥ १८ ॥

'सोऽकामयत' इति श्रुतौ आनन्दमयस्य कामयितृत्वश्रवणाज्जडस्य प्रधानस्येच्छासंभवात् अनुमानस्य अनुमानप्रतिपाद्यस्य प्रधानस्यापेक्षा आशा न कर्तव्येत्यर्थः ॥ १८ ॥

आनन्दमयः प्रधानं न भवतीत्यत्र हेत्वन्तरमाह—

अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

अस्मिन्नानन्दमये आसक्तचित्तस्यास्य मुमुक्षोः तद्योगं तद्भेदं शास्ति प्रतिपादयति 'यदा ह्येवैष एतस्मिन्नदृश्ये' इत्यादिश्रुतिः । ततश्चेतनस्य जीवस्य जडप्रधानाभेदासंभवादानन्दमयः परमात्मेत्यर्थः ॥ १९ ॥

अन्तरधिकरणम् ॥ ७ ॥

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

'अथ य एषोऽन्तरादित्ये' इति श्रुतौ अन्तः आदित्यमण्डलान्तर्वर्ती हिरण्मयः पुरुषः परमात्मा, न सूर्यः । कुतः ? तद्धर्मोपदेशात् अपहतपाप्मत्वादिब्रह्मधर्मोपदेशादित्यर्थः ॥ २० ॥

भेदव्यपदेशाच्चान्यः ॥ २१ ॥

'य आदित्ये तिष्ठन्' इति श्रुतौ आदित्यपरमात्मनोः नियम्यनियामकभावश्रवणान्नियामकः परमात्मैव आदित्यमण्डले अभिव्यक्तः अस्मिन् वाक्ये प्रतिपाद्यत इत्यर्थः ॥ २१ ॥

आकाशाधिकरणम् ॥ ८ ॥

आकाशस्तल्लिङ्गात् ॥ २२ ॥

'अस्य लोकस्य का गतिः' इति श्रुतौ आकाशः परमात्मा, न भूताकाशः । कुतः ? तल्लिङ्गात् सर्वभूतोत्पत्तिलयहेतुत्वादिब्रह्मलिङ्गादित्यर्थः ॥ २२ ॥

प्राणाधिकरणम् ॥ ९ ॥

अत एव प्राणः ॥ २३ ॥

'प्रस्तोतर्या देवता' इति श्रुतौ प्राणः परमात्मा, न प्राणवायुः । कुतः? अत एव सर्वभूतोत्पत्तिलयहेतुत्वादिब्रह्मलिङ्गादेवेत्यर्थः ॥ २३ ॥

ज्योतिरधिकरणम् ॥ १० ॥

ज्योतिश्चरणाभिधानात् ॥ २४ ॥

'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रुतौ ज्योतिः परमात्मा, न सूर्यादिज्योतिः । कुतः ? चरणाभिधानात् 'पादोऽस्य विश्वा भूतानि' इति पूर्ववाक्ये ब्रह्मणः पादत्रयाभिधानात् तस्यैव ब्रह्मणः द्युलोकसंबन्धेन ज्योतिर्वाक्ये प्रत्यभिज्ञायमानत्वादित्यर्थः ॥ २४ ॥

पूर्ववाक्ये पादत्रयवत्त्वं गायत्र्या एवोक्तं, न ब्रह्मण इत्याशङ्क्य निराकरोति—

छन्दोऽभिधानान्नेति चेन्न तथा
चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॥ २५ ॥

'गायत्री वा इदं सर्वं भूतम्' इति श्रुतौ गायत्र्याख्यच्छन्दसः उपक्रान्तत्वात् पादत्रयवत्त्वमपि गायत्र्या एवोक्तं, न तु ब्रह्मण इति चेन्न । तथा गायत्र्यवच्छिन्ने ब्रह्मणि चेतोऽर्पणस्य चित्तप्रक्षेपस्य निगदात् कथ-

नात् पादत्रयवत्त्वं ब्रह्मण एवोक्तम् । तथा हि दर्शनम् आदित्यमण्डलादिशुद्धस्थलेषु परमात्मनः अभिव्यक्तिः अन्यत्राप्युक्ता तद्वत् गायत्र्यभिव्यक्तं ब्रह्म उपास्यमित्यर्थः ॥ २५ ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

भूतादीनां पादानामवयवानां व्यपदेशस्य ब्रह्मण्येवोपपत्तेः उपपन्नत्वाच्च एवं गायत्रीशब्देन गायत्र्यवच्छिन्नं ब्रह्मैवोच्यत इत्यर्थः । 'गायत्री वा इदं सर्वम्' इति वाक्ये गायत्र्याः पञ्चमहाभूतादिसकलप्रपञ्चात्मकत्वमुक्तम् । तच्च गायत्र्यवच्छिन्नस्य ब्रह्मण एव संभवति, न केवलगायत्र्या इति भावः ॥ २६ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

'त्रिपादस्यामृतं दिवि ' इति गायत्रीवाक्ये त्रिपाद्ब्रह्मणः ब्रह्माण्डान्तर्वर्तित्वमुक्तम् । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते ' इति ज्योतिर्वाक्ये तु त्रिपाद्ब्रह्मणः ब्रह्माण्डादुपरि अवस्थानमुक्तम् । तथाचोपदेशभेदात् उपदेशयोः गायत्रीवाक्यज्योतिर्वाक्ययोः भेदात् परस्परविरुद्धार्थकत्वात् नेति चेन्न प्रामाण्यं नास्तीति चेन्न । उभयस्मिन्वाक्यद्वयेऽपि अविरोधात् विरोधाभावात् । दिवीति सप्तमीविभक्तेः लक्षणया पञ्चमीविभक्त्यर्थबोधकत्वादिति भावः ॥ २७ ॥

इन्द्रप्राणाधिकरणम् ॥ ११ ॥

प्राणस्तथानुगमात् ॥ २८ ॥

'प्राणोऽस्मि प्रज्ञात्मा ' इति श्रुतौ प्राणः परमात्मा, न प्राणवायुः । कुतः तथानुगमात् 'प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' इति वाक्ये ब्रह्मलिङ्गाभिधानादित्यर्थः ॥ २८ ॥

न वक्तुरात्मोपदेशादिति
चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ २९ ॥

वक्तुरिन्द्रस्यात्मोपदेशात् शरीरोपदेशादिन्द्रशरीरमेव उपास्यमिति चेन्न । अध्यात्मसंबन्धभूमा आनन्दामृतत्वाद्यध्यात्मलिङ्गबाहुल्यमस्मिन् वाक्ये उपलभ्यते, न तु वज्रहस्तत्वादिकमिन्द्रशरीरलिङ्गम् । अत इन्द्रशरीरमध्यवर्ती परमात्मैव उपास्य इत्यर्थः ॥ २९ ॥

इन्द्रस्य देहातिरिक्तात्मज्ञानाभावात् नोपदेष्टृत्वमित्याशङ्क्याह—

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥

इन्द्रस्यापि शुकवामदेवादिवत् शास्त्रजन्यब्रह्मसाक्षात्कारवत्त्वात् उपदेश उपपद्यत इत्यर्थः ॥ ३० ॥

जीवमुख्यप्राणलिङ्गान्नेति चेन्नो-
पासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

'न वाचं विजिज्ञासीत वक्तारं विद्यात् प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति' इति श्रुतौ जीवमुख्यप्राणलिङ्गानामपि विद्यमानत्वान्न ब्रह्मोपासनामात्रपरमिति चेन्न । इष्टापत्तेः । कुतः ? उपासात्रैविध्यात् प्राणजीवब्रह्मविषयकोपासनात्रयस्याङ्गीकृतत्वात् इह तद्योगात् अस्मिन् वाक्ये उपासनात्रयस्य स्थूलारुन्धतीन्यायेन निर्गुणब्रह्मज्ञानसाधनत्वेन उपयुक्तत्वादित्यर्थः ॥ ३१ ॥

इति ब्रह्मसूत्रवृत्तौ प्रथमाध्यायस्य प्रथमः पादः ।

---

## प्रथमाध्यायस्य द्वितीयः पादः ।

सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

सर्वत्र प्रसिद्ध उपदेशात् ॥ १ ॥

'मनोमयः प्राणशरीरः' इति वाक्ये परमात्मा उपास्यः । कुतः ? 'सर्वं खल्विदं ब्रह्म' इतिवाक्ये सर्वत्र प्रसिद्धस्य ब्रह्मणः उपक्रान्तत्वादित्यर्थः ॥ १ ॥

विवक्षितगुणोपपत्तेश्च ॥ २ ॥

विवक्षितानां सत्यसंकल्पादीनां गुणानां ब्रह्मण्येवोपपत्तेरित्यर्थः ॥ २ ॥

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

शारीरः जीवः नोपास्यः । कुतः ? अनुपपत्तेः सत्यसंकल्पादिधर्माणां जीवे अनुपपत्तेरित्यर्थः ॥ ३ ॥

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

उपास्योपासकभावव्यपदेशाच्च न जीव उपास्य इत्यर्थः ॥ ४ ॥

शब्दविशेषात् ॥ ५ ॥

ब्रह्मशब्दप्रयोगादित्यर्थः ॥ ५ ॥

स्मृतेश्च ॥ ६ ॥

'यं यं वापि स्मरन् भावम्' इति स्मृतेरित्यर्थः ॥ ६ ॥

अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

'एष त आत्मान्तर्हृदये' इति श्रुतेः अल्पपुण्डरीकस्थानकत्वात् तद्व्यपदेशादणुत्वव्यपदेशाच्च न परमात्मा उपास्य इति चेन्न। निचाय्यत्वादणुत्वेन ध्यातुं शक्यत्वात् व्यापकस्य ब्रह्मणो ध्यातुमशक्यत्वाच्च। व्योमवत् यथा व्यापकस्याकाशस्य सूचीरन्ध्रादौ अणुत्वम्, एवं ब्रह्मणोऽपि हृत्पुण्डरीके अणुत्वं ध्यानार्थमुक्तमित्यर्थः ॥ ७ ॥

संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

ब्रह्मणोऽपि हृत्पुण्डरीकावस्थानाङ्गीकारे जीववत् सुखदुःखभोगप्रसङ्ग इति चेन्न। वैशेष्यात् जीवस्य पुण्यपापकर्तृत्वात् सुखदुःखभोगः, ईश्वरस्य तु पुण्यपापकर्तृत्वाभावात् न भोग इत्यर्थः ॥ ८ ॥

अत्रधिकरणम् ॥ २ ॥

अत्ता चराचरग्रहणात् ॥ ९ ॥

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' इत्यादिश्रुतौ अत्ता संहर्ता परमात्मा, न जीवः। कुतः? चराचरग्रहणात् चराचरसंहर्तृत्वादित्यर्थः ९॥

प्रकरणाच्च ॥ १० ॥

'अन्यत्र धर्मादन्यत्राधर्मात्' इति श्रुतौ ब्रह्मणः पृष्टत्वादित्यर्थः ॥१०॥

गुहाधिकरणम् ॥ ३ ॥

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

'ऋतं पिबन्तौ' इति श्रुतौ गुहां प्रविष्टौ जीवपरमात्मानौ न बुद्धिजीवौ। कुतः? तद्दर्शनात् 'द्वा सुपर्णा' इत्यादिश्रुतौ जीवपरमात्मप्रतिपादनदर्शनादित्यर्थः ॥ ११ ॥

विशेषणाच्च ॥ १२ ॥

'ब्रह्मविदो वदन्ति' इत्युत्तरवाक्ये परमात्मप्रतिपादनादित्यर्थः॥१२॥

अन्तराधिकरम् ॥ ४ ॥

अन्तर उपपत्तेः ॥ १३ ॥

'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यादिश्रुतौ अन्तरः अक्षिमध्यवर्ती परमात्मा, न जीवः । कुतः ? उपपत्तेः अमृतत्वादिधर्माणां ब्रह्मण्येवोपपत्तेरित्यर्थः ॥ १३ ॥

स्थानादिव्यपदेशाच्च ॥ १४ ॥

आदित्यमण्डलहृत्पुण्डरीकादिशुद्धस्थानेषु ब्रह्मोपासनस्य आदिपदात् तद्धर्मस्य च अन्यत्र उपदिष्टत्वादक्षिमण्डलस्यापि शुद्धस्थानत्वात्तत्र ब्रह्मोपासनं युक्तमित्यर्थः ॥ १४ ॥

सुखविशिष्टाभिधानादेव च ॥ १५ ॥

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति पूर्ववाक्ये सुखस्वरूपस्य ब्रह्मणः अभिधानात् अक्षिमण्डलमध्यवर्त्यपि ब्रह्मैवेत्यर्थः ॥ १५ ॥

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

श्रुतोपनिषत्कानां श्रुतवेदान्तशास्त्राणामुपासकानां या गतिः देवयानमार्गः, तस्याः 'तेऽर्चिषमभिसंभवन्ति' इत्युत्तरवाक्ये अभिधानाच्च अक्षिमध्यवर्ती परमात्मेत्यर्थः ॥ १६ ॥

सिद्धान्तमुक्त्वा पूर्वपक्षं दूषयति—

अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

अनवस्थितेः प्रतिबिम्बस्य सर्वथा अक्षिण्यनवस्थितत्वात् असंभवाच्च अमृतत्वादिधर्माणां प्रतिबिम्बे असंभवाच्च नेतरः प्रतिबिम्बो न भवतीत्यर्थः ॥ १७ ॥

अन्तर्याम्यधिकरणम् ॥ ६ ॥

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

'यः पृथिव्यां तिष्ठन्' इत्यादिश्रुतौ अधिदैवादिषु पृथिव्यादिषु य अन्तर्यामी उक्तः, स परमात्मा । कुतः ? तद्धर्मव्यपदेशात् 'एष त आत्मान्तर्याम्यमृतः' इत्युत्तरवाक्ये ब्रह्मधर्मव्यपदेशादित्यर्थः ॥ १८ ॥

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

कपिलस्मृतिप्रतिपाद्यं स्मार्तं प्रधानमन्तर्यामी न भवति । कुतः ? अतद्धर्माभिलापात् त्रिगुणत्वादीनां प्रधानधर्माणामभिलापाभावादित्यर्थः ॥ १९ ॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

शारीरः जीवोऽपि अन्तर्यामी न भवति । कुतः ? उभयेऽपि काण्वा माध्यन्दिनाश्च एनं जीवं भेदेन अन्तर्यामिभिन्नतया अधीयते अध्ययनं कुर्वन्तीत्यर्थः । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति श्रुतौ जीवस्य परमात्मनियम्यत्वप्रतिपादनात् जीवानां सर्वेषां नियन्ता परमात्मैव, न जीव इत्यर्थः ॥ २० ॥

अदृश्यत्वाधिकरणम् ॥ ६ ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

'यत्तदद्रश्यम्' इत्यादिश्रुतौ यः अदृश्यत्वादिगुणकः उक्तः, स परमात्मा । कुतः ? धर्मोक्तेः धर्माणां सर्वज्ञत्वादीनामुक्तत्वादित्यर्थः ॥ २१ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

'दिव्यो ह्यमूर्तः पुरुषः' इति श्रुतौ अप्राणत्वादिविशेषणात् 'अक्षरात् परतः परः' इति अक्षरात् प्रधानात् भेदव्यपदेशाच्च अदृश्यत्वादिगुणकः परमात्मैव, नेतरौ प्रधानजीवौ न भवत इत्यर्थः ॥ २२ ॥

## रूपोपन्यासाच्च ॥ २३ ॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इत्यत्र श्रुतौ मूर्धादिरूपोपन्यासाच्च परमात्मैवेत्यर्थः ॥ २३ ॥

वैश्वानराधिकरणम् ॥ ७ ॥

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

वैश्वानरः परमात्मा । साधारणशब्दानां मध्ये विशेषशब्दात् 'को न आत्मा किं ब्रह्म' इति श्रुतौ ब्रह्मशब्दप्रयोगादित्यर्थः ॥ २४ ॥

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

'यस्याग्निरास्यम्' इत्यादिश्रुतौ प्रतिपाद्यमानं विश्वरूपत्वमनुमानं परब्रह्मलिङ्गमित्यर्थः ॥ २५ ॥

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

वैश्वानरशब्दादिभ्यः अन्तःप्रतिष्ठानाच्च 'स यो हैतमग्निं वैश्वानरं पुरुषं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति श्रुतौ शरीरान्तःप्रतिष्ठितत्वव्यपदेशाच्च वैश्वानरः परमात्मा न भवति, किं तु जाठराग्निरिति चेत्, न । तथा जाठराग्न्यवच्छिन्नब्रह्मणि दृष्ट्युपदेशात् ध्यानोपदेशात्, असंभवात्

द्युमूर्धत्वादीना केवलजाठराग्नौ असंभवात् । पुरुषमपि चैनमधीयते वाजसनेयिनः एनं वैश्वानरं पुरुषमधीयते पुरुषं वदन्ति 'स यो हैतमग्निम्' इति श्रुतावेवेत्यर्थः ॥ २६ ॥

अत एव न देवता भूतं च ॥ २७ ॥

अत एव द्युमूर्धत्वादिधर्माणामसंभवादेव भूतं, बाह्याग्निर्देवता अग्न्यभिमानिनी देवता च वैश्वानरशब्दार्थो न भवति, किं तु जाठराग्न्यवच्छिन्नः परमात्मैव वैश्वानरशब्दार्थ इत्यर्थः ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

साक्षात् जाठराग्न्यवच्छिन्नात्मलक्षणां विनैव जाठराग्न्यनवच्छिन्ने केवलब्रह्मण्यपि वैश्वानरशब्दस्य अविरोधं विरोधाभावं जैमिनिर्मन्यते । विश्वश्चासौ नरश्च विश्वनरः, विश्वाभिन्नः नरः परमात्मा । विश्वनर एव वैश्वानरः । स्वार्थे तद्धितप्रत्ययः राक्षसवायसादिशब्दवत् । तथा च प्रपञ्चाभिन्ने ब्रह्मणि वैश्वानरशब्दस्य योगव्युत्पत्त्या प्रवृत्तिसंभवात् वैश्वानरशब्देन व्यापकः परमात्मैवोच्यत इति भावः । अग्निशब्दोऽपि अग्रं नयतीति व्युत्पत्त्या श्रेष्ठत्ववाचक इति भावः ॥ २८ ॥

व्यापकस्य परमात्मनः प्रादेशमात्रपरिमाणवत्त्वमसङ्गतमित्याशङ्क्याह—

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

व्यापकोऽपि परमात्मा प्रादेशमात्रं शरीरं धृत्वा उपासकानां प्रत्यायको भवतीत्यर्थः ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

व्यापकस्य परमात्मनो ध्यातुमशक्यत्वात् प्रादेशमात्रशरीरविशिष्टतया ध्यातव्य इत्यर्थः ॥ ३० ॥

संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

संपत्तेः मूर्धपादाद्यवयवसंपन्नत्वात् प्रादेशमात्रत्वमित्यर्थः ॥ ३१ ॥

आमनन्ति चैनमस्मिन् ॥ ३२ ॥

एनं परमात्मानम् अस्मिन् भ्रूमध्ये जाबाला उपास्यमामनन्ति । अतः प्रादेशमात्रपरिमाणवत्त्वमुपपन्नमित्यर्थः ॥ ३२ ॥

इति ब्रह्मसूत्रवृत्तौ प्रथमाध्यायस्य द्वितीयः पादः ।

---

## प्रथमाध्यायस्य तृतीयः पादः ।

द्युभ्वाद्यधिकरणम् ॥ १ ॥

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

'यस्मिन् द्यौः पृथिवी' इति श्रुतौ द्युभ्वादिप्रपञ्चस्य आयतनम् अधिष्ठानं ब्रह्मैव । कुतः ? स्वशब्दात् आत्मशब्दप्रयोगादित्यर्थः ॥ १ ॥

### मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

'यदा सर्वे प्रमुच्यन्ते' इति श्रुतौ 'तथा विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुतौ च मुक्तैः रागद्वेषादिविनिर्मुक्तैः उपसृप्यत्वव्यपदेशात् प्राप्यत्वव्यपदेशाच्च द्युभ्वाद्यायतनं ब्रह्मैवेत्यर्थः ॥ २ ॥

### नानुमानमतच्छब्दात् ॥३॥

अनुमानं प्रधानं द्युभ्वाद्यायतनं न भवति । अतच्छब्दात् प्रधानप्रतिपादकत्रिगुणादिशब्दाभावादित्यर्थः ॥ ३ ॥

### प्राणभृच्च ॥ ४ ॥

प्राणभृज्जीवोऽपि द्युभ्वाद्यायतनं न भवति । जीवस्य प्रपञ्चाधिष्ठानत्वासंभवादित्यर्थः ॥ ४ ॥

### भेदव्यपदेशाच्च ॥ ५ ॥

'तमेवैकं जानथ' इति श्रुतौ ज्ञातृज्ञेयभावव्यपदेशादित्यर्थः ॥ ५ ॥

### प्रकरणात् ॥ ६ ॥

'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्' इति ब्रह्मप्रकरणादित्यर्थः ॥ ६ ॥

### स्थित्यदनाभ्यां च ॥ ७ ॥

'द्वा सुपर्णा' इति मन्त्रे ब्रह्मणः साक्षितया अवस्थानं, जीवस्य कर्मफलभोक्तृत्वं च श्रूयते । अतः द्युभ्वाद्यायतनं ब्रह्मेत्यर्थः ॥ ७ ॥

भूमाधिकरणम् ॥ २ ॥

### भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

'भूमा त्वेव विजिज्ञासितव्यो, भूमानं भगवो विजिज्ञासे' इत्यादिश्रुतौ भूमा परमात्मा । कुतः ? संप्रसादात् जीवात् अधि उपरि उपदेशादित्यर्थः ॥ ८ ॥

धर्मोपपत्तेश्च ॥ ९ ॥

सुखरूपत्वामृतत्वादिधर्मोपपत्तेश्च भूमा ब्रह्मैव, न भूताकाश इत्यर्थः ९

अक्षराधिकरणम् ॥ ३ ॥

अक्षरमम्बरान्तधृतेः ॥ १० ॥

'कस्मिन् खल्वाकाश ओतः प्रोतः' इत्यादिश्रुतौ अक्षरं ब्रह्म । कुतः ? अम्बरान्तधृतेः अम्बरान्तस्य प्रपञ्चस्य धृतेः धारणादित्यर्थः । ओंकारस्य तु प्रपञ्चधारकत्वं न संभवतीत्यर्थः ॥ १० ॥

सा च प्रशासनात् ॥ ११ ॥

सा च परा देवता । कुतः ? प्रशासनात् 'एतस्य वा अक्षरस्य प्रशासन' इति श्रुतौ आज्ञाग्रहणात् । न च जडस्य ओंकारस्याज्ञा संभवतीत्यर्थः ॥ ११ ॥

तर्हि अक्षरं प्रधानमस्त्वित्याशङ्क्याह—

अन्यभावव्यावृत्तेश्च ॥ १२ ॥

प्रधानभावव्यावृत्तेश्च प्रधानम् अक्षरं न भवति । जडस्य प्रधानस्य प्रशासनासंभवादित्यर्थः ॥ १२ ॥

ईक्षतिकर्माधिकरणम् ॥ ४ ॥

ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

'यः पुनरेतम्' इत्यादिश्रुतौ 'परं पुरुषमभिध्यायीत' इत्यत्र परः परमात्मैव, न हिरण्यगर्भः । कुतः ? 'पुरुषमीक्षते' इति वाक्यशेषे साक्षात्कारविषयत्वव्यपदेशादित्यर्थः ॥ १३ ॥

दहराधिकरणम् ॥ ५ ॥

दहर उत्तरेभ्यः ॥ १४ ॥

'अथ यदिदमस्मिन्' इति श्रुतौ दहराकाशः परमात्मैव, न भूताकाशः । कुतः ? उत्तरेभ्यः 'एष आत्मा अपहतपाप्मा' इति श्रुतौ सत्यसंकल्पादिलिङ्गानां विद्यमानत्वादित्यर्थः ॥ १४ ॥

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

'इमाः प्रजा अहरहर्गच्छन्त्यः' इति श्रुतौ सर्वेषां जीवानां सुषुप्तिकाले दहराकाशे लयश्रवणात् ब्रह्मैव लोको ब्रह्मलोक इति योगव्युत्पत्त्या ब्रह्मलोकशब्दस्य परब्रह्मवाचकत्वाच्च दहराकाशः परमात्मेत्यर्थः । तथा हि

दृष्टं लिङ्गं च 'सता सोम्य तदा संपन्नो भवति' इति श्रुतौ सर्वेषां जीवानां सुषुप्तिकाले ब्रह्मणि अवस्थानं दृष्टम् । तदपि लिङ्गं ज्ञापकमित्यर्थः ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

'एष सेतुर्विधरणः' इति श्रुतौ धृतिरूपमहिम्नः अस्मिन् वाक्ये अस्य दहराकाशस्य उपलब्धेश्च दहराकाशः परमात्मैव, न भूताकाशः । जडस्य वर्णाश्रममर्यादाविधारकत्वासंभवादित्यर्थः ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

'यदेष आकाश आनन्दो न स्यात्' इत्यादिश्रुतौ आकाशशब्दस्य ब्रह्मणि प्रसिद्धत्वादित्यर्थः ॥ १७ ॥

## इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १८ ॥

इतरपरामर्शात् 'अथ यदिदमस्मिन् ब्रह्मपुरे' इति श्रुतौ ब्रह्मशब्देन इतरस्य जीवस्य लक्षणया परामर्शात् प्रतिपादनात् दहराकाशोऽपि जीव इति चेत्, न । असंभवात् सत्यसंकल्पादिधर्माणां जीवे असंभवादित्यर्थः ॥ १८ ॥

### उत्तराधिकरणम् ॥ ६ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तराचेत् 'स एष संप्रसादः' इत्युत्तरवाक्ये संप्रसादशब्देन जीवप्रतिपादनात् दहराकाशशब्देनापि जीव एव प्रतिपाद्यत इति चेत्, न । आविर्भूतस्वरूपः मुक्तजीवः प्रतिपाद्यते । मुक्तजीवश्च परमात्मैवेत्यर्थः ॥ १९ ॥

मुक्तजीवस्य ब्रह्मत्वेन जीवत्वाभावात् संप्रसादशब्दप्रयोगोऽनुपपन्न इत्याशङ्कयाह—

## अन्यार्थश्च परामर्शः ॥ २० ॥

जीवपरामर्शः अन्यार्थः ब्रह्माभेदप्रतिपादनार्थ इत्यर्थः ॥ २० ॥

## अल्पश्रुतिरिति चेत्तदुक्तम् ॥ २१ ॥

दहरशब्देन अल्पपरिमाणवत्त्वश्रवणात् व्यापकस्य ब्रह्मणः अल्पपरिमाणासंभवाद्दहराकाशो जीव इति चेत्, तदुक्तम् उपासनार्थम् अल्पपरिमाणमुक्तमिति पूर्वमेवोक्तमित्यर्थः ॥ २१ ॥

अनुकृत्यधिकरणम् ॥ ७ ॥

अनुकृतेस्तस्य च ॥ २२ ॥

'न तत्र सूर्यो भाति न चन्द्रतारकम्' इति श्रुतौ तस्य सूर्यचन्द्रादिप्रपञ्चस्य अनुकृतेः परमात्मानमनुसृत्य भानात् 'तस्य भासा सर्वमिदं विभाति' इति श्रुतौ तच्छब्देन परमात्मैवोच्यते न सूर्यचन्द्रादिव्यतिरिक्तं लौकिकं तेज इत्यर्थः ॥ २२ ॥

अपि च स्मर्यते ॥ २३ ॥

'न तद्भासयते सूर्यः' इति स्मृतौ च सूर्यचन्द्राद्यप्रकाश्यत्वं परमात्मनः प्रतिपाद्यत इत्यर्थः ॥ २३ ॥

प्रमिताधिकरणम् ॥ ८ ॥

शब्दादेव प्रमितः ॥ २४ ॥

'ईशानो भूतभव्यस्य' इति श्रुतौ ईशानशब्दप्रयोगादेव अङ्गुष्ठमात्रः परमात्मा प्रमितः निश्चितः, न जीव इत्यर्थः ॥ २४ ॥

व्यापकस्य ब्रह्मणः अङ्गुष्ठपरिमाणवत्त्वमसंगतमित्याशङ्क्याह—

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

हृत्पुण्डरीकस्यालपत्वात्पुण्डरीकावच्छिन्नस्य ब्रह्मणः अङ्गुष्ठपरिमाणत्वमुपपन्नमित्यर्थः । कुतः ? मनुष्याधिकारत्वात् शास्त्रस्य, उपासनाकाण्डस्य ज्ञानकाण्डस्य च मनुष्याधिकारत्वात्, मनुष्याणां च मन्दबुद्धितया व्यापकब्रह्मोपासनायामधिकारासंभवादित्यर्थः ॥ २५ ॥

देवताधिकरणम् ॥ ९ ॥

मनुष्याधिकारत्वकथनात् देवानामधिकारो नास्तीति शङ्का निराकरोति—

तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

'तद्यो यो देवानाम्' इत्यादिश्रुतेः तदुपरि तेषां मनुष्याणामुपरि स्वर्गलोके स्थितानां देवानामधिकारोऽस्तीति बादरायणो मन्यते । कुतः ? संभवात् तेषामपि ब्रह्मलोककामनावत्त्वेन मुमुक्षुत्वेन च ब्रह्मविद्यायामधिकारसंभवादित्यर्थः । ननु, चतुर्थ्यन्तशब्दानामेव देवतात्वात् कथं ब्रह्मविद्यायामधिकार इति चेत्, न । चतुर्थ्यन्तशब्दवाच्यानां

विग्रहवतीनां देवतानां पुराणादिषु प्रतिपादितत्वेन ब्रह्मविद्यायामधिकार-संभवादित्यर्थः ॥ २६ ॥

विग्रहवद्देवताङ्गीकारे बाधकमाशङ्क्य निराकरोति—

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

एकस्मिन् दिने क्रियमाणेषु अनेकेषु यागेषु एकस्येन्द्रस्य गमनासंभवात् कर्मानुष्ठानविरोध इति चेत्, न । अनेकप्रतिपत्तेः योगिनामिव देवतानामपि योगप्रभावात् अनेकशरीरधारणस्य पुराणादिषु प्रतिपादितत्वादित्यर्थः ॥ २७ ॥

इन्द्रादिदेवानां विग्रहवत्त्वाङ्गीकारे विग्रहाणामनित्यत्वात् तत्प्रतिपादकवेदस्याप्यनित्यत्वं स्यादिति शङ्कते—

शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

शब्दे वेदे नित्यत्वविरोध इति चेत्, न । अतः प्रभवात् अतः वेदात् देवादिप्रपञ्चस्य प्रभवादुत्पत्तेरित्यर्थः । प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः ॥ २८ ॥

अत एव च नित्यत्वम् ॥ २९ ॥

अत एव देवतादिप्रपञ्चं प्रति कारणत्वादेव वेदस्य नित्यत्वमित्यर्थः ॥२९

इन्द्राणां प्रतिकल्पं विभिन्ननामरूपवत्त्वाद्वेदस्य कथं तत्प्रतिपादकत्वमित्याशङ्कां परिहरति—

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

समाननामरूपत्वात् सर्वेषामिन्द्राणां सर्वेषु कल्पेषु समाननामरूपत्वात् आवृत्तावपि इन्द्रपरंपरायामङ्गीक्रियमाणायामपि अविरोधः वेदस्य इन्द्रप्रतिपादकत्वविरोधो नास्ति । कुतः ? दर्शनात् श्रुतेः स्मृतेश्चेत्यर्थः । एवमग्निवायुवरुणादिषु द्रष्टव्यम् ॥ ३० ॥

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

'असौ वा आदित्यो देवमधु' इत्यादिश्रुतौ मध्वादिषु आदित्यमण्डलप्राप्तिफलकेषु मधुविद्यादिषु देवानामधिकारासंभवात् ब्रह्मविद्यायामप्यनधिकारं जैमिनिर्मन्यत इत्यर्थः ॥ ३१ ॥

ज्योतिषि भावाच्च ॥ ३२ ॥

नक्षत्रमण्डलेष्वेव लोके इन्द्रादिशब्दप्रयोगान्मण्डलानामचेतनत्वाच्च नाधिकार इत्यर्थः ॥ ३२ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

मधुविद्यादिषु अधिकाराभावेऽपि ब्रह्मविद्यायामधिकारं बादरायणो मन्यते । अस्ति हि मण्डलाभिमानिनी मण्डलातिरिक्ता विग्रहवती नानादेवता अस्ति, पुराणेषु प्रतिपाद्यत इत्यर्थः ॥ ३३ ॥

अपशूद्राधिकरणम् ॥ १० ॥

'अहहारे त्वा शूद्र तवैव सह गोभिरस्तु' इति श्रुतौ शूद्रशब्दप्रयोगात् शूद्राणामपि ब्रह्मविद्यायामधिकारोऽस्तीति शङ्कां परिहरति—

शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

अस्य जानश्रुतेः तदनादरश्रवणात्तेषां हंसानाम् अनादरवचनश्रवणात् शुगुत्पन्ना । तदाद्रवणात् तया शुचा रैक्वसमीपं प्रति आगमनात् सूच्यते शूद्रशब्देन जानश्रुतिः प्रतिपाद्यत इत्यर्थः ॥ ३४ ॥

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

उत्तरत्र उत्तरवाक्ये चैत्ररथाख्येन क्षत्रियेण सहपाठात् लिङ्गात् जानश्रुतेरपि क्षत्रियत्वगतेः क्षत्रियत्वनिश्चयादित्यर्थः ॥ ३५ ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

ब्रह्मक्षत्रियवैश्यानामेव श्रुतिषु उपनयनाध्ययनादिसंस्कारविधानात् शूद्राणां च तदभावाभिलापाच्च शूद्रस्य न ब्रह्मविद्यायामधिकार इत्यर्थः॥३६॥

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

शूद्रत्वाभावनिश्चये सति ज्ञानिनां ब्रह्मविद्योपदेशे प्रवृत्तिदर्शनाच्च न शूद्रस्याधिकार इत्यर्थः ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥

वेदश्रवणवेदाध्ययनवेदार्थज्ञानप्रतिषेधाच्च शूद्राणां न ब्रह्मविद्याधिकार इत्यर्थः ॥ ३८ ॥

कम्पनाधिकरणम् ॥ ११ ॥

कम्पनात् ॥ ३९ ॥

'यदिदं किं च जगत्सर्वम्' इति वाक्ये प्राणशब्देन ब्रह्मोच्यते, न प्राणवायुः । कुतः ? सर्वस्य प्रपञ्चस्य ब्रह्माज्ञया कम्पनादित्यर्थः ॥३९॥

ज्योतिर्दर्शनाधिकरणम् ॥ १२ ॥

## ज्योतिर्दर्शनात् ॥ ४० ॥

'एष संप्रसादोऽस्माच्छरीरात्' इति श्रुतौ ज्योतिश्शब्देन ब्रह्मोच्यते, न तु सूर्यादिज्योतिः । कुतः ? दर्शनात् 'तं देवा ज्योतिषां ज्योतिः' इति श्रुतौ ज्योतिश्शब्दस्य ब्रह्मणि प्रयोगदर्शनादित्यर्थः ॥ ४० ॥

अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १३ ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

'आकाशो ह वै नामरूपयोर्निर्वहिता' इति श्रुतौ आकाशः परमात्मा, न तु भूताकाशः । कुतः ? अर्थानां पदार्थानामन्तरत्वव्यपदेशात् नामरूपात्मकसकलप्रपञ्चान्तर्यामित्वव्यपदेशादित्यर्थः ॥ ४१ ॥

सुषुप्त्युत्क्रान्त्यधिकरणम् ॥ १४ ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

'कतम आत्मेति योऽयं विज्ञानमयः' इति श्रुतौ मुक्तजीवः प्रतिपाद्यते, न तु बद्धजीवः । कुतः ? सुषुप्त्यवस्थायाम् उत्क्रान्त्यवस्थायां च जीवब्रह्माभेदस्य द्विवारं प्रतिपादितत्वादित्यर्थः ॥ ४२ ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

'सर्वस्य वशी सर्वस्येशानः' इत्युत्तरश्रुतौ ईशानादिशब्दप्रयोगादपि मुक्तजीवपरमिदं वाक्यमित्यर्थः ॥ ४३ ॥

इति ब्रह्मसूत्रवृत्तौ प्रथमाध्यायस्य तृतीयः पादः ।

---

# प्रथमाध्यायस्य चतुर्थः पादः ।

आनुमानिकाधिकरणम् ॥ १ ॥

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिश्रुतौ एकेषां शाखायामानुमानिकमपि प्रधानमपि अव्यक्तशब्देन प्रतिपाद्यत इति चेत्, न । शरीरमेव रूपकविन्यस्तं रथत्वेन निरूपितं, तस्य गृहीतेः ग्रहणादित्यर्थः ॥ १ ॥

स्थूलशरीरस्य व्यक्तत्वात् कथमव्यक्तशब्देन ग्रहणमित्याशङ्क्याह—

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

सूक्ष्मं लिङ्गशरीरमव्यक्तशब्देन गृह्यते । कुतः ? तदर्हत्वात् लिङ्गशरीरस्य अव्यक्तशब्दार्थत्वादित्यर्थः ॥ २ ॥

तदधीनत्वादर्थवत् ॥ ३ ॥

तदधीनत्वात् स्थूलशरीरस्य लिङ्गशरीराधीनत्वात् स्थूलशरीरमपि अर्थवत् अव्यक्तशब्देन अर्थाद्गृह्यत इत्यर्थः ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥

ज्ञेयत्वस्य अवचनात् अनुक्तेश्च न प्रधानमव्यक्तशब्दवाच्यमित्यर्थः॥४॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

वदतीति चेन्न 'अशब्दमस्पर्शम्' इति वाक्यं प्रधानस्य ज्ञेयत्वं वदतीति चेन्न, प्राज्ञः परमात्मा अस्मिन्वाक्ये प्रतिपाद्यते । कुतः ? प्रकरणात् ब्रह्मप्रकरणादित्यर्थः ॥ ५ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

'स त्वमग्निम्' इत्यादिश्रुतेः 'तं दुर्दर्शं गुहाहितम्' इत्यादिश्रुतेश्च 'येयं प्रेते विचिकित्सा' इति श्रुतेश्च त्रयाणामग्निजीवपरमात्मनामुपन्यासः प्रतिवचनं, त्रयाणामेव प्रश्नश्च । प्रधानस्य प्रश्नप्रतिवचने न स्त इत्यर्थः ॥ ६ ॥

महद्वच्च ॥ ७ ॥

महच्छब्दस्य जीववाचकत्ववदव्यक्तशब्दस्यापि शरीरवाचकत्वमित्यर्थः।

चमसाधिकरणम् ॥ २ ॥

चमसवदविशेषात् ॥ ८ ॥

चमसवत् 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति वाक्यवत् अविशेषात् संदिग्धार्थकत्वात् 'अजामेकाम्' इति वाक्यं न प्रधाननिश्चायकमित्यर्थः ॥ ८ ॥

इदं तच्छरीरमिति वाक्यं यथा चमसवाक्यस्यार्थस्य निश्चायकम्, एवं 'यदग्ने रोहितं रूपम्' इति छान्दोग्यवाक्यमजावाक्यस्यार्थनिश्चायकमित्याह—

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥

'यदग्ने रोहितं रूपम्' इत्यादिश्रुतौ ज्योतिरुपक्रमा तेजोऽबन्नात्मिका अवान्तरप्रकृतिः अजाशब्देन प्रतिपाद्यते । एके शाखिनः तथा लोहितशुक्लकृष्णरूपवत्त्वं तेजोऽबन्नानामधीयत इत्यर्थः ॥ ९ ॥

अजाशब्दस्य जन्मरहितवस्तुवाचकत्वात् तेजोऽबन्नात्मिकाया अवान्तरप्रकृतेर्जन्मवत्त्वात् कथमजाशब्देन तेजोऽबन्नग्रहणमित्याशङ्क्याह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

कल्पनोपदेशात् सादृश्योपदेशात् अविरोधः अजाशब्दस्य विरोधो नास्तीत्यर्थः । मध्वादिवत् 'असौ वा आदित्यो देवमधु' इत्यत्र यथा आदित्यस्य मधुसादृश्यमुच्यते, एवमवान्तरप्रकृतेरपि छागासादृश्यमुच्यते । छागाया अपि कस्याश्चिल्लोहितशुक्लकृष्णरूपवत्त्वात् स्वसदृशप्रजावत्त्वाच्चेत्यर्थः ॥ १० ॥

संख्योपसंग्रहाधिकरणम् ॥ ३ ॥

## न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

संख्योपसंग्रहात् पञ्चविंशतिसंख्याश्रवणात् पञ्चविंशतितत्त्वानि श्रुतिप्रतिपाद्यानीति चेत्, न । कुतः ? नानाभावात् लोके पञ्चविंशतिसंख्याविशिष्टानां पदार्थानां बहूनां सत्त्वात् अतिरेकाच्च आकाशस्य पञ्चविंशतिसङ्ख्याबहिर्भूतत्वेन षड्विंशतितत्त्वप्रसङ्गाच्चेत्यर्थः ॥ ११ ॥

'यस्मिन् पञ्च पञ्चजनाः' इति वाक्यार्थविशेषनिर्णायकं 'प्राणस्य प्राणम्' इति वाक्यशेषमाह—

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

'स्युः पुमांसः पञ्चजनाः' इति निघण्टुवचनेन पञ्चजनशब्दस्य पुरुषवाचकत्वात् पुरुषसंबन्धिनः 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इति वाक्यस्थाः लक्षणया पञ्चजनशब्देन प्रतिपाद्यन्त इत्यर्थः ॥ १२ ॥

ज्योतिषाधिकरणम् ॥ ४ ॥

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वादीनाम् अन्ने अन्नशब्दे असति सति ज्योतिषा सह पञ्चप्राणादयो ग्रहीतव्या इत्यर्थः । 'तं देवा ज्योतिषां ज्योतिः' इति श्रुतौ सूर्यादिज्योतिषः कथितत्वादित्यर्थः ॥ १३ ॥

कारणत्वाधिकरणम् ॥ ५ ॥

'आत्मन आकाशः संभूतः' इति श्रुतौ आकाशमात्रस्यैव ब्रह्मजन्यत्व-प्रतिपादनात् ब्रह्मणः पञ्चमहाभूतकारणत्वमनुपपन्नमित्याशङ्क्याह—

**कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १४ ॥**

'एतस्माज्जायते प्राणः' इत्यादिश्रुतिषु आकाशादिषु पञ्चमहाभूतेषु ब्रह्मणः साक्षात्कारणत्वेन प्रतिपादितत्वात् 'आकाशाद्वायुः' इत्यत्रापि आकाशादिशब्दैः आकाशाद्यवच्छिन्नब्रह्मण एव कारणत्वमुच्यत इति न विरोध इत्यर्थः ॥ १४ ॥

**समाकर्षात् ॥ १५ ॥**

आकाशादिशब्दैरपि आकाशावच्छिन्नब्रह्मण एव लक्षणया प्रतिपादनात् न विरोध इत्यर्थः ॥ १५ ॥

जगद्वाचित्वाधिकरणम् ॥ ६ ॥

**जगद्वाचित्वात् ॥ १६ ॥**

'यो वै बालाके' इति श्रुतौ एतच्छब्दस्य जगद्वाचकत्वात् जगत्कारणत्वेन ब्रह्मैवास्मिन् वाक्ये प्रतिपाद्यते, न हिरण्यगर्भ इत्यर्थः॥१६॥

**जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥**

'तद्यथा स्वैः श्रेष्ठी भुङ्क्ते' इत्यादिश्रुतौ जीवमुख्यप्राणलिङ्गानामपि विद्यमानत्वात् न ब्रह्मोपासनामात्रपरमिति चेत् तद्व्याख्यातं जीवमुख्यप्राणब्रह्मविषयकमुपासनात्रयं भविष्यतीति 'प्राणस्तथानुगमात्' इत्यधिकरणे व्याख्यातमित्यर्थः ॥ १७ ॥

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥**

अन्यार्थं ब्रह्मप्रतिपादनार्थं स्थूलारुन्धतीन्यायेन प्रश्नप्रतिवचनाभ्या जीवमुख्यप्राणौ प्रतिपादितावपीति जैमिनिः, अन्ये वृद्धाश्च वदन्तीत्यर्थः ॥ १८ ॥

वाक्यान्वयाधिकरणम् ॥ ७ ॥

**वाक्यान्वयात् ॥ १९ ॥**

'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितं भवति' इति आत्मज्ञानेन सर्वविज्ञानप्रतिपादकवाक्यस्य ब्रह्मण्येव अन्वयादुपपन्नत्वात् 'आत्मा वा अरे द्रष्टव्यः' इति वाक्यं ब्रह्मपरमेव, न जीवपरमित्यर्थः ॥ १९ ॥

जीवानामनादित्वेन ब्रह्मजन्यत्वाभावात् ब्रह्मज्ञानेन जीवज्ञानमनुपपन्नमित्याशङ्क्य मतत्रयमाह—

**प्रतिज्ञा सिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥**

प्रतिज्ञा ब्रह्मज्ञानेन सर्वविज्ञानप्रतिज्ञैव सिद्धेः जीवानामुत्पत्तेर्लिङ्गं ज्ञापकमित्यर्थः । जीवानामपि पञ्चमहाभूतवत् ब्रह्मजन्यत्वात् कार्यकारणयोर्भेदाभेदाङ्गीकारात् ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिपादकवाक्यमुपपन्नमिति भेदाभेदवादी आश्मरथ्यो मन्यत इत्यर्थः ॥ २० ॥

संसारदशायां जीवब्रह्मणोर्भेदः, मोक्षदशायामभेदः इति कालभेदेन भेदाभेदवादिनो मतमाह—

**उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥**

उत्क्रमिष्यतः देहाद्यभिमानं त्यजतः मुक्तजीवस्य एवंभावात् ब्रह्माभिन्नत्वात् ब्रह्मज्ञानेन सर्वविज्ञानम् उपपद्यत इति औडुलोमिर्मन्यत इत्यर्थः ॥ २१ ॥

सर्वदा अत्यन्ताभेदवादिमतमाह—

**अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥**

अवस्थितेः सर्वदा बिम्बप्रतिबिम्बभावेन जीवब्रह्मणोरत्यन्ताभेदावस्थानात् भेदस्य च मिथ्यात्वात् ब्रह्मज्ञानेन सर्वविज्ञानमुपपन्नमिति मुख्यसिद्धान्ती काशकृत्स्नो मन्यत इत्यर्थः ॥ २२ ॥

प्रकृत्यधिकरणम् ॥ ८ ॥

परमाण्वादयः प्रपञ्चस्य उपादानकारणम्, ईश्वरस्तु निमित्तकारणमात्रमिति नैयायिकादयो वदन्ति । तन्मतं निराकरोति—

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥**

ब्रह्म प्रकृतिः उपादानकारणं, चकारान्निमित्तकारणं च । कुतः ? प्रतिज्ञादृष्टान्तयोरनुपरोधात् प्रामाण्यादित्यर्थः । 'उत तमादेशमप्राक्ष्यः' इति प्रतिज्ञाश्रुतिः । 'मृत्तिकेत्येव सत्यम्' इति दृष्टान्तश्रुतिः । उभयप्रामाण्यनिर्वाहार्थं निमित्तत्वमुपादानत्वं च ब्रह्मणो वक्तव्यमित्यर्थः॥२३॥

**अभिध्योपदेशाच्च ॥ २४ ॥**

'सोऽकामयत' इति श्रुतौ इच्छोपदेशात् ब्रह्मणः स्वविषयकसंकल्पोपदेशादुपादानकारणत्वं निमित्तकारणत्वं च वक्तव्यमित्यर्थः ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ २५ ॥

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतौ ब्रह्मण्येव सृष्टिप्रलयाम्नानात् निमित्तत्वमुपादानत्वं च वक्तव्यमित्यर्थः ॥ २५ ॥

आत्मकृतेः परिणामात् ॥ २६ ॥

'तदात्मानं स्वयमकुरुत' इत्यादिश्रुतौ आत्मकृतेः परमात्मविषयकप्रयत्नात् प्रपञ्चस्य परिणामात् निमित्तकारणत्वमुपादानकारणत्वं च वक्तव्यमित्यर्थः ॥ २६ ॥

योनिश्च हि गीयते ॥ २७ ॥

'यद्भूतयोनिं परिपश्यन्ति धीराः' इति श्रुतौ योनिशब्दश्रवणादुपादानकारणत्वमपि ब्रह्मणो वक्तव्यमित्यर्थः ॥ २७ ॥

एतेन सर्वे व्याख्याता व्याख्याताः[1] ॥ २८ ॥

एतेन प्रपञ्चस्याभिन्ननिमित्तोपादनकत्वव्यवस्थापनेन सर्वे भेदवादा व्याख्याताः निराकृता इत्यर्थः ॥ २८ ॥

इति ब्रह्मसूत्रवृत्तौ प्रथमाध्यायस्य चतुर्थः पादः ॥

---

अध्यायश्च संपूर्णः ॥

---

१ अध्यायसमाप्तिद्योतनाय पुनरुक्तिः ।

श्रीमच्छंकरभगवत्पादशिष्यप्रणीता

# ब्रह्मसूत्रवृत्तिः ।

## ( अद्वैतमञ्जरी )

## द्वितीयाध्यायस्य प्रथमः पादः ।

स्मृत्यधिकरणम् ॥ १ ॥

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

प्रधानस्य जगत्कारणत्वानङ्गीकारे स्मृत्यनवकाशदोषप्रसङ्गः साङ्ख्यादिस्मृतीनामप्रामाण्यदोषप्रसङ्ग इति चेत्, न । ब्रह्मणो जगत्कारणत्वानङ्गीकारे अन्यस्मृतीनां मन्वादिस्मृतीनामप्रामाण्यदोषप्रसङ्गात् । न च विनिगमकाभावः । श्रुतिमूलकत्वेन मन्वादिस्मृतीनां प्रबलत्वात्, साङ्ख्यादिस्मृतीनां तु श्रुतिविरुद्धार्थत्वेन दुर्बलत्वादप्रामाण्यमित्यर्थः ॥ १ ॥

अस्तु वा प्रधानं जगत्कारणम् । वेदान्तिभिरपि मायाया जगत्कारणत्वाङ्गीकारात् । स्वातन्त्र्यास्वातन्त्र्यमात्र एव वादिनां विवादात् । महदहङ्कारपञ्चतन्मात्रादिकं तु अप्रामाणिकमित्याह—

**इतरेषां चानुपलब्धेः ॥ २ ॥**

इतरेषां महदहङ्कारादीनामनुपलब्धेः श्रुतौ अप्रतिपादितत्वादप्रामाणिकत्वमित्यर्थः ॥ २ ॥

योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

ईश्वराप्रेरितस्य जडस्य प्रधानस्य स्वातन्त्र्येण जगदुपादानकारणत्ववादिनां साङ्ख्यानां मतं निराकृत्य ईश्वरप्रेरितस्य जडस्य प्रधानस्य जगदुपादानकारणत्ववादिनां योगिनां मतं निराकरोति—

**एतेन योगः प्रत्युक्तः ॥ ३ ॥**

एतेन सांख्यस्मृतिनिराकरणेन योगस्मृतिरपि प्रत्युक्ता निरस्तेत्यर्थः ॥ ३ ॥

नविलक्षणत्वाधिकरणम् ॥ ३ ॥

पूर्वपक्षः—

न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

अस्य ब्रह्मणः विलक्षणत्वात् ज्ञानात्मकतया जडप्रपञ्चविलक्षणत्वात् जगत्कारणत्वं न संभवति। तथात्वं च विलक्षणत्वं च 'नित्यं विज्ञानमानन्दं ब्रह्म' इति शब्दान्निश्चीयत इत्यर्थः ॥ ४ ॥

'तत्तेज ऐक्षत, ता आप ऐक्षन्त' इत्यादिश्रुतिषु पञ्चमहाभूतानामपि चेतनत्वं प्रतीयते। तथा च प्रपञ्चब्रह्मणोः विलक्षणत्वमसिद्धमित्याशङ्कयाह—

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

विशेषानुगतिभ्यां श्रुतिस्मृतिभ्यां पञ्चमहाभूताभिमानिदेवतानामेव ईक्षणादिव्यापार उच्यते, न जडानां च महाभूतानामित्यर्थः ॥ ५ ॥

सिद्धान्तः—

दृश्यते तु ॥ ६ ॥

अचेतनस्य गोमयस्य चेतनवृश्चिकोत्पत्तिहेतुत्वं लोके दृश्यते। चेतनस्य ऊर्णनाभेः अचेतनतन्तुकारणत्वं दृश्यते। तद्वच्चेतनस्य ब्रह्मणः अचेतनप्रपञ्चं प्रति कारणत्वमुपपद्यत इत्यर्थः ॥ ६ ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

'असद्वा इदमग्र आसीत्' इति श्रुतौ सृष्टेः पूर्वं प्रपञ्चस्य अत्यन्तासत्त्वप्रतिपादनात् शशशृङ्गतुल्यस्य प्रपञ्चस्य ब्रह्मजन्यत्वं न संभवतीति चेत्, न। प्रतिषेधमात्रत्वात् स्थूलावस्थाप्रतिषेधमात्रत्वात् प्रलयसमयेऽपि सूक्ष्मरूपेण प्रपञ्चस्य ब्रह्मणि सत्त्वात् उत्पत्तिरुपपद्यत इत्यर्थः ॥ ७ ॥

पूर्वपक्षः—

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अपीतौ प्रलयकाले तद्वत्प्रसङ्गात् प्रपञ्चस्य ब्रह्मणि एकीभूतत्वादसमञ्जसं पुनरुत्पत्तिः न संभवतीत्यर्थः ॥ ८ ॥

सिद्धान्तः—

न तु दृष्टान्तभावात् ॥ ९ ॥

मण्डूकशरीराणां पृथिव्यामेकीभूतानां यथा वर्षाकाले पुनरुत्पत्तिः तद्वत् ब्रह्मणि एकीभूतस्य संस्काररूपेण विद्यमानस्य प्रपञ्चस्योत्पत्तिः संभवतीत्यर्थः ॥ ९ ॥

स्वपक्षदोषाच्च ॥ १० ॥

प्रधानं जगत्कारणमिति मतेऽपि अयं दोषस्तुल्यः । प्रलयकाले प्रपञ्चस्य प्रधान एकीभूतत्वादित्यर्थः ॥ १० ॥

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११॥

तर्काणामनुमानानाम् अप्रतिष्ठानात् व्यभिचारादिदोषदुष्टत्वेन अप्रमाणत्वात् असदनुमानसिद्धं प्रधानं जगत्कारणं न भवति । पूर्वपक्षी मध्ये शङ्कते—अन्यथानुमेयमिति । अन्यथा व्यभिचारादिदोषरहितत्वेन सावधानैरस्माभिः प्रधानमनुमेयमिति चेत्, सिद्धान्ती दूषयति—एवमप्यविमोक्षप्रसङ्गः नैयायिकादिभिः परमाणूनां जगत्कारणत्वव्यवस्थापनात् प्रधानमेव जगत्कारणमिति निश्चयासंभवात् प्रकृतिपुरुषविवेकाभावात् मोक्षो न स्यादित्यर्थः ॥ ११ ॥

शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

एतेन जडप्रधानकारणवादिनिराकरणेन शिष्टैर्मन्वादिभिः अपरिगृहीताः जडपरमाण्वादिकारणवादिनोऽपि व्याख्याता निराकृता इत्यर्थः ॥ १२ ॥

भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

वेदान्तिमते ब्रह्मणः भोक्त्रापत्तेः भोक्तृभेदाङ्गीकारात् अविभागश्चेत् ब्रह्मणो नित्यमुक्तत्वं, जीवानां बद्धत्वमिति विभागो न स्यादिति चेत्, न । स्याल्लोकवत् यथा लोके मलिनदर्पणादौ प्रतिबिम्बितमुखस्य मलिनत्वं, बिम्बमुखस्य स्वच्छत्वम्, एवं मलिनान्तःकरणेषु प्रतिबिम्बितानां जीवानां बद्धत्वं, बिम्बभूतस्य ब्रह्मणो मुक्तत्वं च उपपद्यत इत्यर्थः ॥ १३ ॥

आरम्भणाधिकरणम् ॥ ६ ॥

जीवब्रह्मणोरभेदेऽपि प्रपञ्चब्रह्मणोः परस्परं भिन्नत्वात् ब्रह्मणः अद्वितीयत्वं न स्यादित्याशङ्कां निराकरोति—

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

तदनन्यत्वं तयोः प्रपञ्चब्रह्मणोः अनन्यत्वम् अङ्गीकर्तव्यम् । कुतः ? आरम्भणशब्दादिभ्यः 'वाचारम्भणं विकारो नामधेयम्' इत्यादिश्रुतौ सर्वस्य प्रपञ्चस्य ब्रह्मणि अध्यस्तत्वप्रतिपादनादधिष्ठानाध्यस्तयोर्भेदाभावादित्यर्थः ॥ १४ ॥

भावे चोपलब्धेः ॥ १५ ॥

ब्रह्मणः भावे सति प्रपञ्चस्य उपलब्धेः ब्रह्मचैतन्येनैव प्रपञ्चस्य प्रकाशमानत्वात् दृग्दृश्ययोः संबन्धानिरूपणात् ब्रह्माभिन्नत्वं प्रपञ्चस्य स्वीकर्तव्यमित्यर्थः ॥ १५ ॥

सत्त्वाच्चावरस्य ॥ १६ ॥

अवरस्य प्रपञ्चस्य ब्रह्मण्येव सर्वदा सत्त्वाच्च ब्रह्माभिन्नत्वं प्रपञ्चस्याङ्गीकर्तव्यमित्यर्थः ॥ १६ ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

असद्व्यपदेशात् 'असद्वा इदमग्र आसीत्' इति श्रुतौ सृष्टेः पूर्वं प्रपञ्चस्य असत्त्वव्यपदेशात् नेति चेत् प्रपञ्चस्य सर्वदा सत्त्वं नास्तीति चेत्, न । धर्मान्तरेण सूक्ष्मत्वरूपधर्मान्तरविशिष्टत्वमात्रेण असत्त्वव्यपदेशः । कुतः ? वाक्यशेषात् 'ततो वै सदजायत' इति श्रुतौ सृष्ट्यनन्तरं स्थूलावस्थाभिधानादित्यर्थः । 'असद्वा इदमग्र आसीत्' इति श्रुतेरयमर्थः—अग्रे सृष्टेः प्राक् इदं जगदसदासीत् सूक्ष्मावस्थापन्नमासीत् । ततः सृष्ट्यनन्तरं सदजायत स्थूलावस्थाविशिष्टमासीदित्यर्थः ॥ १७ ॥

युक्तेः शब्दान्तराच्च ॥ १८ ॥

अत्यन्तासतः शशशृङ्गतुल्यस्य प्रपञ्चस्य उत्पत्तिः न संभवतीति युक्तेः शब्दान्तरात् 'सदेव सोम्येदमग्र आसीत्' इति श्रुत्यन्तराच्च प्रपञ्चस्य प्रलयसमयेऽपि सूक्ष्मरूपेण सत्त्वमङ्गीकर्तव्यमित्यर्थः ॥ १८ ॥

पटवच्च ॥ १९ ॥

यथा पटस्य कदाचित् संकुचितावस्था, कदाचिद्विकासावस्था च एवं प्रपञ्चस्यापि प्रलयकाले सूक्ष्मावस्था, सृष्टिकाले स्थूलावस्था चाङ्गीकर्तव्येत्यर्थः ॥ १९ ॥

यथा च प्राणादिः ॥२०॥

यथा योगीश्वराणां प्राणायामादिना वायुनिरोधकाले वायोः संकुचितत्वम्, इतरकालेषु नवद्वारेषु वायोः सचारः, तद्वत् प्रपञ्चस्यापि कालभेदेन संकोचविकासौ अङ्गीकर्तव्यावित्यर्थः ॥ २० ॥

इतरव्यपदेशाधिकरणम् ॥ ७ ॥

पूर्वपक्षः—

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

इतरस्य ब्रह्मणः व्यपदेशात् जीवाभेदव्यपदेशात् हिताकरणादिदोषप्रसक्तिः हितानामिष्टसाधनानां स्रक्चन्दनादीनामकरणम् असंपादनम् आदिशब्देनानिष्टसाधनानां व्याघ्रसर्पादीनां संपादनमुच्यते, एतादृशदोषप्रसक्तिः वेदान्तिमते स्यादित्यर्थः। अयं भावः—'तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादिश्रुतिभिः सकलजीवानां ब्रह्माभिन्नत्वप्रतिपादनात् जीवानां यदिष्टसाधनमनिष्टसाधनं च, तत्सर्वं ब्रह्मण एव इष्टानिष्टसाधनमङ्गीकर्तव्यम्। तथा च इष्टप्रपञ्चमात्रनिर्मातृत्वमेव स्वतन्त्रस्य ब्रह्मणः उपपन्नम्, अनिष्टप्रपञ्चनिर्मातृत्वमनुपपन्नमित्यर्थः ॥ २१ ॥

सिद्धान्तः—

अधिकं तु भेदनिर्देशात् ॥ २२ ॥

ब्रह्मस्वरूपं जीवेभ्योऽधिकं भिन्नमेव ब्रह्मसाक्षात्कारेण देहाद्यभिमाननिवृत्तिपर्यन्तम् 'द्वा सुपर्णा—' इत्यादिश्रुतिषु जीवब्रह्मणोर्भेदव्यपदेशादित्यर्थः। तथा च जीवानामेव इष्टानिष्टसाधनं जगत्, न तु ब्रह्मण इति इष्टानिष्टप्रपञ्चनिर्मातृत्वं ब्रह्मण उपपन्नमित्यर्थः ॥ २२ ॥

ज्ञानानन्दस्वभावस्य एकरूपस्य ब्रह्मणः इष्टानिष्टरूपविचित्रप्रपञ्चनिर्मातृत्वमनुपपन्नमित्याशङ्क्याह—

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

अश्मादिदृष्टान्तेन तदनुपपत्तिः पूर्वोक्तदूषणानुपपत्तिरित्यर्थः। यथा मृद्रूपायां पृथिव्यां वज्रवैडूर्येन्द्रनीलादयो मणयः, व्यर्थपाषाणाश्च जायन्ते तथा आनन्दरूपात् ब्रह्मणः इष्टानिष्टात्मकविचित्रप्रपञ्चो जायत इत्यर्थः ॥ २३ ॥

उपसंहाराधिकरणम् ॥ ८ ॥

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

उपादानकारणस्य मृदादेः दण्डचक्रकुलालादिनिमित्तकारणानाम् उपसंहारे मेलने सति घटादिजनकत्वदर्शनान्निमित्तकारणरहितस्य केवलस्य ब्रह्मणः प्रपञ्चोपादानकारणत्वं न संभवतीति चेन्न । क्षीरवत् यथा क्षीरस्य निमित्तकारणरहितस्यापि दधिजनकत्वम्, एवं ब्रह्मणोऽपि प्रपञ्चजनकत्वमुपपन्नमित्यर्थः । न च तक्रादिसंपर्कात् क्षीरस्य दधिरूपेण परिणाम इति वाच्यम् । अत्रापि मायासंपर्कात् ब्रह्मणः प्रपञ्चरूपेण परिणामसंभवादिति भावः ॥ २४ ॥

## देवादिवदपि लोके ॥ २५ ॥

लोके देवासुरादीनामपि युद्धकालेषु मायाबलात् गजतुरगादिचतुरङ्गबलनिर्मातृत्वं दृष्टं, किमु वक्तव्यम् अनन्तमायाविशिष्टस्य ब्रह्मण इत्यर्थः ॥ २५ ॥

पूर्वपक्षः—

कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

वेदान्तिमते ब्रह्म निरवयवं, सावयवं वा, निरवयवं चेत् कृत्स्नप्रसक्तिः कृत्स्नस्य सकलस्य ब्रह्मणः प्रसक्तिः प्रपञ्चरूपेण परिणामप्रसङ्गः । तथा च प्रपञ्चकाले ब्रह्मणः अभावात् प्रपञ्चाधिष्ठानत्वं प्रपञ्चभासकत्वं च ब्रह्मणो न स्यादित्यर्थः । सावयवं चेत्, निरवयवत्वशब्दकोपः निरवयवत्वप्रतिपादकानां 'निष्कलं निष्क्रियं शान्तम्' इत्यादिशब्दानां कोपः अप्रामाण्यं स्यादित्यर्थः ॥ २६ ॥

सिद्धान्तः—

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

ब्रह्मणः शब्दमूलत्वात् शब्दप्रमाणकत्वात् श्रुतेः श्रुतिबलात् ब्रह्मण निरवयवत्वं, कृत्स्नस्य ब्रह्मणः प्रपञ्चरूपेण परिणामित्वं, प्रपञ्चाधिष्ठानत्वं, प्रपञ्चभासकत्वं च, सर्वमङ्गीकर्तव्यमित्यर्थः । अस्मिन्मते मायाशबलितस्य ब्रह्मणः प्रपञ्चं प्रति विवर्तोपादानत्वाङ्गीकारात् न कोऽपि विरोध इत्यर्थः ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

निरवयवे जीवात्मनि मायावशादेवंविधाः जाग्रत्प्रपञ्चतुल्याः स्वप्न-

काले विचित्राः प्रपञ्चा दृष्टाः, एवं निरवयवेऽपि परमात्मनि मायावशात् विचित्राः प्रपञ्चा उपपन्ना इत्यर्थः ॥ २८ ॥

**स्वपक्षदोषाच्च ॥ २९ ॥**

प्रधानं जगत्कारणमिति मतेऽपि प्रधानस्य ब्रह्मवन्निरवयवत्वात् ब्रह्मपक्षोक्तदोषाः प्रधानपक्षेऽपि समाना इत्यर्थः ॥ २९ ॥

सर्वोपेताधिकरणम् ॥ १० ॥

ब्रह्मणो मायाविशिष्टत्वे प्रमाणमाह—

**सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

परा देवता सर्वोपेता सर्वमायाविशिष्टा । कुतः ? तद्दर्शनात् 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतौ ब्रह्मणः मायाविशिष्टत्वदर्शनादित्यर्थः ॥ ३० ॥

**विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

मायाविशिष्टत्वेऽपि विकरणत्वात् शरीरेन्द्रियादिसाधनरहितत्वात् नेति चेत् प्रपञ्चकारणत्वं न संभवतीति चेन्न । तदुक्तं साधनरहितस्यापि क्षीरस्य यथा तक्रसंपर्कात् दधिरूपेण परिणामः, एवं साधनरहितस्यापि ब्रह्मणः मायासंपर्कात् प्रपञ्चाकारेण परिणामः संभवतीति पूर्वमेव परिहार उक्त इत्यर्थः ॥ ३१ ॥

प्रयोजनवत्त्वाधिकरणम् ॥ ११ ॥

पूर्वपक्षः—

**न प्रयोजनवत्त्वात् ॥ ३२ ॥**

ब्रह्मणः प्रपञ्चकारणत्वं न संभवति । कुतः ? प्रयोजनवत्त्वात् घटादिकर्तॄणां कुलालादीनां लोके प्रयोजनवत्त्वदर्शनात् अवाप्तसकलकामस्य आनन्दघनस्य ब्रह्मणः प्रपञ्चनिर्माणेन प्रयोजनाभावात् 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् न ब्रह्मणः प्रपञ्चकारणत्वमिति भावः ॥ ३२ ॥

सिद्धान्तः—

**लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥**

अवाप्तसकलकामस्य आनन्दघनस्यापि ब्रह्मणः कदाचित् प्रपञ्चनिर्माणे लीला कुतूहलं, कदाचित् कैवल्यं केवलस्वरूपेणावस्थानं च उपप-

च्यते। लोकवत् यथा लोके राज्ञां सकलैश्वर्यसंपन्नानामपि कदाचित् कुतूहलवशात्किंचित्कार्यनिर्माणं, कदाचित्तूष्णीमवस्थानं, तद्वदित्यर्थः। तथाच अवाप्तसकलकामस्य ब्रह्मणः कुतूहलवशात्सृष्टिकाले प्रपञ्चनिर्माणे प्रवृत्तिः, प्रलयसमये तूष्णीमवस्थानं चोपपद्यत इति भावः ॥३३॥

वैषम्यनैर्घृण्याधिकरणम् ॥ १२ ॥

ईश्वरः कांश्चिद्दरिद्रान् सृजति, कांश्चिदैश्वर्ययुक्तान् सृजति। तथा च पक्षपातनिर्दयत्वादिदोषप्रसङ्ग इत्याशङ्क्य निराकरोति—

**वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ ३४ ॥**

ईश्वरस्य वैषम्यनैर्घृण्ये पक्षपातनिर्दयत्वे उभे अपि न स्तः। कुतः? सापेक्षत्वात् ईश्वरस्य जीवकृतपुण्यपापसापेक्षत्वात्। तथा हि दर्शयति— "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति श्रुतिः ऐश्वर्यादेः पुण्यपापाधीनत्वं प्रतिपादयतीत्यर्थः ॥ ३४ ॥

मध्यकालीनसृष्टौ ईश्वरस्य पुण्यपापसापेक्षत्वमस्तु नाम। आद्यकालीनसृष्टौ तु पुण्यपापापेक्षत्वं नोपपद्यते। सृष्टेः पूर्वं पुण्यपापयोरभावादित्याशङ्क्य निराकरोति।

**न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥**

सृष्टेः पूर्वं कर्म नास्ति। कुतः? अविभागात् सर्वस्यापि प्रपञ्चस्य प्रलयकाले नष्टत्वेन कर्मणोऽपि नष्टत्वादिति चेन्न। अनादित्वात् सृष्टिप्रलयपरंपराया अनादित्वात् पूर्वसृष्टौ कृतानां कर्मणां प्रलयकालेऽपि संस्कारात्मना विद्यमानत्वादाद्यसृष्टावपि ईश्वरस्य पुण्यपापसापेक्षत्वमुपपन्नमिति भावः ॥ ३५ ॥

**उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥**

सृष्टिप्रलयपरंपराया अनादित्वमुपपद्यते युक्तियुक्तं भवति। संस्काररूपेणाविद्यमानस्य अत्यन्तासतः अभिनवप्रपञ्चस्य उत्पत्त्ययोगात्। तथा श्रुतावपि अनादित्वमुपलभ्यते—'धाता यथापूर्वमकल्पयत्' इति श्रुतौ पूर्वशब्देन प्रलयात्पूर्वमपि सृष्टिसद्भावस्य सूचितत्वादित्यर्थः। तथा च आद्यसृष्टौ मध्यसृष्टौ अन्तसृष्टौ च ईश्वरः विवर्तोपादानम्। पूर्वावस्थानाशेन अवस्थान्तरं परिणामः। यथा दुग्धस्य दधिभावः। पूर्वरूपानुपमर्दनेन अवस्थान्तरं विवर्तः। यथा शुक्तेः रजतभावः। तस्य जीवकृतपुण्यपापानुसारेण विचित्रप्रजानिर्मातृत्वमुपपन्नमिति भावः ॥ ३६ ॥

सर्वधर्मोपपत्त्यधिकरणम् ॥ १३ ॥

ब्रह्मणो निर्गुणत्वेन सर्वज्ञत्वसत्यसंकल्पत्वसर्वनियन्तृत्वादिधर्माणामसंभवात् कथं जगत्कारणत्वमित्याशङ्कयाह—

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

मायाविशिष्टस्य ब्रह्मणः मिथ्याभूतानां सर्वज्ञत्वादिधर्माणां संभवाज्जगत्कारणत्वं ब्रह्मणः उपपन्नमिति भावः ॥ ३७ ॥

इति ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य प्रथमः पादः।

---

## द्वितीयाध्यायस्य द्वितीयः पादः ।

रचनानुपपत्त्यधिकरणम् ॥ १ ॥

रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

अनुमानम् अनुमानवेद्यं प्रधानं जत्कारणं न भवति। कुतः? रचनानुपपत्तेः सृष्ट्यनुकूलज्ञानरहितस्य जडस्य प्रधानस्य प्रपञ्चनिर्मातृत्वानुपपत्तेरित्यर्थः ॥ १ ॥

प्रवृत्तेश्च ॥ २ ॥

जडस्य प्रधानस्य प्रवृत्तेः प्रयत्नस्य अनुपपत्तेश्च प्रधानं जगत्कारणं न भवतीत्यर्थः । इदमुपलक्षणं जडस्य प्रधानस्य इच्छानुपपत्तेरिति द्रष्टव्यम् ॥ २ ॥

पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

पयसः क्षीरस्य स्तनेषु विद्यमानस्य यथा स्वातन्त्र्येण बहिर्निर्गमनं, यथा अम्बुनः जलस्य नद्यां स्वातन्त्र्येण चलनं, तद्वत् जडस्यापि प्रधानस्य स्वातन्त्र्येण महदहङ्कारादिप्रपञ्चकारणत्वमुपपन्नमिति चेत्, न। तत्रापि क्षीरजलयोरपि ईश्वरस्य प्रेरकत्वेन स्वातन्त्र्याभावादित्यर्थः ॥ ३ ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

साङ्ख्यमते व्यतिरेकानवस्थितेः प्रधानव्यतिरिक्तस्य प्रेरकस्य ब्रह्मणः अनवस्थितेः अविद्यमानत्वात् अनपेक्षत्वात् प्रधानस्य स्वातन्त्र्यात् सर्वकालेष्वपि प्रपञ्चसृष्टिः स्यात्। तथाच कदापि प्रलयो न स्यादिति भावः। ब्रह्मणस्तु कालज्ञानवत्त्वात् कदाचित् प्रपञ्चसृष्टिहेतुत्वं, कदाचित् तूष्णी-

मवस्थानं च उपपद्यते । जडप्रधानस्य तु कालज्ञानाभावात् अन्धसंध्यावन्दनन्यायेन सर्वदा प्रपञ्चजनकत्वं स्यादिति भावः ॥ ४ ॥

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

यथा गवामुदरे विद्यमानं तृणं क्षीराकारेण स्वयमेव परिणमते, एवं प्रधानमपि महदहङ्कारादिप्रपञ्चरूपेण परिणमत इति चेत्, न तृणस्यापि स्वातन्त्र्येण परिणामो नास्ति । कुतः ? अन्यत्राभावात् अनडुहामुदरे विद्यमानतृणस्य क्षीराकारेण परिणामाभावात् । यदि तृणस्य स्वातन्त्र्येण क्षीरपरिणामः, तर्हि सर्वपशूनाम् उदरेऽपि विद्यमानं तृणं क्षीराकारेण परिणमेत । तस्मादीश्वरप्रेरणेनैव तृणस्य क्षीरपरिणाम इति भावः ॥ ५ ॥

जडस्य स्वातन्त्र्येण परिणाममभ्युपेत्य दूषणान्तरमाह—

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

अभ्युपगमेऽपि जडस्य स्वातन्त्र्येण परिणामाङ्गीकारेऽपि जडस्य प्रधानस्य प्रपञ्चनिर्माणे अर्थाभावात् भोगमोक्षादिप्रयोजनाभावात् प्रपञ्चजनकत्वमनुपपन्नमित्यर्थः । प्रयोजनरहितस्यापि ब्रह्मणः लीलया प्रपञ्चनिर्मातृत्वमुपपन्नं, न जडस्य प्रधानस्य लीलाऽसंभवादिति भावः ॥ ६ ॥

पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

यथा पुरुषाणां जीवानां संनिधानादिन्द्रियाणां विषयेषु व्यापारः, यथा वा अश्मनाम् अयस्कान्तमणीनां संनिधानात् शरीरे विद्यमानानां कफानां(?)बहिर्निर्गमनम्, एवं ब्रह्मसंनिधानात् प्रधानस्यापि महदादिप्रपञ्चाकारेण परिणामो भविष्यतीति चेत्, न । तथाप्यस्मन्मतप्रवेशापत्तिः साङ्ख्यमते अपसिद्धान्तः स्यादित्यर्थः ॥ ७ ॥

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

प्रलयकाले समप्राधान्येन विद्यमानानां सत्त्वरजस्तमोगुणानामीश्वरप्रेरणं विना परस्परमङ्गाङ्गिभावानुपपत्तेश्च सात्त्विकराजसतामसप्रपञ्चसृष्टिर्न संभवतीत्यर्थः ॥ ८ ॥

गुणत्रयमपि समप्रधानतया नानुमीयते, किं तु सात्त्विकसृष्टौ सत्त्वगुणस्य प्राधान्यम्, इतरयोरुपसर्जनत्वम्, एवं राजससृष्टौ रजोगुणस्य प्राधान्यम्, इतरयोरुपसर्जनत्वम्, एवं तमस्सृष्टौ तमोगुणस्याङ्गित्वम्, इत-

रयोरङ्गत्वमिति, एवंप्रकारेण कालभेदेन नानाविधस्वभावविशिष्टमेव प्रधानमनुमीयत इत्याशङ्क्य निराकरोति—

**अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥**

अन्यथा नानास्वभावविशिष्टतया प्रधानस्यानुमितौ अङ्गीकृतायामपि जडस्य ज्ञशक्तिवियोगात् ज्ञानशक्त्यभावात् कालविशेषपरिज्ञानाभावात् सर्वदा प्रपञ्चजनकत्वं स्यादिति पूर्वोक्तदोषस्तदवस्थ इति भावः ॥ ९ ॥

**विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥**

विप्रतिषेधात् सकलवेदान्तविरुद्धत्वादपि साङ्ख्यमतमसमञ्जसम् अनुपपन्नमित्यर्थः ॥ १० ॥

महद्दीर्घाधिकरणम् ॥ २ ॥

साङ्ख्यमतं निराकृत्य वैशेषिकनैयायिकमतं निराकरोति—

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥**

'कारणगुणा हि कार्यगुणानारभन्त' इति न्यायात् ज्ञानानन्दात्मकब्रह्मजन्यस्य प्रपञ्चस्यापि ज्ञानानन्दरूपत्वं स्यादिति चेन्न । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महत् परमाण्वपेक्षया अधिकपरिमाणविशिष्टं द्व्यणुकं यथा, यथा वा ह्रस्वपरिमाणोपेतत्वाद्दीर्घपरिमाणरहितेभ्यो द्व्यणुकेभ्यः दीर्घपरिमाणोपेताणुपरिमाणरहितं त्र्यणुकं जायते, एवं ज्ञानानन्दरूपात् ब्रह्मणः जडं दुःखात्मकं च जगदुत्पद्यत इत्यर्थः॥ ११॥

अतस्तदभावाधिकरणम् ॥ ३ ॥

परमाणुप्रतिबन्द्या स्वमतदूषणं परिहृत्य परमतं खण्डयति—

**उभयथापि न कर्मातस्तदभावः ॥ १२ ॥**

ईश्वरस्य वा जीवानां वा परमाणुप्रेरकत्वम् उभयथापि पक्षद्वयेऽपि परमाणूनां कर्म चलनं न संभवति । जीवेश्वरयोरुभयोरपि निरवयवत्वेन निरवयवानां निरवयवैः परमाणुभिः सह संयोगसंबन्धाभावादसंबन्धयोर्जीवेश्वरयोः प्रेरकत्वासंभवात् । अतस्तदभावः अतः चलनासंभवात् तदभावः परमाणूनां परस्परसंयोगाभावः । तथा च द्व्यणुकत्र्यणुकादिफलोत्पत्तिर्न संभवतीति भावः ॥ १२ ॥

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥**

किं च नैयायिकमते तन्तुपटयोः समवायाङ्गीकारात् साम्यात् सम-

वायसंबन्धस्यापि संयोगसंबन्धतुल्यत्वात् घटपटसंयोगस्य यथा संबन्धान्तरमङ्गीकृतम्, एवं तन्तुपटसमवायस्यापि द्वितीयं संबन्धान्तरं वक्तव्यम् । द्वितीयसंबन्धस्यापि तृतीयसंबन्धान्तरं वक्तव्यम्, एवं तृतीयस्यापि चतुर्थं संबन्धान्तरं वक्तव्यम् । तथाच अनवस्थितेः अनवस्थाप्रसङ्गात् नैयायिकमतमसङ्गतमित्यर्थः ॥ १३ ॥

नित्यमेव च भावात् ॥ १४ ॥

किं च परमाणूनां नित्यं सर्वदा भावात् विद्यमानत्वात् प्रलयकालेऽपि सृष्टिप्रसङ्गः । न च ईश्वरप्रेरणवशात् कदाचिदेव सृष्टिः, न सर्वदेति वाच्यम् । निरवयवस्येश्वरस्य निरवयवैः परमाणुभिः सह संयोगसंबन्धाभावेन प्रेरकत्वमेव न संभवतीति पूर्वमेवोक्तत्वादिति भावः ॥१४॥

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

किं च नैयायिकमते पृथिव्यप्तेजोवायुपरमाणूनां रूपरसगन्धस्पर्शविशिष्टत्वाङ्गीकारात् विपर्ययः अनित्यत्वसावयवत्वादिदोषप्रसङ्गः स्यात् । कुतः ? दर्शनात् रूपादिमतां घटादीनाम् अनित्यत्वसावयवत्वदर्शनादित्यर्थः । तथा च परमाणूनामनित्यत्वात् द्व्यणुकादिप्रपञ्चकारणत्वं न संभवतीति भावः ॥ १५ ॥

उभयथा च दोषात् ॥ १६ ॥

किं च परमाणूनां सावयवत्वमङ्गीक्रियते वा, निरवयवत्वमङ्गीक्रियते वा । उभयथापि पक्षद्वयेऽपि दोषात् सावयवत्वपक्षे अनित्यत्वादिदोषप्रसङ्गात्, निरवयवत्वे परमाणूनां परस्परं संयोगासंभवेन द्व्यणुकादिप्रपञ्चोत्पत्त्यसंभवान्नैयायिकमतमसङ्गतमित्यर्थः ॥ १६ ॥

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

किं च मन्वादिभिः शिष्टैः अपरिगृहीतत्वाच्च नैयायिकमते अत्यन्तमनपेक्षा उपेक्षा कर्तव्येत्यर्थः ॥ १७ ॥

समुदायाधिकरणम् ॥ ४ ॥

वैशेषिकादिमतं निराकृत्य बौद्धमतं निराकरोति—

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

तत्र बौद्धास्त्रिविधाः—केचिज्ज्ञानार्थोभयास्तित्ववादिनः, केचित् ज्ञानमात्रास्तित्ववादिनः, केचित् ज्ञानार्थोभयशून्यत्ववादिनः । तत्र प्रथमं

उभयास्तित्ववादिनां मतं निराक्रियते। तेषां मतमित्थं—गन्धपरमाणुपुञ्ज एव पृथिवीति व्यवह्रियते, रसपरमाणुपुञ्ज एव जलं, रूपपरमाणुपुञ्ज एव तेजः, स्पर्शपरमाणुपुञ्ज एव वायुः, भौतिकादिचराचरशरीरादिघटपटादयश्च परमाणुपुञ्ज एव, आकाशस्तु शशशृङ्गतुल्यः शून्यः, जीवाः सोपद्रवज्ञानसंतानरूपाः, ईश्वरः निरुपद्रवज्ञानसंतानरूप इति। तेषां मते प्रथमं भूतचतुष्टयं दूषयति—उभयहेतुके भूतभौतिकरूपे परमाणुसमुदाये अङ्गीक्रियमाणे तदप्राप्तिः तस्य समुदायस्य अप्राप्तिः अनुपपत्तिः। तन्मते जीवानाम् ईश्वरस्य च क्षणिकज्ञानसंतानरूपत्वेन अनित्यतया क्षणिकपरमाणुमेलनकर्तृत्वासंभवादिति भावः॥ १८॥

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्॥ १९॥**

मेलनकर्तारं विनापि क्षणिकपरमाणूनां स्वत एव इतरेतरप्रत्ययत्वात् परस्परमिलितत्वात् मेलनकर्त्रपेक्षा नास्तीति चेन्न। उत्पत्तिमात्रनिमित्तत्वात् पूर्वपूर्वघटपरमाणूनां उत्तरोत्तरघटपरमाणूत्पत्तिमात्रं प्रति कारणत्वात्। मेलनकर्ता नित्यः ईश्वरः कश्चिदङ्गीकर्तव्यः। जडानां क्षणिकपरमाणूनां स्वातन्त्र्येण मेलनासंभवात्। तथा चापसिद्धान्तः स्यादित्यर्थः॥ १९॥

इदानीं पूर्वपूर्वपरमाणूनां उत्तरोत्तरपरमाणूत्पत्तिहेतुत्वमपि तन्मते अनुपपन्नमित्याह—

**उत्तरोत्पादे च पूर्वनिरोधात्॥ २०॥**

उत्तरोत्पादे उत्तरपरमाणूत्पत्तिकाले पूर्वनिरोधात् पूर्वपरमाणूनां नष्टत्वात् उत्तरपरमाणूत्पत्तिहेतुत्वं न संभवतीत्यर्थः॥ २०॥

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा॥ २१॥**

किं च बौद्धमते सर्वं कार्यमकारणकं वा, सकारणकं वा। आद्यपक्षं दूषयति—असति प्रतिज्ञोपरोधः कारणे असति सति कार्यमुत्पद्यते चेत्, प्रतिज्ञोपरोधः सर्वं कार्यं सकारणकमिति बौद्धप्रतिज्ञायाः उपरोधः अप्रामाण्यं स्यात्। द्वितीयं पक्षं दूषयति—यौगपद्यमन्यथा। अन्यथा सर्वं कार्यं सकारणकं चेत्, यौगपद्यं कार्यकारणयोरेककालीनत्वं स्यात्। तथा च सर्वं क्षणिकमिति प्रतिज्ञायाः अप्रामाण्यं स्यादित्यर्थः॥ २१॥

बौद्धमते पदार्थानामुत्पत्तिं खण्डयित्वा पदार्थानां नाशमपि खण्डयति—

**प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्॥ २२॥**

प्रतिसङ्ख्यानिरोधो नाम पाषाणप्रक्षेपादिना बुद्धिपूर्वकः घटपटादिभौतिकपदार्थनाशः, अप्रतिसङ्ख्यानिरोधो नाम कालवशात् स्वत एव पृथिव्यादिमहाभूतानां नाशः । तयोः प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधयोः अप्राप्तिः अनुपपत्तिः । कुतः ? अविच्छेदात् बौद्धमते पूर्वपूर्वपरमाणूनामुत्तरोत्तरपरमाणून् प्रति स्वातन्त्र्येण कारणत्वाङ्गीकारात् जडानां परमाणूनां कालविशेषपरिज्ञानाभावात् परमाणुसंतानानां कदापि विच्छेदानुपपत्तिरित्यर्थः । तथा च बौद्धमते सृष्टिप्रलयौ उभावप्यनुपपन्नावित्यर्थः २२

## उभयथा च दोषात् ॥ २३ ॥

किं च घटपटादिपरमाणुसंतानानां कञ्चित् कालं स्थिरत्वं वा, क्षणिकत्वं वा, उभयथापि पक्षद्वयेऽपि दोषात् स्थिरत्वपक्षे अपसिद्धान्तः । बौद्धमते स्थिरपदार्थानङ्गीकारात् । क्षणिकत्वपक्षे तु घटादीनां जलाहरणादिकार्यकारित्वं न स्यात् । तस्मादुभयथापि दोषात् बौद्धमतमसङ्गतमित्यर्थः । ननु बौद्धमते परमाणूनामेव क्षणिकत्वं, परमाणुसंतानरूपाणां घटपटादीनां तु स्थिरत्वमेव । तथा च जलाहरणादिकार्यकारित्वं घटादीनामुपपन्नमिति चेत्, तर्हि परमाण्वपेक्षया परमाणुसंतानानां भिन्नत्वाङ्गीकारे घटपटादिपदार्थानां द्व्यणुकादिक्रमेण परमाणुजन्यत्वमेवाङ्गीकर्तव्यम् । तथा च नैयायिकमतप्रवेशापत्तिः बौद्धानाम् अपसिद्धान्तः स्यादिति भावः ॥ २३ ॥

बौद्धाभिमतं भूतचतुष्टयस्य परमाणुपुञ्जरूपत्वं निराकृत्य आकाशस्य शून्यत्वं बौद्धाभिमतं निराकरोति—

## आकाशे चाविशेषात् ॥ २४ ॥

आकाशेऽपि सर्वेषां जीवानाम् अस्तित्वप्रतीतेः अविशेषात् तुल्यत्वात् भूतचतुष्टयस्य प्रत्यक्षपरमाणुपुञ्जरूपत्ववत् आकाशस्यापि अतीन्द्रियपरमाणुपुञ्जरूपत्वमेवाङ्गीकर्तव्यम् । तथा च शून्यत्वाङ्गीकारः अनुपपन्न इति भावः ॥ २४ ॥

पराभिमतानि पञ्चमहाभूतानि खण्डयित्वा इदानीं क्षणिकज्ञानसंतानरूपत्वं जीवानां खण्डयति—

## अनुस्मृतेश्च ॥ २५ ॥

पूर्वदिनेषु अनुभूतानां पदार्थानामुत्तरदिनेषु अनुस्मृतेः जीवानां नित्यत्वमङ्गीकर्तव्यम् । ज्ञानसंतानरूपत्वाङ्गीकारे पूर्वदिनज्ञानीयसंतानानां

सुषुप्तिकाले नष्टत्वेन स्मर्तृत्वासंभवात्। न चोत्तरदिनेषु उत्पन्नानां ज्ञानसंतानानां स्मर्तृत्वं भविष्यतीति वाच्यम्। अन्येनानुभूतपदार्थानामन्येन स्मरणासंभवादिति भावः॥ २५॥

बौद्धमते उत्तरदिनीयज्ञानसंतानानामुत्पत्तिरपि न संभवतीत्याह—

**नासतोऽदृष्टत्वात्॥ २६॥**

असतः सुषुप्तिकालेषु नष्टत्वात् पूर्वपूर्वज्ञानसंतानादुत्तरोत्तरज्ञानसंतानानामुत्पत्तिर्न संभवति। कुतः? अदृष्टत्वात् नष्टमृत्पिण्डादीनां घटादिजनकत्वदर्शनाभावादित्यर्थः॥ २६॥

नष्टपदार्थस्यापि कार्यजनकत्वाङ्गीकारे बाधकमाह—

**उदासीनानामपि चैवं सिद्धिः॥ २७॥**

एवं सति नष्टस्यापि कार्यजनकत्वे सति उदासीनानां निर्व्यापाराणामपि जीवानां सकलकार्यसिद्धिः स्यादित्यर्थः॥ २७॥

उपलब्ध्यधिकरणम्॥ ६॥

विज्ञानवादी बौद्धः ज्ञानान्येव सत्यानि, पञ्चमहाभूतप्रभृतयस्तु अर्थाः असन्त एवेति वदति। तन्मतं निराकरोति—

**नाभाव उपलब्धेः॥ २८॥**

पञ्चमहाभूतात्मकस्य अर्थप्रपञ्चस्य असत्त्वं नाम शशशृङ्गवत् शून्यत्वं वा, स्वप्नप्रपञ्चवत् मिथ्यात्वं वा। आद्यपक्षं निराकरोति—नाभावः पञ्चमहाभूतात्मकस्य अर्थप्रपञ्चस्य अभावः शून्यत्वं न संभवति। कुतः? उपलब्धेः प्रत्यक्षप्रमाणेनार्थप्रपञ्चस्योपलभ्यमानत्वात्। शशशृङ्गवत् शून्यत्वाङ्गीकारे प्रत्यक्षोपलब्धिर्न स्यादित्यर्थः॥ २८॥

द्वितीयपक्षं निराकरोति—

**वैधर्म्याच्च न स्वप्नादिवत्॥ २९॥**

स्वप्नादिवत् स्वप्नप्रपञ्चदृष्टान्तेन जाग्रत्प्रपञ्चस्य मिथ्यात्वं वक्तुं न शक्यते। कुतः? वैधर्म्यात् स्वप्नप्रपञ्चजाग्रत्प्रपञ्चयोः वैलक्षण्यस्य विद्यमानत्वात्। स्वप्नप्रपञ्चस्य उत्थानानन्तरं प्रत्यक्षेण बाध्यमानत्वात् मिथ्यात्वमुपपन्नम्। जाग्रत्प्रपञ्चस्य तु बाधादर्शनात् मिथ्यात्वं नोपपद्यत इत्यर्थः। न च 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति श्रुत्या जाग्रत्प्रपञ्चस्यापि ब्रह्मज्ञानेन बाध्यत्वं प्रतिपाद्यत इति वाच्यम्। बौद्धमते श्रुतीनां प्रमाण्यानङ्गीकारात्, अङ्गीकारे वा अस्मन्मतप्रवेशापत्तिरिति भावः॥ २९॥

न केवलं बाध्यत्वाभावादेव प्रपञ्चस्य मिथ्यात्वाभावः, किं तु अधिष्ठानाभावादपि प्रपञ्चस्य मिथ्यात्वाभाव इत्याह—

न भावोऽनुपलब्धेः ॥ ३० ॥

बौद्धमते पारमार्थिकस्य प्रपञ्चाधिष्ठानस्य भावः विद्यमानत्वं नास्ति। कुतः ? अनुपलब्धेः पारमार्थिकाधिष्ठानबोधकप्रमाणाभावादित्यर्थः। न च वेदान्ता एव पारमार्थिकाधिष्ठानबोधका इति वाच्यम्। बौद्धमते वेदान्तानां प्रामाण्यानङ्गीकारादिति भावः ॥ ३० ॥

बौद्धमतेऽपि तत्तदर्थविषयकज्ञानान्येव तत्तदर्थानामधिष्ठानं भविष्यन्तीत्याशङ्क्याह—

क्षणिकत्वाच्च ॥ ३१ ॥

बौद्धमते ज्ञानानां प्रतिक्षणं विनाश्यत्वात् अनेकत्वाच्च प्रपञ्चाधिष्ठानत्वं नोपपद्यते। यदि सर्वेषां ज्ञानानामेकत्वं नित्यत्वं वाङ्गीक्रियते, तर्हि तदेव ब्रह्मस्वरूपम्। तथा चास्मन्मतप्रवेशापत्तिरित्यर्थः ॥ ३१ ॥

विज्ञानवादिमतं निराकृत्य ज्ञानानामर्थानां च सर्वेषामपि शून्यत्वमिति ज्ञानार्थोभयात्मकस्य प्रपञ्चस्य शून्यत्ववादिनो मतं निराकरोति—

सर्वथानुपपत्तेश्च ॥ ३२ ॥

सर्वशून्यत्ववादिमतस्य प्रत्यक्षानुमानश्रुतिस्मृत्यादिसकलप्रमाणविरुद्धत्वात्तन्मतमत्यन्तमसङ्गतमित्यर्थः ॥ ३२ ॥

एकस्मिन्नसंभवाधिकरणम् ॥ ६ ॥

बौद्धमतं निराकृत्य क्षपणकमतं निराकरोति—

नैकस्मिन्नसंभवात् ॥ ३३ ॥

क्षपणकाः प्रपञ्चस्य सत्त्वमसत्त्वं सदसदात्मकत्वं सदसद्भिन्नत्वं च अङ्गीकुर्वन्ति। तन्न युक्तम्। कुतः ? एकस्मिन् प्रपञ्चे सदसत्त्वादीना वास्तवानां विरुद्धधर्माणामसंभवादित्यर्थः। मिथ्याभूतधर्माङ्गीकारे इष्टापत्तिरिति भावः ॥ ३३ ॥

क्षपणकाः जीवानां शरीरतुल्यपरिमाणवत्त्वमङ्गीकुर्वन्ति। तदपि निराकरोति—

एवं चात्माऽकार्त्स्न्यम् ॥ ३४ ॥

एवंसति जीवनां शरीरसमानपरिमाणवत्त्वे सति आत्माकार्त्स्न्यम् आत्मनां जीवानाम् अकार्त्स्न्यं कृत्स्नशरीरव्यापित्वं न स्यात्। मशका-

दिशरीरवर्तिनां सूक्ष्मजीवानां कर्मवशात् गजादिशरीरप्राप्तौ सत्यां गजादिशरीरव्यापित्वं न स्यात् । जीवस्य स्वल्पत्वात् । तथा गजादिशरीरवर्तिनां स्थूलजीवानां कर्मवशात् मशकादिशरीरप्राप्तौ सत्यां मशकादिशरीरव्यापित्वं न स्यात् । मशकादिशरीरस्य स्वल्पत्वेन अवकाशाभावादिति भावः ।। ३४ ।।

तूलपिण्डवत् जीवानामपि सावयवत्वाङ्गीकारात् मशकादिशरीरेषु संकुचितत्वं, गजादिशरीरेषु विकासावस्था च भविष्यतीत्याशङ्क्य निराकरोति—

**न च पर्यायादप्यविरोधो विकारादिभ्यः ।। ३५ ।।**

पर्यायात् शरीरक्रमेण संकोचविकासाङ्गीकारात् अविरोधः गजतुरगमशकादिशरीरेषु प्रवेशविरोधो नास्तीति चेत्, न । तथापि जीवानां सावयवत्वेन विकारित्वविनाशित्वादिदोषप्रसङ्गादित्यर्थः ।। ३५ ।।

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ।। ३६ ।।**

अन्त्यावस्थितेः अन्त्यकाले मोक्षकाले अवस्थितेः संकोचविकासरहिततया एकरूपेणावस्थानात् तद्दृष्टान्तेन उभयनित्यत्वादाद्यमध्यमकालयोरपि नित्यत्वात् संकोचविकासराहित्वात् अनित्यत्वादिदोषप्रसक्तिर्नास्ति चेत्, तर्हि अविशेषः अस्मन्मताद्विशेषो नास्ति । तथा च अस्मन्मतप्रवेशापत्तिरित्यर्थः ।। ३६ ।।

पत्यधिकरणम् ॥ ७ ॥

नैयायिकमतवैशेषिकमतानुसारिणः तटस्थेश्वरवादिनः जीवभिन्नेश्वरसद्भावे अनुमानं प्रमाणं वदन्ति, तन्मतं निराकरोति—

**पत्युरसामञ्जस्यात् ।। ३७ ।।**

पत्युर्जीवभिन्नेश्वरस्य असामञ्जस्यात् अप्रामाणिकत्वादित्यर्थः । न च अङ्कुरादिकं सकर्तृकं, कार्यत्वात्, घटवदित्यनुमानमेव प्रमाणमिति वाच्यम् । एतस्यानुमानस्य कर्तृमात्रसाधकत्वेन सर्वज्ञेश्वरसाधकत्वाभावादिति भावः ।। ३७ ।।

**संबन्धानुपपत्तेश्च ।। ३८ ।।**

नैयायिकमते परमाणूनां निरवयवत्वादीश्वरस्यापि निरवयवत्वात् परमाणूनामीश्वरस्य च संयोगसंबन्धानुपपत्तेः परमाणुप्रेरकत्वमीश्वरस्य

न संभवति । तथा च ईश्वराप्रेरितानां जडानां परमाणूनां द्व्यणुकत्र्यणुकादिप्रपञ्चोत्पादकत्वं न संभवतीति भावः ॥ ३८ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

किं च तन्मते परमाणूनामतीन्द्रियत्वेन ईश्वरस्य परमाणुविषयकसाक्षात्कारासंभवात् अधिष्ठानानुपपत्तेः परमाणुप्रेरकत्वानुपपत्तेश्च द्व्यणुकादिप्रपञ्चोत्पत्तिः न संभवतीति भावः । न च परमाणवः जीवानामेवाप्रत्यक्षाः, ईश्वरस्य तु प्रत्यक्षा इति वाच्यम् । अयोग्यपदार्थस्य सर्वान् प्रत्यप्ययोग्यत्वादिति भावः । ब्रह्मणस्तु श्रुतिमूलकत्वात् सर्वप्रपञ्चविषयकापरोक्षज्ञानवत्त्वमुपपन्नमिति भावः ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

यथा जीवा अप्रत्यक्षाण्यपि इन्द्रियाणि प्रेरयन्ति, एवमीश्वरोऽपि अप्रत्यक्षान् परमाणून् प्रेरयिष्यतीति चेन्न । भोगादिभ्यः तथापि विषयभोगार्थं जीवानामिन्द्रियप्रेरकत्वमुपपन्नम् । अशरीरस्य ईश्वरस्य तु परमाणुजन्यप्रपञ्चेन भोगाभावात् परमाणुप्रेरकत्वं न संभवतीत्यर्थः ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

किं च तन्मते ईश्वरः सावयवो वा, निरवयवो वा । सावयवत्वे अन्तवत्त्वं नाशवत्त्वं स्यात्, निरवयवत्वे प्रपञ्चेश्वरयोः संयोगसंबन्धाभावात् असर्वज्ञता सर्वज्ञत्वाभावप्रसङ्ग इत्यर्थः ॥ ४१ ॥

पाञ्चरात्राधिकरणम् ॥ ८ ॥

पाञ्चरात्रमतानुसारिणः जीवानां ब्रह्मणः सकाशात् उत्पत्तिं जीवेभ्यः अन्तःकरणानामुत्पत्तिं च वदन्ति । तन्मतं निराकरोति—

उत्पत्त्यसंभवात् ॥ ४२ ॥

जीवानां ब्रह्मणः सकाशात् उत्पत्त्यसंभवादित्यर्थः । जीवानां ब्रह्मजन्यत्वे पञ्चमहाभूतवत् विनाशप्रसङ्गात् मोक्षो न स्यादिति भावः ॥ ४२ ॥

न च कर्तुः करणम् ॥ ४३ ॥

कर्तुः जीवात् करणम् अन्तःकरणं च नोत्पद्यते । किंचिज्ज्ञस्य जीवस्य अन्तःकरणनिर्माणसामर्थ्याभावात् । 'एतस्माज्जायते प्राणः' इति श्रुतौ अन्तःकरणादीनां ब्रह्मजन्यत्वप्रतिपादनाच्चेति भावः ॥ ४३ ॥

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

जीवानां विज्ञानानन्दरूपत्वं नित्यत्वं ब्रह्माभिन्नत्वं च अङ्गीक्रियत इति चेत्, तर्हि तदप्रतिषेधः तस्य मतस्य प्रतिषेधः निरासः अस्माभिर्न क्रियते । अस्मन्मतप्रवेशापत्तेरित्यर्थः ॥ ४४ ॥

विप्रतिषेधाच्च ॥ ४५ ॥

सकलवेदान्तविरुद्धत्वाच्च जीवानामुत्पत्तिरङ्गीकर्तुं न शक्यते । 'तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादिश्रुतिभिः जीवब्रह्मणोरभेदप्रतिपादनादिति भावः ॥ ४५ ॥

इति ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः ।

---

## द्वितीयाध्यायस्य तृतीयः पादः ।

वियदधिकरणम् ॥ १ ॥

पूर्वपक्षसूत्राणि—

न वियदश्रुतेः ॥ १ ॥

वियत् आकाशः नोत्पद्यते । अश्रुतेः छान्दोग्ये उत्पत्त्यश्रवणादित्यर्थः ॥ १ ॥

अस्ति तु ॥ २ ॥

तैत्तिरीयकश्रुतौ उत्पत्तिरस्तीति चेत्, श्रुत्योर्विरोधः ॥ २ ॥

पूर्वपक्षी स्वमते विरोधं परिहरति—

गौण्यसंभवात् ॥ ३ ॥

उत्पत्तिश्रुतिर्गौणी । असंभवात् निरवयवस्य उत्पत्त्यसंभवादित्यर्थः ॥ ३ ॥

शब्दाच्च ॥ ४ ॥

'आकाशवत् सर्वगतश्च नित्यः' इति श्रुतौ नित्यशब्दाच्च आकाशस्य उत्पत्तिर्न संभवतीत्यर्थः ॥ ४ ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

'आत्मन आकाशः संभूतः' इति श्रुतौ एकस्य संभूतशब्दस्य गौणत्वं स्यात् । ब्रह्मशब्दवत् 'अन्नं ब्रह्म' इति श्रुतौ ब्रह्मशब्दवदित्यर्थः ॥ ५ ॥

सिद्धान्तसूत्रे—

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

आकाशादिप्रपञ्चस्य सर्वस्य अव्यतिरेकात् ब्रह्माभिन्नत्वात् प्रतिज्ञा-हानिः 'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञायाः अहानिर्भवति । आकाशस्य नित्यत्वे तु ब्रह्मभिन्नत्वात् प्रतिज्ञायाः हानिः स्यादित्यर्थः ॥ ६ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

विभागः विभक्तः ब्रह्मप्रतियोगिकमिथ्याभूतभेदवान् प्रपञ्चः सर्वोऽपि विकारः ब्रह्मजन्य एव लोकवत् फेनतरङ्गादीनां समुद्रजन्यत्ववदित्यर्थः ॥ ७ ॥

मातरिश्वाधिकरणम् ॥ २ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

एतेनाकाशस्योत्पत्तिप्रतिपादनेन मातरिश्वा वायुर्व्याख्यातः ब्रह्मजन्यत्वेन व्याख्यात इत्यर्थः ॥ ८ ॥

असंभवाधिकरणम् ॥ ३ ॥

आकाशवत् ब्रह्मणोऽपि केनचित् कारणेन उत्पत्तिरस्त्वित्याशङ्क्याह—

## असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

सतः ब्रह्मणः असंभवः उत्पत्तिर्न संभवति । कुतः ? अनुपपत्तेः । ब्रह्मणः कारणान्तराभावेन उत्पत्त्यसंभवादित्यर्थः ॥ ९ ॥

तेजोऽधिकरणम् ॥ ४ ॥

## तेजोऽतस्तथा ह्याह ॥ १० ॥

अतः वाय्ववच्छिन्नब्रह्मणः तेज उत्पद्यते । तथाह्याह 'वायोरग्निः' इति श्रुतिरित्यर्थः ॥ १० ॥

अबधिकरणम् ॥ ५ ॥

## आपः ॥ ११ ॥

तेजोऽवच्छिन्नब्रह्मणः आपो जायन्त इत्यर्थः ॥ ११ ॥

पृथिव्यधिकरणम् ॥ ६ ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

'ता अन्नमसृजन्त' इति श्रुतौ अन्नशब्देन पृथिवी प्रतिपाद्यते । अधिकारात् महाभूतप्रकरणात् रूपात् 'यत्कृष्णं तदन्नस्य' इति श्रुतौ कृष्णरूपश्रवणात् शब्दान्तरात् 'अद्भ्यः पृथिवी' इति श्रुतौ पृथिवीशब्दश्रवणादित्यर्थः ॥ १२ ॥

तदभिध्यानाधिकरणम् ॥ ७ ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

स ईश्वरः साक्षादेव सर्वकार्यकर्ता । कुतः ? तल्लिङ्गात् तस्येश्वरस्यान्तर्यामित्वलिङ्गात् तदभिध्यानात् ईश्वरेक्षणादेव भूतेषु श्रुतेक्षणोपपत्तेरित्यर्थः ॥ १३ ॥

विपर्ययाधिकरणम् ॥ ८ ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

अतः सृष्टिक्रमात् विपर्ययेण व्यत्यासेन क्रमः प्रलयक्रमः उपपद्यत इत्यर्थः ॥ १४ ॥

अन्तराविज्ञानाधिकरणम् ॥ ९ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

अन्तरा ब्रह्माकाशयोर्मध्ये विज्ञानमनसी इन्द्रियान्तःकरणे उत्पद्येते क्रमेण । तल्लिङ्गात् 'एतस्माज्जायते प्राणः' इति श्रुतौ प्राणादिसृष्ट्यनन्तरं पञ्चमहाभूतसृष्टिप्रतिपादनादिति चेन्न । अविशेषात् तस्याः श्रुतेः उत्पत्तिमात्रप्रतिपादकत्वेन क्रमप्रतिपादकत्वाभावात् । तथा च प्राणेन्द्रियान्तःकरणानां भौतिकत्वात् पञ्चमहाभूतोत्पत्त्यनन्तरमेवोत्पत्तिरित्यर्थः ॥ १५ ॥

चराचरव्यपाश्रयाधिकरणम् ॥ १०॥

'जातो देवदत्तो, मृतो देवदत्तः' इति लोकव्यवहारात् जीवस्यापि उत्पत्तिरस्तीति शङ्कां निराकरोति—

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥

तद्व्यपदेशः जातो देवदत्त इति व्यवहारः भाक्तः गौणः चराचरशरीरविषयकः । तद्भावभावित्वात् तप्तायःपिण्डवत् शरीरजीवयोः ऐक्याध्यासापन्नत्वादित्यर्थः ॥ १६ ॥

आत्माधिकरणम् ॥ ११ ॥

पञ्चमहाभूतानामिव जीवानामपि सृष्ट्यादौ उत्पत्तिरस्तीति शङ्कां निराकरोति—

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

आत्मा जीवः नोत्पद्यते । अश्रुतेः सृष्टिश्रुतिषु जीवानामुत्पत्तेरश्रव-

णात्, प्रत्युत 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिभ्यः ताभ्यः श्रुतिभ्यः नित्यत्वश्रवणाच्चेत्यर्थः ॥ १७ ॥

ज्ञाधिकरणम् ॥ १२ ॥

ज्ञोऽत एव ॥ १८ ॥

अत एव नित्यत्वादेव ज्ञः सत्यज्ञानस्वरूप इत्यर्थः ॥ १८ ॥

उत्क्रान्त्यधिकरणम् ॥ १३ ॥

पूर्वपक्षसूत्राणि—

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

उत्क्रान्तिर्देहात् बहिर्गमनं, गतिः स्वर्गनरकलोकगमनं, आगतिः पुण्यपापफलभोगानन्तरं भूलोकं प्रत्यागमनम्। एतासां श्रवणात् जीवः अणुरेव, विभुत्वे गमनासंभवादित्यर्थः ॥ १९ ॥

उत्क्रान्तिर्देहान्निर्गमो न भवति, किं तु शरीरस्वामित्वनिवृत्तिरिति केचित्। तदङ्गीकृत्याप्यणुत्वमाह—

स्वात्मना चोत्तरयोः ॥ २० ॥

उत्तरयोर्गत्यागत्योः स्वात्मना कर्त्रा संबन्धात् अणुत्वमावश्यकमित्यर्थः ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

जीवः अणुर्न भवति। अतच्छ्रुतेः 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुतौ विभुत्वश्रवणादिति चेन्न। इतराधिकारात् तस्याः श्रुतेः परमात्मप्रकरणस्थत्वादित्यर्थः ॥ २१ ॥

स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

स्वशब्दात् अणुशब्दात् उन्मानात् वालाग्रसमानपरिमाणवत्त्वाच्च जीवः अणुरित्यर्थः ॥ २२ ॥

अविरोधश्चन्दनवत् ॥ २३ ॥

यथा चन्दनस्यैकस्मिन् प्रदेशे स्थितस्य सकलदेहव्यापिशैत्यजनकत्वम्, एवं जीवस्य एकस्मिन् प्रदेशे स्थितस्यापि सर्वाङ्गव्यापिसुखदुःखजनकत्वमुपपद्यत इत्यर्थः ॥ २३ ॥

चन्दनस्य एकस्मिन् प्रदेशे अवस्थानं प्रत्यक्षदृष्टं, जीवस्य कस्मिन्प्रदेशे अवस्थानमित्यपेक्षायां स्थानविशेषमाह—

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अवस्थितिवैशेष्यात् चन्दनस्य प्रदेशविशेषे अवस्थानस्य प्रत्यक्षसिद्धत्वादिति चेन्न । हृदि हृत्पुण्डरीके अभ्युपगमात् ‘ एष आत्मा हृदि ’ इति श्रुतौ प्रतिपादितत्वादित्यर्थः ॥ २४ ॥

गुणाद्वा लोकवत् ॥ २५ ॥

यथा लोके दीपस्य गृहप्रदेशवर्तित्वेऽपि दीपगुणस्य प्रभायाः सकलगृहव्यापित्वम्, एवं जीवस्य हृत्पुण्डरीकप्रदेशेऽवस्थानेऽपि जीवगुणस्य सुखदुःखादेः सकलशरीरव्यापित्वमुपपद्यत इत्यर्थः ॥ २५ ॥

व्यतिरेको गन्धवत् ॥ २६ ॥

यथा गन्धस्य वृक्षपुष्पं विनापि वायुवशादन्यत्र गमनम्, एवं सुखादेः जीवं विनापि सकलदेहव्यापित्वमुपपद्यत इत्यर्थः ॥ २६ ॥

तथा च दर्शयति ॥ २७ ॥

हृदयायतनत्वमात्मनो विधाय तस्यैव ‘आलोमभ्य आनखाग्रेभ्यः’ इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयतीत्यर्थः ॥ २७ ॥

जीवब्रह्मणोरभेदात् ब्रह्मणो विभुत्वाज्जीवस्यापि विभुत्वमित्याशङ्कां निराकरोति—

पृथगुपदेशात् ॥ २८ ॥

‘ द्वा सुपर्णा ’ इत्यादिश्रुतौ जीवब्रह्मणोः भेदव्यपदेशात् अभेदो नास्तीत्यर्थः ॥ २८ ॥

सिद्धान्तसूत्राणि—

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तस्य अन्तःकरणस्य गुणाः अणुपरिमाणकर्तृत्वभोक्तृत्वादयः, तत्सारत्वात् तद्विशिष्टत्वात् जीवस्य तद्व्यपदेशः अणुत्वव्यपदेशः प्राज्ञवत् परमात्मवत् यथा परमात्मनः उपासनार्थमणुत्वव्यपदेशः, तद्वदित्यर्थः ॥२९॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

यावदात्मभावित्वात् आत्मसाक्षात्कारपर्यन्तमन्तःकरणस्य सुषुप्तिकालेष्वपि सूक्ष्मरूपेण विद्यमानत्वान्न दोषः सुषुप्त्यनन्तरमपि पुनरुत्थानमुपपद्यत इत्यर्थः ॥ ३० ॥

अन्तःकरणस्य ब्रह्मसाक्षात्कारपर्यन्तमवस्थानाङ्गीकारोऽसङ्गतः । प्रतिदिनमपि सुषुप्तिकालेऽन्तःकरणस्य श्रुतिषु विनाशप्रतिपादनादित्याशङ्क्याह—

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

अस्यान्तःकरणस्य सतः सुषुप्त्यादिकालेष्वपि सूक्ष्मरूपेण विद्यमानस्य जाग्रदादिकालेषु अभिव्यक्तियोगात् स्थूलावस्थाङ्गीकारात्। तथा च सुषुप्त्यादिकालेषु अन्तःकरणस्य सूक्ष्मावस्थाविशिष्टत्वेन घटपटादिविषयकज्ञानजननाक्षमत्वमात्रेण श्रुतिषु विनाशित्वप्रतिपादनम्। पुंस्त्ववत् यथा पुंस्त्वस्य प्रजननेन्द्रियस्य बाल्यावस्थायां सूक्ष्मरूपेण विद्यमानस्य यौवनावस्थायामभिव्यक्तिः पुत्रोत्पादनसामर्थ्यं, तद्वदित्यर्थः ॥ ३१ ॥

सर्वदा अन्तःकरणस्य सूक्ष्मावस्था वा, स्थूलावस्था वा भवत्वित्याशङ्क्याह—

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ ३२ ॥

अन्यथा अन्तःकरणस्य सर्वदा स्थूलत्वे नित्योपलब्धिप्रसङ्गः सर्वदा घटपटाद्युपलब्धिप्रसङ्गः। सर्वदा सूक्ष्मत्वे नित्यानुपलब्धिप्रसङ्गः कदाचित् घटपटाद्युपलब्धिर्न स्यात्। तस्मादन्यतरानियमः कदाचिन् स्थूलावस्था, कदाचित् सूक्ष्मावस्था च अङ्गीकर्तव्येत्यर्थः ॥ ३२ ॥

कर्त्रधिकरणम् ॥ १४ ॥

बुद्धिः कर्त्री, पुरुषः पुण्यपापफलभोक्तेति सांख्यमतं निराकरोति—

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

जीव एव कर्ता 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति शास्त्रस्यार्थवत्त्वात् प्रमाणत्वात् बुद्धेः कर्मकर्तृत्वे जीवस्य स्वर्गनरकभोगासंभवादित्यर्थः ॥ ३३ ॥

विहारोपदेशात् ॥ ३४ ॥

जीवस्य स्वर्गनरकसंचारोपदेशाच्च पुण्यपापकर्तृत्वमङ्गीकर्तव्यमित्यर्थः ॥ ३४ ॥

उपादानात् ॥ ३५ ॥

मरणानन्तरं देवशरीरनारकशरीरपरिग्रहाच्च जीवस्य पुण्यपापकर्तृत्वमङ्गीकर्तव्यमित्यर्थः ॥ ३५ ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

'अनुमन्ता बोद्धा विज्ञाता' इति श्रुतौ क्रियायां कर्तृत्वव्यपदेशाच्च जीवस्य कर्तृत्वमङ्गीकर्तव्यम्। न चेत् जीवस्य कर्तृत्वं नास्ति चेत्, नि-

देशस्य विपर्ययः स्यात् कर्तृत्वप्रतिपादकवाक्यस्याप्रामाण्यं स्यादित्यर्थः ॥ ३६ ॥

जीवस्य कर्तृत्वाङ्गीकारे सुषुप्त्यादिकालेष्वपि कर्तृत्वं स्यादित्याशङ्कां निराकरोति—

**उपलब्धिवदनियमः ॥ ३७ ॥**

सांख्यमते जीवस्य ज्ञानस्वरूपत्वेऽपि यथा सुषुप्तिकाले घटपटाद्युपलब्धृत्वं नास्ति, तद्वज्जीवस्य कर्तृत्वमिति मतेऽपि कदाचिदेव कर्तृत्वं, न सर्वदैवेत्यर्थः ॥ ३७ ॥

**शक्तिविपर्ययात् ॥ ३८ ॥**

बुद्धेः कर्तृत्वाङ्गीकारे शक्तिविपर्ययात् करणशक्त्यभावप्रसङ्गाच्च न बुद्धेः कर्तृत्वमित्यर्थः ॥ ३८ ॥

**समाध्यभावाच्च ॥ ३९ ॥**

जीवस्य पुण्यपापकर्तृत्वाभावे समाध्यभावात् श्रवणमननिदिध्यासनकर्तृत्वस्याप्यभावात् जीवस्य मोक्षो न स्यादित्यर्थः। न च बुद्धेरेव मोक्ष इति वाच्यम्। बुद्धेर्मोक्षकाले नष्टत्वेन मोक्षासंभवादिति भावः ३९

तक्षाधिकरणम् ॥ १५ ॥

सांख्यमतं निराकृत्य स्वाभाविककर्तृत्ववादिनां नैयायिकानां मतं निराकरोति—

**यथा च तक्षोभयथा ॥ ४० ॥**

यथा तक्षणव्यापारकर्ता उभयथा उभयरूपेण तिष्ठति, कदाचिद्वासीटङ्कादिसाधनविशिष्टः सन् दारूणि तक्षन् क्लेशमनुभवति, टङ्कादिरहितः सन् निर्व्यापारः सुखमनुभवति, एवं जीवोऽपि जाग्रत्स्वप्नकालयोः देहाद्यभिमानविशिष्टः सन् लौकिकवैदिकव्यापारान् कुर्वन् दुःखमनुभवति, सुषुप्तिकाले तु देहाद्यभिमानाभावात् देहेन्द्रियव्यापाररहितः सन् सुखमनुभवति। तस्माज्जीवस्य औपाधिकमेव कर्तृत्वं, न स्वाभाविकमित्यर्थः ॥ ४० ॥

पराधिकरणम् ॥ १६ ॥

**परात्तु तच्छ्रुतेः ॥ ४१ ॥**

तत् जीवस्य पुण्यपापकर्तृत्वं परात् परमात्मप्रेरणात् भवति। कुतः श्रुतेः 'एष ह्येव साधु कर्म कारयति' इत्यादिश्रुतेरित्यर्थः ॥ ४१ ॥

ईश्वरस्य स्वतन्त्रत्वात् कर्मानपेक्ष्यापि फलदातृत्वमस्तीति शङ्कां निराकरोति—

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

ईश्वरः जीवकृतकर्मापेक्षः सन् जीवानां सुखं दुःखं च ददाति विहितानां प्रतिषिद्धानां च कर्मणामवैयर्थ्यादिभ्यः अवैयर्थ्यार्थमित्यर्थः। अन्यथा विधिनिषेधशास्त्रस्याप्रामाण्यं स्यादित्यर्थः ॥ ४२ ॥

अंशाधिकरणम् ॥ १७ ॥

नैयायिकादयो जीवब्रह्मणोर्भेदं वदन्ति, तन्मतं निराकरोति—

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

नानाव्यपदेशात् 'द्वा सुपर्णा' इत्यादिश्रुतौ जीवब्रह्मणोर्भेदव्यपदेशात् अन्यथा चापि 'तत्त्वमसि' इत्यादिश्रुतौ अभेदस्यापि व्यपदेशात् जीवा ब्रह्मणः अंशाः। भेदप्रतिपादकश्रुतेः स्पष्टत्वात् तामुपेक्ष्य अभेदप्रतिपादिकां श्रुतिमाह—दाशकितवादित्वमधीयत एके, एके शाखिनः ब्रह्मणः दाशकितवादित्वं जीवाभेदम् अधीयते वदन्ति—'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिश्रुतिष्वित्यर्थः। न च भेदाभेदयोर्विरोध इति वाच्यम्। विम्बप्रतिविम्बयोरिव भेदस्य मिथ्यात्वात्। ननु, 'द्वा सुपर्णा' इत्यादिश्रुतिप्रतिपादितस्य भेदस्य मिथ्यात्वमनुपपन्नमिति चेन्न। फलवदज्ञातेऽर्थे श्रुतेस्तात्पर्यम्। न च जीवब्रह्मभेदानुभवात् किंचित्फलमनुभूयते। भेदज्ञानिनां तापत्रयस्यैव सर्वानुभवसिद्धत्वात्। नापि भेदस्याज्ञातत्वम्। पामराणामपि जीवब्रह्मभेदस्यानुभूयमानत्वात् जीवब्रह्माभेदज्ञानात् तापत्रयनिवृत्तिरूपफलस्यानुभूयमानत्वात् अभेदस्य पामरैरज्ञातत्वाच्च अभेद एव श्रुतीनां तात्पर्यमिति भेदस्य मिथ्यात्वात् अभेदस्य सत्यत्वाच्च विरोधाभावादिति भावः ॥४३॥

मन्त्रवर्णाच्च ॥ ४४ ॥

'एतावानस्य महिमा। अतो ज्यायांश्च पुरुषः। पादोऽस्य विश्वा भूतानि' इति मन्त्रात् विश्वा भूतानि अस्य पादः अंश इत्यर्थः ॥४४॥

अपि च स्मर्यते ॥ ४५ ॥

'ममैवांशो जीवलोके' इति स्मृतौ जीवानां ब्रह्मांशत्वं स्मर्यत इत्यर्थः ॥ ४५ ॥

तन्तूनां पङ्कादिस्पर्शे सति पटस्यापि पङ्कस्पर्शवत् अंशानां जीवानां सुखदुःखभयशोकादिसंस्पर्शे सति अंशिनः परमात्मनोऽपि सुखदुःखादिसंस्पर्शः स्यादित्याशङ्कयाह—

प्रकाशादिवन्नैवं परः ॥ ४६ ॥

परः परमात्मा एवं न भवति जीववत् सुखदुःखादिमान्न भवति । प्रकाशादिवत् यथा गृहान्तर्वर्ती सूर्यप्रकाशः जालकाद्युपाधिवशात् ह्रस्वत्वदीर्घत्ववर्तुलत्वादिविचित्रधर्मवान् भवति, गृहात् बहिःप्रदेशे विद्यमानस्तु सूर्यप्रकाशः स्वच्छ एव तिष्ठति, यथा वा घटादिपदार्थान्तर्वर्ती आकाशः ह्रस्वत्वदीर्घत्वादिधर्मवान् भवति, घटाद्बहिःप्रदेशे विद्यमानस्तु आकाशः स्वच्छ एव, एवं देहान्तर्वर्ति जीवचैतन्यं देहाभिमानवशात् सुखदुःखादिविशिष्टं भवति, देहात् बहिर्विद्यमानं तु ब्रह्मचैतन्यं देहाभिमानरहितत्वात् भयशोकरहितं सत् स्वच्छं तिष्ठतीति भावः ॥ ४६ ॥

स्मरन्ति च ॥ ४७ ॥

'यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते' इति स्मृतौ ब्रह्मणः भयशोकादिरहितत्वं स्मरन्तीत्यर्थः ॥ ४७ ॥

अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

अनुज्ञापरिहारौ विधिनिषेधावपि देहसंबन्धात् ज्योतिरादिवत् देहाभिमानवशात् जीवानामेव, न तु देहाभिमानरहितब्रह्मणः सूर्यप्रकाशादिपूर्वोक्तदृष्टान्तैरित्यर्थः ॥ ४८ ॥

वेदान्तिमते जीवानां परस्परमभिन्नत्वात् एकस्य जीवस्य सुखे सति सर्वेषां जीवानां सुखं स्यात्, एकस्य जीवस्य दुःखे सति सर्वेषां जीवानां दुःखं स्यात् । तथा च केषांचिद्दारिद्र्यं, केषांचिदैश्वर्यं न स्यादित्याशङ्क्याह—

असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

असन्ततेः अविभुत्वात् ब्रह्मज्ञानपर्यन्तं देहोपाधिभेदेन जीवानां परिच्छिन्नत्वात् भिन्नत्वाच्च अव्यतिकरः सुखदुःखादीनामसाङ्कर्यमित्यर्थः ॥ ४९ ॥

आभास एव च ॥ ५० ॥

वेदान्तिमते जीव आभासः ब्रह्मणः प्रतिबिम्बः । तथा च जीवाना-

मन्तःकरणेषु प्रतिबिम्बितचैतन्यरूपाणामन्तःकरणभेदेन भिन्नत्वात् परिच्छिन्नत्वाच्च सुखदुःखादिसांकर्यं नास्तीत्यर्थः ॥ ५० ॥

स्वमतं प्रसाध्य परमतं दूषयति—

अदृष्टानियमात् ॥ ५१ ॥

नैयायिकमते जीवानां विभुत्वेन सर्वेषां जीवानां सर्वशरीरेषु विद्यमानत्वात् अदृष्टानियमात् अदृष्टानां पुण्यपापानाम् अनियमात् नियमाभावात् केषांचित् दारिद्र्यं, केषांचिदैश्वर्यमिति व्यवस्था न स्यादित्यर्थः ॥ ५१ ॥

अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंध्यादिषु रागद्वेषादिष्वपि एवमनियमः । तथा च केषांचित् जीवानां रागवत्त्वं केषांचिद्द्वेषवत्त्वमिति व्यवस्था न स्यादित्यर्थः ॥ ५२ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

प्रदेशाद्देहाद्युपाधिवशेन परिच्छिन्नत्वाज्जीवानां सुखदुःखादिव्यवस्था उपपद्यत इति चेन्न । अन्तर्भावादस्मन्मतप्रवेशापत्तेः । नैयायिकानामपसिद्धान्तप्रसङ्ग इत्यर्थः ॥ ५३ ॥

इति ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य तृतीयः पादः ।

---

## द्वितीयाध्यायस्य चतुर्थः पादः ।

प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

तथा प्राणाः ॥ १ ॥

तथा पञ्चमहाभूतवत् प्राणाः इन्द्रियाण्यपि ब्रह्मणः उत्पद्यन्ते । ‘ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ’ इतिश्रुतौ इन्द्रियाणामुत्पत्तिश्रवणादित्यर्थः ॥ १ ॥

गौण्यसंभवात् ॥ २ ॥

इन्द्रियाणां नित्यत्वात् उत्पत्तिश्रुतिर्गौणीति चेन्न । असंभवात् गौणत्वासंभवात् । ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं मुख्यमेव इन्द्रियाणामपि ब्रह्मजन्यत्वं वक्तव्यमित्यर्थः ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

तेषां पञ्चमहाभूतानां प्राक् आदौ इन्द्रियाणामुत्पत्तिश्रवणाच्च इन्द्रियाणामुत्पत्तिः मुख्यैव । अन्यथा पञ्चमहाभूतानामपि उत्पत्तिर्गौणी स्यादित्यर्थः ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति श्रुतौ वाचः वागिन्द्रियस्य तत्पूर्वकत्वात् तेजोजन्यत्वाभिधानात् तद्दृष्टान्तेन सर्वेषामिन्द्रियाणां यथायोग्यं महाभूतजन्यत्वं वक्तव्यमिति अनित्यत्वमिन्द्रियाणामित्यर्थः ॥ ४ ॥

सप्तगत्यधिकरणम् ॥ २ ॥

इन्द्रियाणां संख्यानिर्णयं करोति—

पूर्वपक्षः—

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

इन्द्रियाणि सप्त । कुतः ? 'सप्त प्राणाः प्रभवन्ति तस्मात्' इति श्रुतौ सप्तानामिन्द्रियाणां गतेः परलोकगमनस्य विशेषितत्वादुक्तत्वादित्यर्थः । चक्षुश्श्रोत्रत्वग्जिह्वाघ्राणज्ञानेन्द्रियाणि पञ्च । वागिन्द्रियमेकम्, अन्तःकरणमेकम्, एतानि सप्तेन्द्रियाणि ॥ ५ ॥

सिद्धान्तः—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

हस्तादयः पाणिपादपायूपस्थान्यपि जीवे स्थिते सति जीवेन सह शरीरे तिष्ठन्ति । जीवे लोकान्तरं गते सति जीवेन सह लोकान्तरं गच्छन्ति । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतौ सर्वेषामिन्द्रियाणां जीवेन सह परलोकगमनश्रवणात् । अतः अस्मात् कारणात् नैवं सप्तेन्द्रियाणि, किं तु एकादशेन्द्रियाणीत्यर्थः । एकमेवान्तःकरणं संशयात्मकत्वान्मन इत्युच्यते, निश्चयात्मकत्वात् बुद्धिः, अभिमानात्मकत्वादहङ्कार इत्युच्यते, स्मरणात्मकत्वाच्चित्तमित्युच्यते । तथा च न संख्याधिक्यमिति भावः ॥ ६ ॥

प्राणाणुत्वाधिकरणम् ॥ ३ ॥

## अणवश्च ॥ ७ ॥

इन्द्रियाणि अणवः सूक्ष्माणि अप्रत्यक्षाणीत्यर्थः ॥ ७ ॥

प्राणश्रैष्ठ्याधिकरणम् ॥ ४ ॥

श्रेष्ठश्च ॥ ८ ॥

श्रेष्ठः मुख्यः प्राणश्च ब्रह्मजन्यः 'एतस्माज्जायते प्राणः' इतिश्रुतौ तस्यापि जन्यत्वादित्यर्थः ॥ ८ ॥

वायुक्रियाधिकरणम् ॥ ५ ॥

वायुर्वा, वागादिक्रिया वा प्राण इति केचन वदन्ति, तन्मतं निराकरोति—

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

वायुक्रिये प्राणो न भवतः । कुतः ? पृथगुपदेशात् "एतस्माज्जायते प्राणः" इति श्रुतौ वायुप्राणयोः पृथगुत्पत्तिव्यपदेशादित्यर्थः ॥९॥

वायुप्राणयोर्भेदाङ्गीकारे प्राणः केनोत्पन्न इत्याकाङ्क्षायामाह—

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

चक्षुरादि चक्षुरादीन्द्रियाणि यथा महाभूतजन्यानि, तद्वत् प्राणः मुख्यवायुजन्यः कश्चन पदार्थः । कुतः ? तत्सहशिष्ट्यादिभ्यः तैश्चक्षुरादिभिः प्राणस्य सहशिष्टिः सहपाठः, तदादिभ्यः हेतुभ्य इत्यर्थः । सर्वासु श्रुतिषु चक्षुरादीनामिन्द्रियाणां सन्निधौ प्राणस्य पठितत्वात् इन्द्रियसाहचर्यात् चक्षुरादिवत् प्राणोऽपि भौतिक इति भावः ॥ १० ॥

यथा ज्ञानेन्द्रियाणां रूपरसगन्धस्पर्शादयः पञ्च विषयाः, यथा कर्मेन्द्रियाणां वक्तव्यादातव्यगन्तव्यविसर्जयितव्यानन्दयितव्याः पञ्च विषयाः, एवं प्राणस्यापि इन्द्रियत्वात् कश्चन विषयो वक्तव्य इत्याशङ्क्य निराकरोति—

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

प्राणस्याकरणत्वात् अनिन्द्रियत्वात् न दोषः विषयाभावप्रयुक्तदोषो नास्ति । तर्हि प्राणस्य व्यर्थत्वमेव स्यादित्याशङ्क्याह—तथा हि दर्शयति । 'प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति' इति श्रुतिः प्राणस्य शरीरोत्थापकत्वरूपं कार्यान्तरं दर्शयति । तथा च न व्यर्थत्वं प्राणस्येत्यर्थः ॥ ११ ॥

इदानीं प्राणस्य निर्णयं करोति—

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

---

१ वायुनिष्ठचलनक्रिया वेति पाठः ।

एक एव प्राणः पञ्चवृत्तिः पञ्चव्यापारवान् सन् व्यपदिश्यते प्राणापानादिशब्दैः पञ्चधा व्यवह्रियते। मनोवत् यथा एकमेव मनः मनोबुद्ध्यहङ्कारचित्तभेदेन चतुर्धा व्यवह्रियते, तद्वदित्यर्थः॥ १२॥

श्रेष्ठाणुत्वाधिकरणम्॥ ६॥

अणुश्च॥ १३॥

अयं मुख्यप्राणोऽपि अणुः सौक्ष्म्यपरिमाणवान्। इन्द्रियवदित्यर्थः १३

ज्योतिराद्यधिष्ठानाधिकरणम्॥ ७॥

ज्योतिराद्यधिष्ठानं तु तदामननात्॥ १४॥

तानि वागादीनीन्द्रियाणि ज्योतिरादीनामग्न्यादीनामधिष्ठानं निवासस्थानानि। कुतः? तदामननात् 'अग्निर्वाग्भूत्वा मुखं प्राविशद्' इति श्रुतौ तासां सूर्यादिदेवतानाम् आमननात् मुखादिस्थानेषु प्रवेशकथनादित्यर्थः॥ १४॥

प्राणवता शब्दात्॥ १५॥

प्राणवता जीवेन सह सूर्यादिदेवतानामिन्द्रियप्रेरकत्वं, न स्वातन्त्र्येण। कुतः? शब्दात् इन्द्रियाभिमानिदेवतानां जीवकृतकर्मानुसारेणैव इन्द्रियप्रेरकत्वश्रुतिबलादित्यर्थः॥ १५॥

तस्य च नित्यत्वात्॥१६॥

तस्य जीवस्य नित्यत्वात् प्राणैर्नित्यसंबन्धत्वात् जीव एव भोक्तेत्यर्थः॥ १६॥

इन्द्रियाधिकरणम्॥ ८॥

सर्वदा इन्द्रियव्यापारजन्यसुखदुःखात्मकफलभोक्तृत्वात् जीवस्यैव इन्द्रियप्रेरणा। तत्र केचित् प्राणात्पृथक् इन्द्रियाण्येव न सन्ति। कथं जीवस्य इन्द्रियप्रेरणेति वदन्ति। तन्मतं निराकरोति—

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥ १७॥

श्रेष्ठादन्यत्र मुख्यं प्राणं वर्जयित्वा ते चक्षुरादय एव इन्द्रियाणि। कुतः? तद्व्यपदेशात् चक्षुरादीनामेव सर्वासु श्रुतिषु इन्द्रियत्वेन व्यपदेशादित्यर्थः॥ १७॥

भेदश्रुतेः॥ १८॥

'एतस्माज्जायते प्राणः' इति श्रुतौ इन्द्रियाणां प्राणस्य च पृथगुत्पत्तिश्रवणाच्च प्राणस्य नेन्द्रियेष्वन्तर्भाव इत्यर्थः ॥ १८ ॥

वैलक्षण्याच्च ॥ १९ ॥

अनेकेषु मन्त्रवर्णेषु प्राणेन्द्रिययोर्भेदव्यपदेशात् न प्राणस्येन्द्रियत्वमित्यर्थः ॥ १९ ॥

संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ९ ॥

पञ्चमहाभूतमात्रकर्तृत्वं परमात्मनः, चराचरशरीरकर्तृत्वं तु हिरण्यगर्भस्यैवेति केचन वदन्ति । तन्मतं निराकरोति—

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

त्रिवृत्कुर्वतः त्रिवृत्करणकर्तुः परमात्मनः सकाशादेव संज्ञामूर्तिक्लृप्तिः नामरूपात्मकचराचरशरीरसृष्टिर्भवति । कुतः ? उपदेशात् 'सेयं देवतैक्षत' इति श्रुतौ परमात्मन एव नामरूपात्मकशरीरसृष्टिकर्तृत्वोपदेशादित्यर्थः । सूत्रधार इव परमात्मैव हिरण्यगर्भशरीरे स्थित्वा चराचरशरीरनिर्माणं करोतीति भावः ॥ २० ॥

त्रिवृत्करणप्रकारमुपपादयति—

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥

मांसादिकं भौमं भूमिजन्यम् इतरयोः अप्तेजसोरपि कार्यं यथाशब्दं शब्दानुसारेण ज्ञातव्यमित्यर्थः । अपां कार्यं लोहितादिकं, तेजसः कार्यमस्थ्यादिकमिति भावः । केचिद्वायुकार्यस्य प्राणस्य विद्यमानत्वात् आकाशकार्यस्य अवकाशप्रदानादेश्च सत्त्वात् पाञ्चभौतिकत्वं शरीराणां वदन्तितदप्यर्थादुक्तमिति भावः ॥ २१ ॥

शरीराणां पाञ्चभौतिकत्वाङ्गीकारे लोके पार्थिवत्वव्यवहारः कथमित्याशङ्क्याह—

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

वैशेष्यात् पृथ्वीकार्यस्य मांसादेः आधिक्यात् तद्वादः पामराणां पार्थिवत्वव्यवहार इत्यर्थः । तद्वादस्तद्वाद इति द्विरुक्तिः अध्यायपरिसमाप्तिद्योतनार्था ॥ २२ ॥

इति ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः ।

---

अध्यायश्च संपूर्णः ॥

श्रीमच्छंकरभगवत्पादशिष्यप्रणीता

# ब्रह्मसूत्रवृत्तिः ।

## ( अद्वैतमञ्जरी )

### तृतीयाध्यायस्य प्रथमः पादः ।

तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

सुकृतिनां दुष्कृतिनां च स्वर्गनरकगमनागमनजन्यबहुक्लेशवत्त्वात् स्वर्गादिलोकेभ्यो विरज्य मोक्षार्थं ब्रह्मज्ञानमेव संपादनीयमिति वक्तुं प्रथमं सुकृतिनां स्वर्गलोकगमनागमनप्रकारं दर्शयति—

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

तदन्तरप्रतिपत्तौ लोकान्तरप्राप्तिसमये लिङ्गशरीरपरिवेष्टितो जीवः अस्मिन् लोके अग्नौ हुतैः अदृष्टशब्दवाच्यैः समित्पुरोडाशदधिक्षीरसोमरसचरुदर्भाज्यप्रभृतिभिः द्रव्यैः सूक्ष्मरूपैः संपरिष्वक्तः परिवेष्टितः सन् धूमादिमार्गेण स्वर्गलोकं रंहति गच्छति । कुतः ? प्रश्नप्रतिवचनाभ्यां 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नः, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रतिवचनम्, उभाभ्यामित्यर्थः । अस्याः श्रुतेरयमर्थः—पञ्चम्यामाहुतौ योषिद्रूपे पञ्चमे अग्नौ हुता आपः दधिक्षीराज्यप्रभृतयः होमद्रव्यरूपाः पुरुषवचसः गर्भस्थपिण्डाकारेण परिणताः यथा भवन्ति, तथा वेत्थ जानासि किम् इति केनचित् प्रश्ने कृते, इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रत्युत्तरम् । अस्यायमर्थः—अस्मिन् लोके यजमानेन अग्नौ हुतानि समित्पुरोडाशाज्यदधिक्षीरप्रभृतीनि द्रव्याणि सूक्ष्मरूपाणि भूत्वा लिङ्गशरीरविशिष्टेन यजमानेन सह धूमादिमार्गेण आतिवाहिकैः द्युलोकाख्येऽग्नौ हूयन्ते हुतानि । तानि देवशरीररू-

पेण परिणमन्ते। तच्च देवशरीरं कञ्चित् कालं स्वर्गलोके भोगान् भुक्त्वा पुण्यपापक्षयानन्तरं नवनीतवत् द्रवीभूतं भवति। तच्च द्रवीभूतं शरीरमातिवाहिकैः देवैः पर्जन्याख्ये अग्नौ हूयते। तच्च जलरूपेण परिणमते। तच्च जलं पृथिव्याख्ये अग्नौ आतिवाहिकैः हूयते। तच्च ओषधिद्वारा व्रीहियवादिधान्यरूपेण परिणमते। तच्च धान्यमन्नद्वारा पुरुषरूपे अग्नौ हूयते। तच्चान्नं रेतोरूपेण परिणमते। तच्च रेतः योषिद्रूपेऽग्नौ हूयते। तच्च रेतः गर्भस्थशरीराकारेण परिणमत इति द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्निक्रमेण गर्भोत्पत्तिरित्यर्थः॥ १॥

त्र्यात्मकत्वात्तु भूयस्त्वात्॥ २॥

समित्पुरोडाशादीनां पार्थिवत्वं, दधिक्षीरादीनामाप्यत्वं, घृतस्य तैजसत्वमित्येवंरूपेण होमद्रव्याणां त्र्यात्मकत्वात् त्रिपदार्थत्वात् 'आपः पुरुषवचसो भवन्ति' इत्येतदनुपपन्नमिति चेन्न। भूयस्त्वात् होमद्रव्याणां मध्ये अपां बाहुल्यमात्रेण अप्छब्दप्रयोगः। तथा चाप्छब्दस्य पार्थिवाप्यतैजसद्रव्याणामुपलक्षणत्वान्न विरोध इति भावः॥ २॥

प्राणगतेश्च॥ ३॥

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतौ प्राणानामिन्द्रियाणां जीवेन सह धूमादिमार्गेण स्वर्गलोकगमनश्रवणाच्च होमद्रव्याणामपि जीवेन सह गमनमङ्गीकर्तव्यमित्यर्थः॥ ३॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्॥ ४॥

'अग्निं वागप्येति सूर्यं चक्षुरप्येति मनश्चन्द्रमप्येति' इत्यादिश्रुतौ मरणकाले इन्द्रियाणां तदभिमानिदेवतासु लयश्रवणात् इन्द्रियाणां जीवेन सह स्वर्गलोकप्राप्तिरनुपपन्नेति चेन्न। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इत्यादिबहुश्रुतिविरोधेन अग्न्याद्यभिमानिदेवतासु लयप्रतिपादकश्रुतेः भाक्तत्वात् गौणत्वात् अप्रमाणत्वादित्यर्थः॥ ४॥

प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः॥ ५॥

'अस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रुतौ द्युलोकाख्ये प्रथमेऽग्नौ श्रद्धाया एव हूयमानत्वश्रवणात् दधिक्षीरादीनां द्युलोकाख्येऽग्नौ हूयमानत्वमसङ्गतमिति चेन्न। ता एव श्रद्धापूर्वकं हुताः दधिक्षीरादि-

रूपाः आप एव श्रद्धाशब्देन लक्षणया प्रतिपाद्यन्ते । कुतः ? दधिक्षीरादीनामेव होतव्यत्वस्य उपपन्नत्वात् श्रद्धाया निराकाराया होतव्यत्वानुपपत्तेरित्यर्थः ॥ ५ ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥**

कर्मिणामेव स्वर्गलोकगमनस्य अश्रुतत्वात् तैः सह होतव्यद्रव्याणां गमनं सुतरामनुपपन्नमिति चेन्न । इष्टादिकारिणां धूमादिमार्गेण स्वर्गलोकगमनस्य 'ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्र्या अपरपक्षमपरपक्षाद्दक्षिणायनम्' इत्यादिषु श्रुतिषु प्रतीतेः प्रतिपाद्यमानत्वादित्यर्थः ॥६॥

अस्तु कर्मिणां स्वर्गलोकगमनं, तेषां स्वर्गलोके भोगो न संभवति । 'तं देवा भक्षयन्ति' इति श्रुतौ स्वर्गलोकगमनानन्तरमेव कर्मिणां देवभक्ष्यत्वश्रवणात् व्याघ्रादिभिरिव देवैर्भक्षितानां कर्मिणां भोगासंभवादित्याशङ्क्याह—

**भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥**

'तद्देवानामन्नम्' इत्यादिश्रुतौ कर्मिणां देवभृत्यत्वमात्रेण देवभक्ष्यत्वं भाक्तं गौणम् । कुतः ? अनात्मवित्त्वात् कर्मिणामात्मज्ञानरहितत्वात् । तथा हि दर्शयति आत्मज्ञानरहितानां देवभृत्यत्वम्, अथ योऽन्यां देवतामुपास्ते, इति श्रुतिर्दर्शयतीत्यर्थः । 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः एवं तद्देवानाम्' इति श्रुतेरयमर्थः—यः अन्याम् आत्मव्यतिरिक्तेन्द्रादिदेवतां यज्ञादिकर्मभिः उपास्ते पूजयति, असौ इन्द्रादिः मत्तोऽन्यः अहं च इन्द्रादेरन्य इति भेदबुद्ध्या यः इन्द्रादीन् पूजयति, सः तत्त्वं न वेद । यथा पशुः कर्षन् कर्षकाणां कृष्यादिनोपकरोति, एवं कर्मठोऽपि इहलोके इन्द्रादीनां हविःप्रदानं कुर्वन् परलोकेऽपि परिचर्यां कुर्वन् पशुवदुपकरोति । तथा च देवपशुत्वमात्रेण कर्मिणां देवभक्ष्यत्वं, न व्याघ्रादिवत् कर्मिणां मांसरुधिरादिकं देवा भक्षयन्तीति । तेषाममृतभक्षकत्वेन मांसभक्षकत्वाभावादिति भावः ॥ ७ ॥

कृतात्ययाधिकरणम् ॥ २ ॥

एवं सुकृतिनां स्वर्गलोकगमनं, तत्र भोगं च प्रतिपाद्य पुनरागमनप्रकारं दर्शयति—

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

कृतात्यये स्वर्गोद्देशेन कृतस्य पुण्यस्य अत्यये नाशे सति यथा येन मार्गेण स्वर्गलोकं प्रति इतं गमनं, तेन मार्गेण वा, अनेवं मार्गान्तरेण वा । वा मार्गान्तरेणेत्येतदनास्थया उक्तम् । तेनैव मार्गेणेति सिद्धान्तः । अनुशयवान् भुक्तावशिष्टसंचितकर्मवान् भूलोकमागच्छति । आगत्य च संचितकर्मानुसारेण रमणीयां योनिं वा, कुत्सितयोनिं वा प्राप्नोति । कुतः ? दृष्टस्मृतिभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' अत्राकाशवायुधूमादिशब्दा लोकपरा इत्यर्थः । 'त इह व्रीहियवा ओषधिवनस्पतयः तिलमाषा इति जायन्ते ततो दुष्प्रपतरं ततो रमणीयचरणा रमणीयां योनिमापद्यन्ते ब्राह्मणयोनिं वा क्षत्रिययोनिं वा कपूयचरणाः कपूयां योनिमापद्यन्ते श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' इति श्रुतिः, 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्मृतिः, ताभ्यामित्यर्थः ॥ ८ ॥

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

'रमणीयचरणा' इति श्रुतौ चरणात् शौचाचमनस्नानसंध्याजपोपासनादिरूपात् स्मृत्युक्ताचारात् स्वर्गात् पुनरागतानां कर्मिणां योनिप्राप्तिः प्रतीयते, न तु वेदोक्ताग्निहोत्रादिकर्मिणः । तथा च संचितकर्मवशाद्योनिप्राप्तिरित्येतदयुक्तमिति चेन्न । 'रमणीयचरणा' इति श्रुतिः आचाराङ्गकवैदिककर्मोपलक्षणार्था इति कार्ष्णाजिनिर्मन्यत इत्यर्थः । आचारवाचकेन चरणशब्देन अजहल्लक्षणया आचाराङ्गकं कर्म प्रतिपाद्यत इति भावः ॥ ९ ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

वैदिककर्मण एव रमणीययोनिप्राप्तिहेतुत्वसंभवात् स्मृत्युक्तस्याचारस्य आनर्थक्यं वैयर्थ्यम् । तथा च चरणशब्दस्य जहल्लक्षणैवाङ्गीकर्तव्येति चेन्न । तदपेक्षत्वात् आचारापेक्षत्वात् कर्मणः, आचारस्य वैयर्थ्यं नास्तीत्यर्थः । 'आचारहीनं न पुनन्ति वेदाः' इति श्रुतौ आचारस्य कर्माङ्गत्वबोधनात् अङ्गरहितस्याङ्गिनः फलजनकत्वाभावात् आचारसहितमेव वैदिकं कर्म फलजनकम् । तथाच चरणशब्दस्य अजहल्लक्षणैवाङ्गीकर्तव्येति भावः ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

रमणीयचरणशब्देन कपूयचरणशब्देन च सुकृतदुष्कृते एव शक्त्या प्रतिपाद्येते इति बादरिर्मन्यते। तथा च अङ्गिना कर्मणा अङ्गस्याचारस्य अर्थादाक्षिप्तत्वाच्च चरणशब्दस्य लक्षणा न वक्तव्येति भावः ॥ ११ ॥

अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

इयता सूत्रसंदर्भेण सुकृतिनां स्वर्गलोकगमनागमने प्रतिपाद्य इदानीं दुष्कृतिनां नरकलोकगमनागमने प्रतिपादयितुं प्रथमं पूर्वपक्षमाह—

पूर्वपक्षः—

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

'ये वै केचिदस्माल्लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुतौ इष्टादिकारिणामनिष्टादिकारिणां सर्वेषामपि अविशेषेण स्वर्गादिलोकगमनं श्रुतं प्रतिपादितमित्यर्थः। इष्टादिकारिणो न भवन्तीति ह्यनिष्टादिकारिणः दुष्कृतिन इत्यर्थः। श्रुतेरयमर्थः—ये केचन अस्मात् भूलोकात् प्रयान्ति मरणानन्तरं भूलोकं परित्यज्य ये गच्छन्ति, ते सर्वे सुकृतिनो वा दुष्कृतिनो वा चन्द्रमसा स्वर्गलोकं गच्छन्तीत्यर्थः ॥ १२ ॥

सिद्धान्तः—

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

इतरेषां पापिनां संयमने नरकलोके अनुभूय दुःखमनुभूय आरोहावरोहौ प्रथमं नरकं प्रति गमनं कञ्चित्कालं नरकलोके दुःखानुभवानन्तरं पुनरागमनं चेत्येवंविधारोहावरोहौ अङ्गीकर्तव्यौ। कुतः ? तद्गतिदर्शनात् 'वैवस्वतं संगमनं जनानाम्' इत्यादिश्रुतौ पापिनां यमलोकगमनश्रवणादित्यर्थः। तथाच पापिनां नरकलोकगमनश्रवणात् स्वर्गलोकगमनप्रसक्तेरेवाभावात् 'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुतौ सर्वशब्दस्य सुकृतिमात्रे संकोचः कर्तव्य इति भावः। संयमने त्वनुभूयेत्यत्र तु ल्यप्प्रत्ययेन क्रमो न विवक्षित इति द्रष्टव्यम् ॥ १३ ॥

## स्मरन्ति च ॥ १४ ॥

स्मृतिकारा अपि दुष्कृतिनां नरकलोकप्राप्तिं प्रतिपादयन्तीत्यर्थः ॥ १४ ॥

अपि च सप्त ॥ १५ ॥

किंच सप्त प्रधाननरकाणि पापिनां निवासस्थलानि स्मृतिषु प्रतिपाद्यन्त इत्यर्थः ॥ १५ ॥

एकस्य यमस्य कथं सप्तनरकाधिपत्यमित्याशङ्क्याह—

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

तत्रापि सप्तनरकेष्वपि तद्व्यापारात्तस्य यमस्य व्यापारादधिकारिपुरुषद्वारा आज्ञाया अप्रतिहतत्वादविरोधः । यमस्य सप्तनरकाधिपत्ये विरोधो नास्तीत्यर्थः । इदं तु प्रसंगादुक्तं, न प्रकृतोपयुक्तमिति द्रष्टव्यम् ॥ १६ ॥

पापिनां देवयानपितृयाणमार्गेण गमनप्रतिषेधादपि न स्वर्गलोकप्राप्तिरित्याह—

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

विद्याकर्मणोरुपासनाकर्मसंबन्धिनोः देवयानपितृयाणमार्गयोरेव ब्रह्मलोकस्वर्गलोकप्राप्तिसाधनत्वेन प्रकृतत्वात् सर्वासु श्रुतिषु प्रतिपादितत्वात् तयोश्च मार्गयोः 'अथैतयोः पथोर्न कतरेण च' इति श्रुत्या पापिनां प्रतिषेधादपि न पापिनां स्वर्गलोकप्राप्तिप्रसक्तिरित्यर्थः । एतयोर्देवयानपितृयाणयोर्मध्ये कतरेणान्यतरेणापि मार्गेण पापिनां गमनं नास्तीत्यर्थः ॥ १७ ॥

पापिनां मार्गान्तरश्रवणादपि न धूमादिमार्गेण स्वर्गलोकगमनमित्याह—

न तृतीये तथोपलब्धेः ॥ १८ ॥

देवयानपितृयाणमार्गापेक्षया तृतीयमार्गे गच्छतां पापिनां स्वर्गलोकप्राप्तिर्नास्ति । कुतः ? तथोपलब्धेः 'जायस्व म्रियस्वेति तृतीयं स्थानम्' इति श्रुतौ पापिनां तृतीयमार्गस्य प्रतिपादितत्वादित्यर्थः । श्रुतेरयमर्थः—मार्गमध्येऽपि यमदूतानां बाधाभिः जायस्व म्रियस्व पुनर्जन्ममरणभूयिष्ठं तृतीयं स्थानं तृतीयो मार्गः पापिनामित्यर्थः । मार्गमध्येऽपि यातनाशरीरधारिणं पापिनं पुरुषं यमदूता बाधन्ते, तथा बाधया पुनःपुनः मरणं, पुनःपुनः जन्म च पापिनां पुराणेषु प्रसिद्धमिति भावः । 'जायस्व म्रियस्व' इत्यत्र क्रियासमभिहारे लोट्प्रत्ययः ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

लोकेऽपि पापिनां नरकलोकप्राप्तिः स्मर्यते, पामरैरपि व्यवह्रियते इत्यर्थः। तथा च लोकव्यवहारबलादपि पापिनां न स्वर्गलोकप्राप्तिरित्यर्थः ॥ १९ ॥

## दर्शनाच्च ॥ २० ॥

केषांचित् पापिनामिहैव लोके उद्भिज्जस्वेदजादिनिकृष्टजन्मदर्शनादपि न पापिनां स्वर्गलोकप्राप्तिरिति भावः ॥ २० ॥

ननु स्वेदजान्येव न सन्ति 'तेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जरायुजमुद्भिज्जं च' इति त्रिविधानामेव भूतानां प्रतिपादितत्वादित्याशङ्क्याह—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

संशोकजस्य स्वेदजस्यापि तृतीयशब्दावरोधः वृक्षलतापर्वतादिवाचकेन तृतीयशब्देन उद्भिज्जशब्देन अवरोधः अजहल्लक्षणया संग्रह इत्यर्थः। भूतानां चातुर्विध्यमपि प्रसङ्गादुक्तं, न प्रकृतोपयुक्तमिति द्रष्टव्यम् ॥ २१ ॥

तत्साभाव्यापत्त्यधिकरणम् ॥ ४ ॥

इयता सूत्रसंदर्भेण केषांचित् पापिनां तृतीयमार्गेण नरकलोकगमनं केषांचिदिहैव लोके स्थावरादिरूपेण उत्पत्तिं च प्रतिपाद्य इदानीं स्वर्गलोकात् पुनरागमनप्रकारं प्रपञ्चयति। 'यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति' इत्यादिश्रुतेः स्वर्गलोकात् पुनरागतानामिष्टादिकारिणाम् आकाशवायुधूमाभ्रमेघादिलोकेषु पान्थानामिव अवस्थानमात्रं वा, तेषु लोकेषु भोगोऽप्यस्ति वा इति संशये सति निर्णयमाह—

## तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

आगच्छतां कर्मिणां तत्साभाव्यापत्तिः तेषु आकाशलोकवायुलोकादिषु साभाव्यापत्तिः संबन्धप्राप्तिरेव, न भोगः। कुतः? उपपत्तेः क्षीणसुकृतानां तेषां संबन्धमात्रस्यैव उपपन्नत्वात् भोगस्यानुपपन्नत्वादित्यर्थः। इदमुपलक्षणं तेषां योनिप्राप्तिपर्यन्तं स्थूलशरीराभावादपि लिङ्गशरीरमात्रविशिष्टानां तेषां मार्गमध्ये न भोगसामर्थ्यमिति द्रष्टव्यम् ॥ २२ ॥

नातिचिराधिकरणम् ॥ ९ ॥

आकाशादिलोकेष्ववस्थानमपि एकैकस्मिन् लोके एकैकदिनमात्रमेव, न बहुसंवत्सरकालमित्याह—

नातिचिरेण विशेषात् ॥ २३ ॥

नातिचिरेण शीघ्रकालेनैव आकाशादिलोकेभ्यो भूलोकं प्रत्यागमनम्। कुतः ? विशेषात् 'ततो वै खलु दुर्निष्प्रपतरम्' इति श्रुतौ व्रीहियवाद्योषधिसंबन्धानन्तरं कालविलम्बश्रवणेन आकाशादिलोकेषु अविलम्बस्य अर्थाद्गम्यमानत्वादित्यर्थः। श्रुतेरयमर्थः—ततः व्रीहियवाद्योषधिसंबन्धानन्तरं कर्मिणां दुर्निष्प्रपतरं दुःखेन निर्गमनं कालविलम्बेन अन्नद्वारा पुरुषसंबन्ध इत्यर्थः। अङ्कुरमारभ्य धान्यनिष्पत्तिपर्यन्तं विलम्बः, धान्यनिष्पत्त्यनन्तरमपि कुसूलादिप्रक्षेपेण किंचित्कालविलम्ब इति भावः॥ २३ ॥

अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

व्रीहियवादिष्वपि बहुकालमवस्थानमात्रमेव कर्मिणां, न भोग इत्याह—

अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥

अन्यैः व्रीहियवाद्यौषध्यभिमानिभिर्जीवान्तरैरधिष्ठिते सहकृते व्रीहियवादौ कर्मिणां बहुकालमवस्थानमात्रमेव, न भोगः। कुतः ? पूर्ववदभिलापात् पूर्वेष्वाकाशादिलोकेष्विव व्रीहियवादिष्वपि संबन्धमात्रस्यैव 'त इह व्रीहियवाः' इति श्रुतौ कथितत्वात्। तथा च व्रीहियवादिस्थावरदेहाभिमानिनां जीवानामेव वातातपवर्षादिजन्यसुखदुःखानुभवः, न तु जनुषान्धतुल्यानां कर्मिणामिति भावः॥ २४ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

ज्योतिष्टोमादिकं वैदिकं कर्माशुद्धं पशुहिंसामांसभक्षणादिजन्यपापसंमिश्रम्। तथाच पुण्यपापमेलनरूपत्वात् यज्ञादिकर्मणां पुण्यांशफलस्य स्वर्गलोके भुक्त्वेऽपि पापांशफलस्य स्वर्गलोके अभुक्तत्वात् स्वर्गात् पुनरागमनकाले व्रीहियवादिस्थावरशरीरेषु पशुहिंसादिजन्यपापफलभोगानन्तरं संचितकर्मान्तरवशेन कर्मिणां योनिप्राप्तिरिति चेन्न। शब्दात् 'वायव्यं श्वेतमालभेत' इत्यादिश्रुतिचोदितत्वेन पशुहिंसादीनां पापजनकत्वाभावात्। तथाच जीवान्तराधिष्ठितेषु व्रीहियवादिषु कर्मिणां संबन्धमात्रमेव न भोग इति भावः॥ २५ ॥

रेतस्सिग्योगोऽथ ॥ २६ ॥

अथ व्रीहियवादिसंबन्धानन्तरं धान्यसंबन्धिनां कर्मिणामन्नद्वारेण रेतस्सिग्योगः रेतस्सिचा पुरुषेण योगः संबन्धः पुरुषस्य कुक्षौ प्रवेश इत्यर्थः ॥ २६ ॥

**योनेः शरीरम् ॥ २७ ॥**

पुरुषकुक्षिस्थानां कर्मिणां रेतोद्वारा योनेः संबन्धात् योषित्कुक्षौ शरीरमुत्पद्यते गर्भो भवतीत्यर्थः । कर्मिणां गमनागमनादिबहुक्लेशवत्त्वात् स्वर्गनरकसाधनानि पुण्यपापानि परित्यज्य निरन्तरं ब्रह्मविचार एव कर्तव्य इति सर्वस्यास्य पादस्य तात्पर्यमिति भावः ॥ २७ ॥

इति ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य प्रथमः पादः ।

---

## तृतीयाध्यायस्य द्वितीयः पादः ।

संध्याधिकरणम् ॥ १ ॥

निष्प्रपञ्चस्य निर्धर्मकस्य निर्गुणस्य जीवस्य निष्प्रपञ्चनिर्धर्मकनिर्गुणब्रह्माभेदकथनाय जीवसंबन्धिनीनां स्वप्नसुषुप्तिजाग्रन्मूर्छावस्थानां चतसृणामपि मिथ्यात्वं साधयितुं प्रथमं पूर्वपक्षमाह—

पूर्वपक्षः—

**सन्ध्ये सृष्टिराह हि ॥ १ ॥**

सन्ध्ये स्वप्नावस्थायां सृष्टिः स्वप्नप्रपञ्चसृष्टिः पारमार्थिकी । कुतः ? आह हि 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथस्सृजते' इति श्रुतिः स्वप्नप्रपंचसृष्टिम् आह हि प्रतिपादयति खलु । तथा च श्रुतिप्रतिपादितत्वात् स्वप्नप्रपञ्चस्य सत्यत्वं वक्तव्यम् । तथा च स्वप्नप्रपञ्चदृष्टान्तेन जाग्रत्प्रपञ्चस्य मिथ्यात्वानुमानं वेदान्तिनामनुपपन्नमिति भावः ॥ १ ॥

स्वप्नप्रपञ्चस्य सत्यत्वे हेत्वन्तरमाह—

**निर्मातारं चैके पुत्रादयश्च ॥ २ ॥**

एके शाखिनः 'यत्रैतत्स्वप्नया चरति कामं कामं पुरुषो निर्मिमाणः' इति श्रुतौ जीवं स्वेच्छानुसारेण स्वप्नप्रपञ्चस्य निर्मातारं प्रतिपादयन्ति । तथाच कर्तुरिच्छानुसारेण उत्पाद्यमानत्वादपि स्वप्नकालीनाः

पुत्रमित्रकलत्रादयः पदार्थाः सत्या एवाङ्गीकर्तव्याः। मिथ्यात्वाङ्गीकारे कर्त्रिच्छाधीनत्वानुपपत्तेः। नहि मिथ्याभूतस्य शुक्तिरजतरज्जुसर्पादेः कर्त्रिच्छाधीनत्वं लोके दृष्टमित्यर्थः। तथा च जीवस्य स्वप्नप्रपञ्चकर्तृत्वेन स्वप्नप्रपञ्चं प्रति उपादानकारणत्वेन च सप्रपञ्चत्वात् निष्प्रपञ्चब्रह्माभिन्नत्वमप्यनुपपन्नमिति भावः॥ २॥

सिद्धान्तः—

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्॥ ३॥**

स्वप्नकालीनं जगत् मायामात्रं मिथ्याभूतम्। कुतः? कार्त्स्न्येन उपादाननिमित्तकारणमेलनेन अनभिव्यक्तस्वरूपत्वात् अनुत्पन्नस्वरूपत्वात् वासीटङ्कतक्षकदारुप्रभृतिसामग्रीं विनाप्युत्पाद्यमानत्वात् स्वप्नकालीनस्य रथादिप्रपञ्चस्य शुक्तिरजतादिवत् मिथ्यात्वमेव वक्तव्यमित्यर्थः। यच्चोक्तम् 'अथ रथान् रथयोगान् पथस्सृजत' इति श्रुतिप्रतिपाद्यत्वात् स्वप्नप्रपंचस्य सत्यत्वमिति, तन्न। नहि श्रुतिप्रतिपाद्यत्वमात्रेण सत्यत्वम्। ग्रावप्लवनादेरपि सत्यत्वप्रसङ्गात्। किं तु तात्पर्येण श्रुतिप्रतिपाद्यस्यैव सत्यत्वम्। न च स्वप्नप्रपञ्चस्य तात्पर्येण प्रतिपाद्यत्वमस्ति। 'न तंत्र रथाः' इति पूर्ववाक्ये पारमार्थिकरथादीनां प्रतिषिद्धत्वात्। यच्चोक्तम् 'कामं कामं पुरुषो निर्मिमाणः' इति श्रुत्या कर्त्रिच्छाधीनत्वप्रतिपादनात् स्वप्नप्रपञ्चस्य सत्यत्वमिति, तदपि अनुपपन्नम्। लोकानुभवविरोधेन कस्या अपि श्रुतेः स्वार्थतात्पर्याभावात्। नहि लोके जीवेच्छानुसारेण स्वप्नप्रपञ्चा जायन्ते अनिष्टानां दुःस्वप्नानामपि दर्शनात्॥ ३॥

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥ ४॥**

स्वप्नः सूचकः भविष्यदिष्टानिष्टयोः। कुतः? श्रुतेः 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिश्रुतिबलात्। तद्विदः स्वप्नाध्यायविदश्च स्वप्नप्रपञ्चं भविष्यदिष्टानिष्टसूचकमाचक्षते वदन्ति। तथा च भविष्यदिष्टानिष्टसूचकत्वादपि स्वप्नप्रपञ्चस्य मिथ्यात्वमङ्गीकर्तव्यम्। भविष्यदिष्टानिष्टसूचकानां गन्धर्वनगरादीनामुत्पातानां प्रायेण मिथ्यात्वस्य लोकप्रसिद्धत्वादिति भावः। तथा च स्वप्नप्रपञ्चदृष्टान्तेन जाग्रत्प्रपञ्चस्य मिथ्यात्वानुमानं निष्प्रपञ्चस्य जीवस्य निष्प्रपञ्चब्रह्माभिन्नत्वं च उभयमप्युपपन्नमिति भावः। स्वप्नावस्थाया मिथ्यात्वसमर्थनेन सुषुप्तिजाग्रन्मूर्च्छावस्थानामपि स्वप्नावस्थादृष्टान्तेन मिथ्यात्वमर्थात् सिद्धमिति द्रष्टव्यम्॥ ४॥

जीवब्रह्मणोरभेदाङ्गीकारे जीवस्य आनन्दादिरूपत्वं सर्वदा किमर्थं न भासत इत्याशङ्कयाह—

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥**

पराभिध्यानात् परेषां देहेन्द्रियान्तःकरणानामभिध्यानादैक्याध्यासादस्य जीवस्य शुद्धबुद्धज्ञानानन्दादिस्वरूपत्वं तिरोहितमावृतम्। ततः आवृतत्वाद्धेतोः अस्य जीवस्य बन्धविपर्ययौ कर्तृत्वभोक्तृत्वादिबन्धः, नाहमीश्वर इति भ्रमश्च उभावप्युपपन्नावित्यर्थः ॥ ५ ॥

एवं जीवत्वमपि देहैक्याध्यासाधीनमित्याह—

**देहयोगाद्वा सोऽपि ॥ ६ ॥**

परमार्थतो ज्ञानानन्दस्वभावस्य जीवस्य सोऽपि जीवभावोऽपि देहयोगात् देहैक्याध्यासादित्यर्थः। सूत्रद्वयमपि प्रसङ्गादागतं, न प्रकृतोपयुक्तमिति द्रष्टव्यम् ॥ ६ ॥

तदभावाधिकरणम् ॥ २ ॥

एवं जीवस्य स्वप्नावस्थां विचार्य सुषुप्त्यवस्थां विचारयति—

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥**

जाग्रदवस्थायां स्वप्नावस्थायां च देहाद्यभिमानविशिष्टो जीवः सुषुप्त्यवस्थायां तदभावः सन् तस्य देहाद्यभिमानस्य अभावो यस्य सः देहाद्यभिमानरहितः सन् नाडीषु च आत्मनि च परमात्मनि च चकारात् हृत्पुण्डरीके च शेते नाडीहृत्पुण्डरीकादिप्राकारप्रवेशनद्वारा हृत्पुण्डरीकावच्छिन्नब्रह्मरूपे प्रासादे जीवाख्यो राजा शेत इत्यर्थः। कुतः? तच्छ्रुतेः 'आसु तदा नाडीषु सुप्तो भवति नाडीभ्यः प्रत्यवसृप्य पुरीतति शेते पुरीततः प्रत्यवसृप्य सति शेते सति संपद्य न विदुः सति संपत्स्यामहे' इति श्रुतौ नाडीपुरीतद्द्वारा जीवस्य पुरीतदवच्छिन्ने ब्रह्मणि सुषुप्तिदशायां शयनश्रवणादित्यर्थः। 'आसु तदा नाडीषु सुप्तो भवति' इति श्रुतेरयमर्थः—जीवाख्यो राजा जाग्रदवस्थायां स्वप्नावस्थायां जाग्रत्प्रपञ्चस्वप्नप्रपञ्चाख्ययोः स्वराष्ट्रयोः संचारं कृत्वा शरीराख्यं स्वपुरं प्रविश्य तदनन्तरं नाडीः प्रविशति। नाडीभ्यो निर्गत्य हृत्पुण्डरीकं प्रविशति। हृत्पुण्डरीकान्निर्गत्य हृत्पुण्डरीकावच्छिन्नब्रह्मरूपे प्रासादे शेत इत्यर्थः ॥ ७ ॥

सुषुप्त्यवस्थां निरूप्य जाग्रदवस्थां निरूपयति—

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

अतः सुषुप्त्यवस्थासमाप्त्यनन्तरं हृत्पुण्डरीकावच्छिन्ने ब्रह्मणि शयानो जीवः प्रबोधः प्रकृष्टो बोधः अभिमानो यस्य सः, शरीराद्यभिमानविशिष्टः सन् अस्मात् हृत्पुण्डरीकावच्छिन्नब्रह्मलक्षणात् प्रासादादुत्थाय जाग्रत्प्रपञ्चाख्यराष्ट्रदर्शनाय हृत्पुण्डरीकनाडीप्राकारद्वारा शरीराख्यात् पुरात् बहिर्निर्गच्छतीत्यर्थः। 'स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति श्रुतिरेवास्मिन्नर्थे प्रमाणमिति भावः ॥ ८ ॥

कर्मानुस्मृत्यधिकरणम् ॥ ३ ॥

पूर्वदिनीया एव जीवाः सुषुप्तिदशायां सूक्ष्मावस्थापन्नान्तःकरणविशिष्टतया हृत्पुण्डरीकावच्छिन्ने ब्रह्मणि विलीनाः सन्तः उत्तरदिनेषु स्थूलावस्थापन्नान्तःकरणविशिष्टतया अभिव्यक्ता भवन्ति वा, उत पूर्वदिनीयान्तःकरणविशिष्टानां जीवानां सर्वात्मना सुषुप्त्यवस्थायां ब्रह्मण्यात्यन्तिकलये सति अभिनवान्तःकरणविशिष्टा अभिनवा जीवा उत्पद्यन्ते वा इति संशये सति निर्णयमाह—

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

यस्तु पूर्वदिनीयो जीवः सुषुप्त्यवस्थायां हृत्पुण्डरीकावच्छिन्नब्रह्मणि लीनः, स एव उत्तरदिने स्थूलान्तःकरणविशिष्टतया अभिव्यक्तो भवति। कुतः ? कर्मानुस्मृतिशब्दविधिभ्यः पूर्वदिने कृतस्य लौकिकस्य वैदिकस्य च कर्मणः अस्मिन्दिने स्मरणात् 'त इह व्याघ्रो वा सिंहो वा' इति शब्दात् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिविधिवाक्याच्च एतेभ्यो हेतुभ्य इत्यर्थः। प्रतिदिनं भिन्नभिन्नजीवाङ्गीकारे अन्यस्य ज्योतिष्टोमे कर्तृत्वम्, अन्यस्य स्वर्गभोक्तृत्वमिति स्वर्गकामस्य ज्योतिष्टोमविधायकं वाक्यमप्रमाणं स्यादित्यर्थः। 'त इह व्याघ्रो वा सिंहो वा' इत्यारभ्य यद्यद्भवन्तीति वाक्यमप्रमाणं स्यात्। तस्य वाक्यस्य पूर्वदिनीयानामेव जीवानां सुषुप्तिकाले सूक्ष्मरूपान्तःकरणविशिष्टानामुत्तरदिनेषु स्थूलावस्थान्तःकरणविशिष्टतया अभिव्यक्तिप्रतिपादकत्वादिति भावः। पूर्वदिने अनुभूतस्य कर्मणः अस्मिन्दिने स्मरणं न स्यात्। अन्येनानुभूतस्य अन्येन स्मरणासंभवादिति भावः ॥ ९ ॥

मुग्धाधिकरणम् ॥ ४ ॥

जाग्रदवस्थां निरूप्य मूर्छावस्थां निरूपयति—

**मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥**

मुग्धे मूर्छावस्थायां हृत्पुण्डरीकावच्छिन्ने ब्रह्मणि देहाद्यभिमानविशिष्टस्य जीवस्य अर्धसंपत्तिः अर्धलयः, न तु सुषुप्त्यवस्थायामिव सर्वात्मना अभिमानलयः। मूर्छितस्य बाह्यपदार्थज्ञानाभावेऽपि आन्तरदुःखानुसंधानस्य विद्यमानत्वेन देहाद्यभिमानस्यापि लेशतोऽङ्गीकार्यत्वात्। तथा च परिशेषात् जाग्रत्स्वप्नसुषुप्त्यवस्थासु अन्तर्भावासंभवात् मूर्छावस्था अवस्थात्रयात् भिन्नैवाङ्गीकर्तव्येत्यर्थः ॥ १० ॥

उभयलिङ्गाधिकरणम् ॥ ५ ॥

इयता सूत्रसंदर्भेण त्वंपदार्थस्य निष्प्रपञ्चत्वं प्रसाध्य इदानीं तत्पदार्थस्य निष्प्रपञ्चत्वं साधयति—

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥**

केचित् ब्रह्मणः निर्गुणत्वं सगुणत्वं च उभयमपि स्वाभाविकं वास्तवं चेति वदन्ति। अन्ये तु निर्गुणत्वं स्वाभाविकं वास्तवं च, सगुणत्वं तु औपाधिकमपि वास्तवमेव। उपाधीनां पृथिव्यादीनां सत्यत्वादिति वदन्ति। आद्यमतं निराकरोति—परस्य परमात्मनः उभयलिङ्गं भावप्रधानो निर्देशः, उभयलिङ्गत्वम् उभयस्वभावकत्वं स्वाभाविकसगुणत्वं स्वाभाविकनिर्गुणत्वं च न संभवति। नकारस्य अत्राप्यन्वयः। स्वाभाविकसगुणत्वनिर्गुणत्वयोरेकत्र विरोधादिति भावः। द्वितीयमतं निराकरोति—न स्थानत इति। स्थानतः पृथिव्याद्युपाधितोऽपि पृथिव्यादिपञ्चमहाभूतावच्छिन्नस्य परमात्मनः वास्तवं सगुणत्वं न संभवति। पृथिव्याद्युपाधीनां मिथ्यात्वेन पृथिव्यभिन्ने ब्रह्मणि तत्प्रयुक्तसगुणत्वस्यापि मिथ्यात्वादिति भावः। पृथिव्याद्युपाधीनां मिथ्यात्वे प्रमाणमाह—सर्वत्र हि सर्वेष्वपि वेदान्तेषु 'नेह नानास्ति' इत्यादिश्रुतिभिः पृथिव्यादिप्रपञ्चस्य मिथ्यात्वं प्रतिपाद्यत इत्यर्थः ॥ ११ ॥

**न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥**

भेदात् सगुणत्वप्रतिपादनात् 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्यादिवाक्यात् ब्रह्मणः सगुणत्वमेव वास्तवं, न निर्गुणत्वमिति चेन्न।

प्रत्येकं सर्वास्वपि शाखासु अतद्वचनात् ' अशब्दमस्पर्शमरूपमव्ययम् ' इत्यादिवाक्यैः निर्गुणत्वस्य प्रतिपादितत्वात् निर्गुणत्वमेव वास्तवं, सगुणत्वं तु मिथ्याभूतमित्यर्थः ॥ १२ ॥

अपि चैवमेके ॥ १३ ॥

किं च एके शाखिनः ' अस्थूलमनण्वह्रस्वमदीर्घमलोहितम् ' इत्यादिश्रुतिषु एवं निर्गुणत्वमेव प्रतिपादयन्तीत्यर्थः ॥ १३ ॥

सगुणत्वप्रतिपादकनिर्गुणत्वप्रतिपादकवाक्ययोर्मध्ये कस्य प्राबल्यं, कस्य दौर्बल्यमित्याशङ्कायामाह—

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

ब्रह्म अरूपवदेव निर्गुणमेव । कुतः ! तत्प्रधानत्वात् सर्वेषां वेदान्तानां उपक्रमोपसंहारादिलिङ्गैः निर्गुणब्रह्मण्येव तात्पर्यवत्त्वादित्यर्थः । तथाच निर्गुणत्वप्रतिपादकवाक्यानामेव स्वार्थे तात्पर्यवत्त्वात् प्राबल्यं सगुणत्वप्रतिपादकवाक्यानां तु स्वार्थे तात्पर्याभावात् दुर्बलत्वमित्यर्थः ॥ १४ ॥

यदि सगुणत्वं मिथ्याभूतं तर्हि ब्रह्मलोकप्राप्त्यादिफलोद्देशेन सत्यसंकल्पत्वादिगुणविशिष्टब्रह्मविषयकोपासनाविधायकानां दहरशाण्डिल्योपकोसलवैश्वानरादिवाक्यसंदर्भाणामप्रामाण्यं स्यात् । मिथ्याभूतगुणविशिष्टब्रह्मोपासनया ब्रह्मलोकप्राप्त्यादिफलजनकत्वासंभवादित्याशङ्क्याह—

प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

यथा गवाक्षमध्यगतस्य सूर्यप्रकाशस्य औपाधिकह्रस्वत्वदीर्घत्ववर्तुलत्वादिमिथ्याभूतधर्मविशिष्टस्यापि अन्धकारशीतादिनिवर्तनसामर्थ्यम् , एवं पृथिव्याद्युपाधिप्रयुक्तमिथ्याभूतसर्वगन्धत्वसर्वरसत्वगुणविशिष्टब्रह्मविषयकोपासनाया अपि ' यादृशो यक्षस्तादृशो बलिः ' इति न्यायेन मिथ्याभूतब्रह्मलोकावास्यादिफलजननसामर्थ्यसंभवात् अवैयर्थ्यं सगुणोपासनाविधायकवाक्यानामप्रामाण्यं नास्तीत्यर्थः ॥ १५ ॥

एवं सगुणोपासनावाक्यानामप्रामाण्यं परिहृत्य निर्गुणत्वे प्रमाणान्तरमाह—

आह च तन्मात्रम् ॥ १६ ॥

तन्मात्रं चैतन्यमात्रं चैतन्यैकस्वभावम् आह च ' कृत्स्नः प्रज्ञानघन एव ' इति श्रुतिः ॥ १६ ॥

दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

'निष्कलं निष्क्रियं शान्तम्' इत्यादिश्रुतिर्ब्रह्मणो निर्गुणत्वं दर्शयति प्रतिपादयति। अथो तथा स्मर्यते—'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' इत्यादिस्मृतिष्वपि निर्गुणत्वमेव प्रतिपाद्यत इत्यर्थः ॥ १७ ॥

सगुणत्वस्य मिथ्यात्वे प्रमाणान्तरमाह—

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

यतः कारणात् ब्रह्मणः पृथिव्याद्युपाधिप्रयुक्तं मिथ्याभूतं सगुणत्वम् अत एव 'यथा ह्ययं ज्योतिरात्मा विवस्वान्' 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादिश्रुतिस्मृतिषु सूर्यकादिवत् सूर्यचन्द्रप्रतिबिम्बवदित्युपमा दृष्टान्त उपपन्न इत्यर्थः। यथा जलादौ प्रतिबिम्बिते चन्द्रे सूर्ये च जलनिष्ठाः ह्रस्वत्वदीर्घत्वचलत्वाधोदेशस्थत्वादयो धर्मा आरोप्यन्ते, एवं पृथिव्यादिपञ्चमहाभूतलक्षणोपाधिषु प्रतिबिम्बिते परमात्मनि पृथिव्यादिधर्माः सर्वगन्धत्वसर्वरसत्वसर्वरूपत्वसर्वस्पर्शत्वसर्वशब्दत्वादयः परमात्मन्यारोप्यन्ते ततश्चारोपितत्वात् सर्वगन्धत्वादिधर्मा मिथ्याभूता एव, न वास्तवा इत्यर्थः ॥ १८

दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यं शङ्कते—

पूर्वपक्षः—

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

अम्बुवत् जलवत् पृथिव्याद्युपाधीनां स्वच्छतया अधिकस्वच्छत्वेन प्रतीयमानत्वाभावात् तथात्वं पृथिव्याद्युपाधिषु प्रतिबिम्बितत्वं ब्रह्मणो न घटत इत्यर्थः ॥ १९ ॥

सिद्धान्तः—

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

परमात्मनः अस्वच्छेषु पृथिव्याद्युपाधिषु प्रतिबिम्बितत्वाभावेऽपि पृथिव्याद्युपाधीनाम् अन्तः मध्ये भावात् अधिष्ठानत्वेन भासकत्वेन च विद्यमानत्वात् पृथिव्याद्युपाधिप्रयुक्तमिथ्याभूतदीर्घत्वह्रस्वत्वसर्वगन्धत्वसर्वरसत्वादिधर्मभाक्त्वं धर्माश्रयत्वं पृथिव्याद्युपाध्यवच्छिन्ने परमात्मन्यारोप्यते, एवंसति एतावन्मात्रेण उभयसामञ्जस्यात् उभयोः सूर्यचन्द्रप्रतिबिम्बदृष्टान्तयोः सामञ्जस्यात् उपपन्नत्वान्न दृष्टान्तदार्ष्टान्तिकवैषम्यमित्यर्थः २०

तथा च गौणप्रतिबिम्बत्वमेव ब्रह्मणः, न मुख्यप्रतिबिम्बत्वमिति भावः। अन्तःकरणाद्युपाधिषु मुख्यप्रतिबिम्बत्वमपि संभवतीत्याह—

दर्शनाच्च ॥ २१ ॥

ब्रह्मादिपिपीलिकान्तसकलजीवान्तःकरणानामतिस्वच्छत्वस्य लोके दर्शनादन्तःकरणेषु प्रतिबिम्बिते ब्रह्मणि सत्यकामत्वसत्यसंकल्पत्वादि-मिथ्याभूतधर्मारोपसंभवाच्च सूर्यचन्द्रयोरिव मुख्यप्रतिबिम्बत्वमपि ब्रह्मणः संभवतीति भावः ॥ २१ ॥

प्रकृतैतावत्त्वाधिकरणम् ॥ ६ ॥

'अथात आदेशो नेति नेति' इति श्रुतावविशेषेण प्रपञ्चब्रह्मणोरुभयोरपि प्रतिषेध्यमानत्वात् प्रपञ्चब्रह्मणोरुभयोरपि मिथ्यात्वमङ्गीकर्तव्यम्। तथा च मिथ्याभूतस्य ब्रह्मणः मिथ्याभूतप्रपञ्चाधिष्ठानत्वमनुपपन्नमिति शून्यवादिनो वदन्ति, तन्मतं निराकरोति—

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

'अथात आदेशो नेति नेति' इति श्रुतिः प्रकृतैतावत्त्वं 'द्वे वाव ब्रह्मणो रूपे' इति पूर्ववाक्ये प्रकृतं प्रतिपादितमेतावत्त्वम् एतावन्मात्रं मूर्तामूर्तात्मकप्रपञ्चमात्रं प्रतिषेधति न परमात्मानम्। कुतः? ततः प्रपञ्चप्रतिषेधानन्तरं भूयः 'सत्यस्य सत्यम्' इत्युत्तरवाक्यं सद्रूपपञ्चमहाभूतात्मकप्रपञ्चाधिष्ठानस्य ब्रह्मणः सत्यत्वं पारमार्थिकत्वं ब्रवीति प्रतिपादयतीत्यर्थः। तथा च पारमार्थिकस्य ब्रह्मणः मिथ्याभूतप्रपञ्चाधिष्ठानत्वमुपपन्नमित्यर्थः। 'द्वे वाव ब्रह्मणो रूपे' इति श्रुतेरयमर्थः—परमार्थतः अरूपस्य ब्रह्मणः मिथ्याभूते द्वे रूपे स्तः। मूर्तं पृथिव्यप्तेजांसि, अमूर्तं वाय्वाकाशौ। अथात आदेशो नेति नेति अथ मूर्तामूर्तात्मकप्रपञ्चस्वरूपकथनानन्तरं प्रपञ्चाधिष्ठानस्य ब्रह्मण आदेश उपदेशः क्रियते। उपदेशमेवाह—नेति नेति। इदं सत्यं न भवति इदं सत्यं न भवतीत्येवंरूपेण सर्वस्य प्रपञ्चस्य सत्यत्वनिषेधे सति मिथ्याभूतप्रपञ्चस्य सत्यमधिष्ठानमङ्गीकर्तव्यम्। तदेव ब्रह्मेत्यर्थः। तदेव स्पष्टयति—सत्यस्य सत्यं सत् पृथिव्यप्तेजांसि, त्यत् वाय्वाकाशौ। सत्त्यद्रूपस्य प्रपञ्चस्य अधिष्ठानभूतं वस्तु सत्यं पारमार्थिकमित्यर्थः ॥ २२ ॥

यदि प्रपञ्चाधिष्ठानं सत्यं ब्रह्माङ्गीक्रियते, तर्हि सत्यब्रह्मणो विभुत्वेन सर्वत्र विद्यमानत्वात् सर्वेषां जीवानां मनसा गृह्येतेत्याशङ्क्याह—

## तदव्यक्तमाह हि ॥ २३ ॥

तत् ब्रह्म अव्यक्तम् अविद्यावृतत्वात् सर्वेषां जीवानां मनसा अग्राह्यम् । कुतः ? आह हि 'नीहारेण प्रावृता' इत्यादिश्रुतिः ब्रह्मणः अविद्यावृतिं प्रतिपादयतीत्यर्थः ॥ २३ ॥

तर्हि केषां मनसा ब्रह्म गृह्यत इत्याशङ्कायामाह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

ब्रह्मसाक्षात्कारेण अविद्यावरणे नष्टे सति अनावृतं ब्रह्मस्वरूपं शुद्धान्तःकरणेन ज्ञानिनः संराधने ध्यानकाले साक्षात्कुर्वन्ति । कुतः ! प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः 'ततस्तु तं पश्यते निष्कलं ध्यायमानः, दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिश्रुतिः, 'यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥' इति स्मृतिः, ताभ्यामित्यर्थः । 'यन्मनसा न मनुते' इत्यादिश्रुतिषु अविशुद्धान्तःकरणग्राह्यत्वं ब्रह्मणः प्रतिषिध्यते ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इत्यादिश्रुतिषु विशुद्धान्तःकरणग्राह्यत्वं प्रतिपाद्यत इति नानयोः श्रुत्योर्विरोध इति भावः ॥ २४ ॥

एवं जीवब्रह्मणोः त्वंपदार्थतत्पदार्थयोः निष्प्रपञ्चत्वं प्रतिपाद्य इदानीमुभयोरभेदं प्रतिपादयति—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

प्रकाशादिवत् गवाक्षद्वयावच्छिन्नसूर्यप्रकाशयोरिव जीवब्रह्मणोरपि परमार्थतः अवैशेष्यम् अभेद एवाङ्गीकर्तव्यः । प्रकाशश्च नाहमीश्वर इति भेदप्रतिभासश्च कर्मणि उपाधौ सति मायालिङ्गशरीरस्थूलशरीरलक्षणोपाधित्रयप्रयुक्तमिथ्याभूतविभेदविषयक इत्यर्थः । कुतः ? अभ्यासात् 'तत्त्वमसि अहं ब्रह्मास्मि' इत्यभेदबोधकबहुश्रुतिबलादित्यर्थः ॥ २५ ॥

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

अतः जीवब्रह्माभेदसाक्षात्कारेण जीवेश्वरोपाधिभूतयोः लिङ्गशरीरमाययोः निवृत्त्यनन्तरं शुद्धो जीवः शुद्धेनानन्तेन ब्रह्मणा अभिन्नो भवति । मिथ्याभूतमपि भेदं परित्यज्यात्यन्ताभेदं प्राप्नोतीत्यर्थः । तत्र प्रमाणमाह—तथाहि लिङ्गं तथा ब्रह्मसाक्षात्कारानन्तरं जीवब्रह्मणोर-

त्यन्ताभेदे 'ब्रह्म वेद ब्रह्मैव भवति' इति 'ब्रह्मविदाप्नोति परं यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमः' इत्यादिवाक्यमेव लिङ्गं ज्ञापकमित्यर्थः ॥ २६ ॥

मोक्षपर्यन्तं जीवब्रह्मणोर्वास्तवौ भेदाभेदौ, जीवब्रह्माभेदसाक्षात्कारेण वास्तवभेदे नष्टे सति मोक्षकाले जीवब्रह्मणोरत्यन्ताभेद इति केचन वर्णयन्ति, तन्मतं निराकर्तुं प्रथमं पूर्वपक्षमाह—

पूर्वपक्षसूत्रम्—

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥**

उभयव्यपदेशात् 'द्वा सुपर्णा' इत्यादिश्रुतिषु भेदव्यपदेशात् तत्त्वमसीत्यादिश्रुतिषु अभेदव्यपदेशात् जीवब्रह्मणोर्भेदाभेदावङ्गकिर्तव्यौ । अहिकुण्डलवत् । यथा कुण्डलीभूतसर्पस्य दीर्घीभूतसर्पस्य च सर्पत्वेन एकत्वेऽपि यथा ह्रस्वत्वदीर्घत्वरूपविरुद्धपरिमाणवत्त्वात् भेदाभेदावङ्गीकर्तव्यावित्यर्थः ॥ २७ ॥

पर्वपक्षे दृष्टान्तान्तरमाह—

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥**

यथा सूर्यप्रभायाः प्रभाश्रयसूर्यमण्डलस्य च तेजस्त्वात् तेजस्त्वेनाविशेषेऽपि व्यापकत्वपरिच्छिन्नत्वरूपविरुद्धपरिमाणवत्त्वात् भेदाभेदावङ्गीकृतौ, एवं जीवब्रह्मणोरपि विरुद्धपरिमाणवत्त्वात् भेदाभेदावङ्गीकर्तव्यावित्यर्थः । इदमुपलक्षणम् । संकुचितविस्तृतपटादिबहुदृष्टान्तानुरोधेनापि जीवब्रह्मणोर्भेदाभेदावङ्गीकर्तव्यावित्यर्थः ॥ २८ ॥

सिद्धान्तसूत्रम्—

**पूर्ववद्वा ॥ २९ ॥**

पूर्वसूत्रोक्तगवाक्षद्वयावच्छिन्नसूर्यप्रकाशदृष्टान्तेन जीवब्रह्मणोरभेद एव वास्तवः, भेदस्तु मिथ्याभूत एव । अणुत्वविभुत्वपरिमाणयोरुभयोरपि लिङ्गशरीरमायोपाधिप्रयुक्तत्वेन मिथ्याभूतत्वेन वास्तवभेदप्रयोजकाभावादित्यर्थः । कुण्डलीभूतदीर्घीभूतसर्पादिदृष्टान्तेषु सर्वेष्वपि अभेद एव वास्तवः, भेदस्तु मिथ्याभूत एव । वास्तवयोर्भेदाभेदयोः सहावस्थानस्य विरुद्धत्वादिति भावः ॥ २९ ॥

**प्रतिषेधाच्च ॥ ३० ॥**

'नान्योऽतोऽस्ति द्रष्टा' इत्यादिषु श्रुतिषु जीवब्रह्मणोर्भेदस्य प्रतिषिद्धत्वादपि मिथ्याभूत एव जीवब्रह्मणोर्भेदः, न वास्तव इत्यर्थः। अतः परमात्मनः अन्यो भिन्नः द्रष्टा जीवो नास्ति। जीवब्रह्मणोर्वास्तवसत्यत्वं नास्तीत्यर्थः। इदमुपलक्षणम्। पारमार्थिकभेदाभेदवादिमते भेदज्ञानस्यापि प्रमात्वात् अभेदप्रमायाः प्रमितवास्तवभेदनिवर्तकत्वं न संभवति। प्रमायाः भ्रमविषयीभूतपदार्थमात्रनिवर्तकत्वेन प्रमाविषयीभूतपदार्थनिवर्तकत्वस्य लोके अदर्शनात्। किं च भेदाभेदयोः औपाधिकत्वेन परस्परविरोधाभावादपि अभेदज्ञानस्य भेदज्ञाननिवर्तकत्वमनुपपन्नम्। न च जीवब्रह्मणोरत्यन्ताभेदविषयकप्रमोत्पत्त्या भेदध्वंसोत्पत्तिरिति वाच्यम्। भेदविरोधित्वविशिष्टाभेदविषयकप्रमोत्पत्त्यनन्तरं भेदध्वंसोत्पत्तेरिति ॥ ३० ॥

एवं भेदाभेदवादिनो भट्टभास्करस्य मतं निराकृत्य अत्यन्तभेदवादिनां नैयायिकानां मतं निराकरोति—

सेतून्मानाधिकरणम् ॥ ७ ॥

पूर्वपक्षः—

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

ब्रह्म अतः जीवात् परं भिन्नम्। कुतः? सेतून्मानसंबन्धभेदव्यपदेशेभ्यः हेतुभ्यः 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति श्रुतौ जीवब्रह्मणोर्नियम्यनियामकभावरूपसेतुत्वस्य व्यपदेशात्। उन्मानव्यपदेशात् 'वालाग्रशतभागस्य शतधा कल्पितस्य च। आकाशवत्सर्वगतश्च नित्यः' इत्यादिश्रुतिषु जीवब्रह्मणोः अणुत्वविभुत्वरूपविरुद्धपरिमाणश्रवणात्। संबन्धव्यपदेशात् 'सता सोम्य तदा संपन्नो भवति' इति सद्रूपे ब्रह्मणि संबन्धश्रवणात्। भेदश्रवणात् 'द्वा सुपर्णा' इत्यादिश्रुतिषु भेदव्यपदेशाच्च जीवेश्वरयोर्भेद एवाङ्गीकर्तव्य इत्यर्थः ॥ ३१ ॥

सेतुव्यपदेशस्य परिहारमाह—

## सामान्यात्तु ॥ ३२ ॥

यथा लोके सेतूनां केदारमर्यादाव्यवस्थापकत्वम्, एवं ब्रह्मणोऽपि

---

१ अन्योन्याश्रयात्। तथा हि अत्यन्ताभेदो नाम भेदध्वंससहकृताभेदः। तथा च भेदध्वंसे उत्पन्ने भेदध्वंसविशिष्टाभेदविषयकप्रमोत्पत्तिः भेदध्वंसविशिष्टाभेदविषयकप्रमोत्पत्त्यनन्तरं भेदध्वंसोत्पत्तिरिति पाठः।

वर्णाश्रममर्यादाव्यवस्थापकत्वेन सामान्यात् सेतुसादृश्यात् सेतुत्वमुक्तं, तच्च ब्रह्मसाक्षात्कारपर्यन्तं जीवब्रह्मणोर्मिथ्याभूतभेदाङ्गीकारात् तमादाय उपपन्नमिति भावः ॥ ३२ ॥

उन्मानव्यपदेशस्य परिहारमाह—

**बुद्ध्यर्थः पादवत् ॥ ३३ ॥**

जीवब्रह्मणोरणुत्वविभुत्वव्यपदेशः बुद्ध्यर्थः तत्पदार्थत्वंपदार्थविवेकार्थः । पादवत् यथा 'पादोऽस्य विश्वा भूतानि' इति श्रुतौ ब्रह्माण्डमध्यवर्तिनो जीवचैतन्यस्य एकपादत्वं, ब्रह्माण्डात् बहिः विद्यमानस्य ब्रह्मचैतन्यस्य त्रिपादत्वं च त्वंपदार्थतत्पदार्थविवेकार्थमुक्तं, तद्वदित्यर्थः । तत्त्वंपदार्थयोरभेदज्ञानस्य तत्त्वंपदार्थज्ञानं विना असंभवात् । तत्त्वंपदार्थज्ञानार्थं स्थूलारुन्धतीन्यायेन अन्तःकरणविशिष्टस्य जीवस्याणुत्वं, मायाविशिष्टस्य ब्रह्मणः विभुत्वं चोक्तं न तु तत्र श्रुतेस्तात्पर्यम् । अणुपरिमाणविभुपरिमाणयोः मिथ्यात्वेन तत्र श्रुतेस्तात्पर्यानुपपत्तेरिति भावः ॥ ३३ ॥

संबन्धभेदव्यपदेशयोरुभयोः परिहारमाह—

**स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥**

स्थानविशेषात् ब्रह्मणः मायोपाधिविशिष्टत्वात् जीवस्य सुषुप्तिकालेऽपि सूक्ष्मान्तःकरणविशिष्टत्वात् विशिष्टयोर्मिथ्याभेदस्य ब्रह्मसाक्षात्कारपर्यन्तं विद्यमानत्वात् 'सता सोम्य तदा संपन्नो भवति' इति संबन्धव्यपदेशः, द्वा सुपर्णेत्यादिभेदव्यपदेशश्च उपपद्येते इत्यर्थः । प्रकाशादिवत् । यथा गवाक्षद्वये अन्तर्वर्तिसूर्यप्रकाशयोः औपाधिकभेदः, कदाचित् परस्परसंबन्धश्च, तद्वदित्यर्थः । आत्मा एकः, विभुत्वात् । कालवदाकाशादिवदित्यनुमानाच्च आत्मन एकत्वम् । तथा च जीवात्मपरमात्मनोरभेद इत्यर्थः ॥ ३४ ॥

**उपपत्तेश्च ॥ ३५ ॥**

वस्तुद्वयासत्त्वात् एकत्वश्रुतेश्च मिथ्यासंबन्धमिथ्याभेदयोरुपपन्नत्वादित्यर्थः ॥ ३५ ॥

मुख्यावेव संबन्धभेदौ किं न स्यातामित्यत आह—

**तथान्यप्रतिषेधात् ॥ ३६ ॥**

'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतौ जीवब्रह्मणोरन्यत्वप्रतिषेधात् भेदप्रतिषेधादपि जीवब्रह्मणोरभेद इत्यर्थः ॥ ३६ ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥**

अनेन जीवब्रह्मणोः भेदनिषेधेन प्रपञ्चस्य मिथ्यात्वप्रतिपादनेन आयामशब्दादिभ्यः अयामो नाम सर्वात्मकत्वं, तत्प्रतिपादकेभ्यः 'सर्वं खल्विदं ब्रह्म। एकमेवाद्वितीयम्। ऐतदात्म्यमिदं सर्वम्' इत्यादिशब्देभ्यश्च ब्रह्मणः सर्वगतत्वं सर्वात्मकत्वम् अद्वितीयत्वं च सिद्धमित्यर्थः॥३७॥

फलाधिकरणम् ॥ ८ ॥

इयता सूत्रसंदर्भेण ब्रह्मस्वरूपं विचार्य इदानीं कर्मण एव फलप्रदातृत्वं, नेश्वरस्येति निरीश्वरवादिनो मीमांसका वदन्ति। तन्मतं निराकरोति—

**फलमत उपपत्तेः ॥ ३८ ॥**

अतः कर्मभिराराधितादीश्वरादेव जीवानां फलमुत्पद्यते। न तु केवलकर्मणः। कुतः ? उपपत्तेः चैतन्यस्यैव ईश्वरस्य फलजनकत्वस्य उपपन्नत्वात् जडस्य कर्मणः स्वातन्त्र्येण फलजनकत्वानुपपत्तेरित्यर्थः ॥ ३८ ॥

**श्रुतत्वाच्च ॥ ३९ ॥**

'कर्माध्यक्षः सर्वभूताधिवासः' इति श्रुतौ ईश्वरस्य फलदातृत्वश्रवणाच्च कर्मसहकृत ईश्वर एव फलप्रदातेत्यर्थः ॥ ३९ ॥

पूर्वपक्षः—

**धर्मं जैमिनिरत एव ॥ ४० ॥**

जैमिनिस्तु धर्ममेव स्वातन्त्र्येण फलप्रदातारं मन्यते। कुतः ? अत एव 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतिषु कर्मणां स्वातन्त्र्येण फलसाधनत्वश्रवणादेवेत्यर्थः ॥ ४० ॥

सिद्धान्तः—

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥**

बादरायणस्तु पूर्वं पूर्वसूत्रोक्तं कर्मसहकृतमीश्वरमेव फलप्रदातारं मन्यते। कुतः ? हेतुव्यपदेशात् 'एष एव साधु कर्म कारयति। एष एव असाधु कर्म कारयति' इत्यादिश्रुतिषु ईश्वरस्यैव सत्कर्मणि दुष्कर्मणि च

जीवान् प्रति प्रेरकत्वव्यपदेशादित्यर्थः। तथा च जीवानामीश्वरप्रेरणानुसारेणैव सुकृतदुष्कृतयोः प्रवृत्तिः, न स्वातन्त्र्येण। तथा च ईश्वरस्यैव तत्तत्कर्मानुसारेण फलप्रदातृत्वं, न तु केवलकर्मणामित्यर्थः॥ ४१॥

इति ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य द्वितीयः पादः।

---

## तृतीयाध्यायस्य तृतीयः पादः।

### सर्ववेदान्तप्रत्ययाधिकरणम्॥ १॥

सगुणब्रह्मोपासनानामपि चित्तशुद्धिद्वारा वा ब्रह्मलोकप्राप्तिद्वारा वा निर्गुणब्रह्मसाक्षात्कारं प्रति साधनत्वात् अस्मिन् पादे सगुणब्रह्मोपासनास्वरूपं विचारयति—

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥ १॥**

सर्ववेदान्तप्रत्ययं सर्वशाखाप्रतिपाद्यं दहरोपासनमेकमेव। एवं सर्वशाखाप्रतिपाद्यं वैश्वानरोपासनमपि एकमेव। एवं शाण्डिल्योपासनमप्येकमेव। एवमुपकोसलोपासनमप्येकमेव। कुतः? चोदनाद्यविशेषात्। चोद्यन्ते विधीयन्त इति व्युत्पत्त्या चोदनाशब्देन अग्निहोत्रादीनि कर्माण्युच्यन्ते। तथा च चोदनाद्यविशेषात् सगुणब्रह्मोपासनानामपि चोदनादिभिः अग्निहोत्रादिकर्मभिः सह अविशेषात् तुल्यत्वादित्यर्थः। तथा च सर्वशाखाप्रतिपाद्यम् अग्निहोत्राख्यं कर्म यथा एकमेव, यथा ज्योतिष्टोमाख्यं कर्म एकमेव, यथा वाजपेयाख्यं कर्म सकलशाखाप्रतिपाद्यमेकमेव, एवं सर्वशाखाप्रतिपाद्यं सजातीयोपासनमेकमेवेत्यर्थः॥१॥

शाखाभेदेन गुणभेदस्य श्रूयमाणत्वात् नानाशाखागतानां सजातीयोपासनानां ऐक्यमनुपपन्नमित्याशङ्क्य निराकरोति—

**भेदान्नेति चेन्नैकस्यामपि॥ २॥**

भेदात् शाखाभेदेन गुणभेदस्य श्रूयमाणत्वात् नेति चेत् नानाशाखागतानां सजातीयोपासनानाम् ऐक्यं नास्ति, किं तु भिन्नत्वमेवेति चेन्न। एकस्यामपि शाखायाम् एकस्या एवोपासनायाः अध्यायभेदेन गुणभेदश्रवणेऽपि यथाध्यायद्वयगतायाः सजातीयोपासनायाः ऐक्यमेवाङ्गीक्रियते, एवं नानाशाखागतानां सजातीयोपासनानामैक्यमङ्गीक्रियते॥ २॥

तर्हि 'उपसंहारोऽर्थाभेदात्' इति वक्ष्यमाणसूत्रोक्तन्यायेन सकलशाखागतसजातीयोपासनाप्रकरणप्रतिपाद्यानां सत्यसंकल्पत्वसर्वज्ञत्वसर्वेश्वरत्वादिगुणानां मेलनरूपः उपसंहारः उपासनानां निर्णेतव्यः । एवं स्थिते सति एकैकस्य पुरुषस्य सकलशाखाध्ययनस्याशक्यत्वात् कथं सकलशाखाप्रतिपाद्यगुणमेलननिर्णय इत्याशङ्कां निराकरोति—

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

स्वस्य अध्यायः स्वाध्यायः इति व्युत्पत्त्या स्वाध्यायशब्देन स्वशाखा उच्यते । तथा च स्वाध्यायस्य स्वशाखाया एव तथात्वेन अध्येतव्यत्वेन समाचारे 'स्वाध्यायोऽध्येतव्यः' इति अध्ययनविधिप्रकरणे अधिकारात् प्रतिपादितत्वात् एकैकस्य पुरुषस्य सकलशाखाध्ययनाभावेऽपि न दोष इत्यर्थः । तर्हि सकलशाखागतसजातीयोपासनाप्रकरणप्रतिपाद्यगुणमेलननिश्चयः कथमित्याशङ्क्याह—सववच्च तन्नियमः सववत् यज्ञाङ्गवत् तन्नियमः तेषां नानाशाखाप्रतिपाद्यानां सत्यसंकल्पादिगुणानां नियमः निश्चयः उपपद्यत इत्यर्थः । यथा कर्मानुष्ठातॄणां सकलशाखाध्ययनाभावेऽपि सकलशाखाध्येतृभिः महर्षिभिः कृतात् कल्पसूत्रादिग्रन्थात् नानाशाखागतानाम् अग्निहोत्रादिकर्माङ्गानां मेलननिश्चयः, एवमुपासकानां सकलशाखाध्ययनाभावेऽपि सकलशाखाध्येतृभिः शङ्कराचार्यादिभिर्महात्मभिः कृतात् भाष्यादिग्रन्थात् सकलशाखागतानां सत्यसंकल्पत्वादिगुणानां मेलननिश्चयः उपपन्न इति भावः ॥ ३ ॥

**दर्शयति च ॥ ४ ॥**

मन्वादिस्मृतिरपि स्वशाखाध्ययनमेव आवश्यकं दर्शयति प्रतिपादयति न तु सकलशाखाध्ययनमित्यर्थः ॥ ४ ॥

उपसंहाराधिकरणम् ॥ २ ॥

नानाशाखागतानां सजातीयोपासनानाम् ऐक्यप्रतिपादनफलमाह—

**उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ५ ॥**

नानाशाखाप्रतिपाद्यसजातीयोपासनाप्रकारणप्रतिपाद्यानां सत्यसंकल्पत्वादिगुणानां समाने नानाशाखाप्रतिपाद्यसजातीयोपासने उपसंहारः कर्तव्यः मेलनं कर्तव्यमित्यर्थः । कुतः ? अर्थाभेदात् नानाशाखागतसकलगुणविशिष्टसजातीयोपासनायाः अर्थस्य ब्रह्मलोकप्राप्तिलक्षणस्य

फलस्य अभेदात् एकत्वादित्यर्थः। तथा च ब्रह्मलोकप्राप्तिलक्षणैकफलस्य साधनीभूतानां नानाशाखाप्रतिपाद्यसजातीयोपासनासंबन्धिनां सत्यसंकल्पत्वादिगुणानां मेलनरूपः उपसंहारः कर्तव्यः। विधिशेषवत् यथा विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादिकं कर्म सर्वत्रेत्यर्थाभेदात् उपसंहारः एवमन्यत्रापीति भावः। यद्यप्यस्मिन् सूत्रे गुणोपसंहारकथनानन्तरम् एकैकस्य पुरुषस्य नानाशाखाध्ययनासंभवात् कथं नानाशाखागुणोपसंहार इति शङ्का पश्चात् परिहर्तव्या, तथाप्युत्तरसूत्रे वक्ष्यमाणं गुणोपसंहारं सिद्धवत्कृत्य सकलशाखाध्ययनाभावात् गुणोपसंहारो न संभवतीति शङ्का पूर्वमेव परिहृतेति न कोऽपि दोष इति भावः ॥ ५ ॥

अन्यथात्वाधिकरणम् ॥ ३ ॥

'भेदान्नेति चेन्नैकस्यापि' इति सूत्रे गुणभेदात् सजातीयोपासनानां भिन्नशाखागतानां भेद आशङ्क्य निराकृतः। इदानीमुपासीतेति शब्दानां प्रतिशाखं भिन्नत्वात् भिन्नशाखागतानां सजातीयोपासनानां भेदः अङ्गीकर्तव्य इत्याशङ्क्य निराकरोति—

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥**

शब्दात् उपासीतेति शब्दानां प्रतिशाखं भिन्नत्वात् अन्यथात्वं भिन्नशाखागतानां सजातीयोपासनानां भिन्नत्वमेवाङ्गीकर्तव्यम्। 'समिधो यजति तनूनपातं यजति' इत्यादिषु पञ्चप्रयाजविधायकवाक्येषु यजतिशब्दानां भिन्नत्वेन यागभेदाङ्गीकारादिति चेन्न। अविशेषात् शब्दभेदे विद्यमानेऽपि गुणाविशेषात् समिधो यजतीत्यादिषु वाक्येष्वपि समिदादिः देवताभेदादेव यागभेदः, न तु यजतिशब्दानां भिन्नत्वमात्रेण। तथा च सजातीयोपासनासु पूर्वोक्तरीत्या गुणभेदाभावात् भिन्नशाखागतानां सजातीयोपासनानां न भेद इत्यर्थः ॥ ६ ॥

तर्हि एकशाखागतानां भिन्नशाखागतानां च ब्रह्मलोकप्राप्तिरूपैकफलसाधनानां दहरशाण्डिल्योपकोसलवैश्वानरप्रभृतीनां विजातीयोपासनानामप्यैक्यमङ्गीक्रियतामित्याशङ्क्याह—

**न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥**

न वा विजातीयोपासनानाम् ऐक्यं नास्त्येव। कुतः? 'अथ यदतः परो दिवो ज्योतिर्दीप्यते अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यादिश्रुतिषु प्रकरण-भेदद्योतकैरथशब्दादिभिर्विजातीयोपासनानाम् अन्योन्यनिरपेक्षतया प्रत्येकं ब्रह्मलोकप्राप्तिसाधनत्वबोधकत्वात् विजातीयोपासनानाम् एक-शाखागतानां भिन्नशाखागतानां च भेद एवाङ्गीकर्तव्य इत्यर्थः । तत्र दृष्टान्तमाह—परोवरीयस्त्वादिवत् यथा अग्निहोत्रदर्शपूर्णमासज्योतिष्टोम-वाजपेयादीनां पूर्वपूर्वापेक्षया उत्तरोत्तरमुत्कृष्टानामेकस्वर्गफलसाधनाना-मपि प्रकरणभेदद्योतकेन अथशब्दादिना अन्योन्यानिरपेक्षतया प्रत्येकं स्वर्गलोकप्राप्तिसाधनत्वबोधनात् भेदः अङ्गीक्रियते, एवमेकफलसाधनाना-मपि विजातीयोपासनानां भेद एवाङ्गीकर्तव्य इति भावः ॥ ७ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

संज्ञातः भिन्नभिन्नसंज्ञाबलात् तदुक्तम् अग्निहोत्रादिकर्मणां परस्पर-भिन्नत्वमिति चेत्, तर्हि दहरशाण्डिल्यादिविजातीयोपासनानां तदपि भिन्नभिन्नसंज्ञकत्वमपि अस्त्येव । तथा च नामभेदात् अग्निहोत्रादीनां विजातीयकर्मणां भेदस्याङ्गीकारात् विजातीयोपासनानामपि नामभेदात् भेदः अङ्गीकर्तव्य इति भावः ॥ ८ ॥

व्याप्त्यधिकरणम् ॥ ४ ॥

अस्तु भिन्नशाखागतानां सजातीयोपासनानाम् ऐक्यं, तथापि नाना-शाखागतानां गुणानामुपसंहारो न कर्तव्यः यथाशक्त्यङ्गानुष्ठानेन संध्यावन्दनादिनित्यकर्मानुष्ठातृणां ब्रह्मलोकप्राप्तिवत् उपासकानामपि स्वस्वशाखागतगुणविशिष्टब्रह्मोपासनामात्रेण ब्रह्मलोकप्राप्तिसंभवादित्या-शङ्क्याह—

व्याप्तेश्च समञ्जसम् ॥ ९ ॥

व्याप्तेः नानाशाखागतगुणमेलनात् उपासनं समञ्जसं ब्रह्मलोके अधिकभोगसंपादकं भवति । स्वस्वशाखागतगुणविशिष्टब्रह्मोपासकानां तु स्वल्पभोग इति भावः ॥ ९ ॥

सर्वाभेदाधिकरणम् ॥ ५ ॥

उपसंहारोऽर्थाभेदात् ' इति सूत्रे उपक्रान्तं गुणोपसंहारमुपसंहरति—

सर्वाभेदादन्यत्रेमे ॥ १० ॥

सर्वाभेदात् सजातीयोपासनानां सर्वासु शाखासु अभिन्नत्वात् एक-

स्यां शाखायां श्रूयमाणाः इमे गुणाः अन्यत्र शाखान्तरेऽप्युपसंहर्तव्या इत्यर्थः ॥ १० ॥

आनन्दाद्यधिकरणम् ॥ ६ ॥

एवं सगुणब्रह्मोपासनासु भिन्नशाखागतगुणोपसंहारमुक्त्वा निर्गुणविद्यायामपि गुणोपसंहारमाह—

## आनन्दादयः प्रधानस्य ॥ ११ ॥

एकैकशाखायां श्रूयमाणानन्दत्वशुद्धत्वबुद्धत्वमुक्तत्वादयः ब्रह्मस्वरूपभूताः गुणाः सर्वासु शाखासु निर्गुणविद्यायामुपसंहर्तव्याः। कुतः? प्रधानस्य ज्ञेयस्य निर्गुणब्रह्मणः सर्वास्वपि शाखासु एकत्वादित्यर्थः। अत्र सर्वशाखागतानां निर्गुणब्रह्मविद्यानां सजातीयत्वेन विजातीयनिर्गुणविद्यायाः प्रसक्त्यभावात् निर्गुणब्रह्मविद्यायां भेदाभेदचिन्ता न कृतेति द्रष्टव्यम् ॥ ११ ॥

'तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः' इत्यादिश्रुतौ तैत्तिरीयशाखायां श्रुताः प्रियशिरस्त्वादयो गुणाः शाखान्तरस्थायां निर्गुणविद्यायाम् उपसंहर्तव्या वा, उत नोपसंहर्तव्या वा इति संशये सति निर्णयं करोति—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

गुणबाहुल्यार्थं खलु गुणोपसंहारः कर्तव्यः। तथा च गुणानामुपचयः बाहुल्यं, गुणानामपचयः अल्पत्वम्, एवंविधौ गुणोपचयापचयौ हि भेद उपास्ये सगुणे ब्रह्मण्येव संभवतः, न तु निर्गुणे ब्रह्मणि। गुणानामेवासंभवेन गुणबाहुल्यस्य सुतरामसंभवादित्यर्थः। तथा चानन्दमयस्य परमात्मनः ज्ञानार्थं स्थूलारुन्धतीन्यायेन आनन्दमयकोशधर्माः प्रियशिरस्त्वादयः प्रतिपादिताः, न तु ब्रह्मधर्मतया प्रतिपादिताः, इति भावः। न च निर्गुणे ब्रह्मणि आनन्दत्वादिगुणानामप्यभावात् पूर्वसूत्रे आनन्दत्वादिगुणोपसंहारकथनमप्यसङ्गतमिति वाच्यम्। ब्रह्मस्वरूपभूतेषु आनन्दत्वादिषु गुणत्वस्य उपचरितत्वादिति भावः ॥ १२ ॥

ननु, ब्रह्मस्वरूपभूताः आनन्दत्वादिगुणा अपि सर्वासु शाखासु नोप-

---

१ तैत्तिरीयकशाखायां श्रूयमाणानां प्रियशिरस्त्वादिगुणानां शाखान्तरेष्वप्राप्तिः अनुपसंहार एव। कुतः? उपचयापचयौ हि भेदे इति पाठः।

संहर्तव्याः। एकैकशाखाप्रतिपादितब्रह्मस्वरूपज्ञानमात्रेणैव मोक्षसंभवादित्याशङ्क्याह—

इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरेऽपि प्रियशिरस्त्वादिगुणेभ्यो व्यतिरिक्ताः आनन्दत्वादयो गुणाः ब्रह्मस्वरूपभूताः सर्वासु शाखासु उपसंहर्तव्याः। कुतः ? अर्थसामान्यात् अर्थस्य मोक्षरूपप्रयोजनस्य सामान्यात् सर्वास्वपि शाखासु ब्रह्मस्वरूपनिश्चयसाध्यत्वप्रतिपादनस्य तुल्यत्वादित्यर्थः। तथाचानन्दत्वशुद्धत्वबुद्धत्वादिविषयकसकलसंशयनिवृत्तिं विना ब्रह्मस्वरूपनिश्चयासंभवात् ब्रह्मस्वरूपनिश्चयार्थम् आनन्दत्वादिगुणजातमुपसंहर्तव्यमिति भावः ॥ १३ ॥

आध्यानाधिकरणम् ॥ ७ ॥

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इति श्रुतौ अर्थमनोबुद्धिजीवशरीराणामुत्तरोत्तरमुत्कृष्टत्वप्रतिपादनपूर्वकं पुरुषशब्दवाच्यस्य परमात्मनः सर्वोत्कृष्टत्वमुक्तम्। तत्र अर्थादीनाम् उत्तरोत्तरमुत्कृष्टत्वे श्रुतेस्तात्पर्यमस्ति वा, न वेति संशये सति निर्णयं करोति—

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

आध्यानाय सर्वोत्कृष्टपरमात्मनः निश्चयाय अर्थादीनामुत्तरोत्तरमुत्कृष्टत्वमुच्यते, न तु तत्र तात्पर्यम्। कुतः ? प्रयोजनाभावात् अर्थादीनाम् उत्कृष्टत्वज्ञानेन फलाभावात्। तथा च मोक्षसाधनीभूतज्ञानविषयस्य परमात्मनः निश्चयार्थमेव स्थूलारुन्धतीन्यायेन अर्थादीनामुत्कृष्टत्वमुक्तं, न तु तत्र तात्पर्यमित्यर्थः ॥ १४ ॥

आत्मशब्दाच्च ॥ १५ ॥

'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' इत्युत्तरवाक्ये परमात्मनः दुर्विज्ञेयत्वप्रतिपादनादपि परमात्मन्येव 'इन्द्रियेभ्यः परा ह्यर्था' इति श्रुतेस्तात्पर्यमिति भावः ॥ १५ ॥

आत्मगृहीत्यधिकरणम् ॥ ८ ॥

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति छान्दोग्यश्रुतौ सच्छब्देन सत्ताजातिः प्रतिपाद्यते, उत परमात्मा प्रतिपाद्यत इति संशये सति निर्णयं करोति—

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

इतरवत् यथा ' आत्मा वा इदमेक एवाग्र आसीत् ' इति ऋग्वेदश्रुतौ आत्मशब्देन परमात्मा प्रतिपाद्यते, तथा ' सदेव सोम्येदमग्र आसीत् ' इति छान्दोग्यश्रुतौ सच्छब्देन आत्मनः परमात्मनः गृहीतिः प्रतिपादनमङ्गीकर्तव्यम् । कुतः ? उत्तरात् ' सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ' इति उत्तरवाक्ये प्रलयसमये सर्वप्रपञ्चाभिन्नत्वस्य अद्वितीयत्वस्य प्रतिपादितत्वात् । नहि सत्ताजातेः सर्वप्रपञ्चाभिन्नत्वम् अद्वितीयत्वं वा संभवति । तस्याः प्रपञ्चं प्रति उपादानकारणत्वाभावात् । तथा च प्रपञ्चोपादानकारणं ब्रह्मैव सच्छब्देन प्रतिपाद्यत इति भावः ॥ १६ ॥

सच्छब्दस्य सत्ताजातिप्रतिपादकत्वासंभवेऽपि प्रधानप्रतिपादकत्वमस्त्वित्याशङ्क्य निराकरोति—

अन्वयादिति चेत् स्यादवधारणात् ॥ १७ ॥

प्रधानस्यापि प्रपञ्चं प्रति उपादानकारणत्वेन अन्वयात् प्रपञ्चाभिन्नत्वाद्वितीयत्वयोः प्रधानेऽप्युपपन्नत्वात् सच्छब्देन प्रधानमेवोच्यत इति चेन्न । ब्रह्मैव सच्छब्दप्रतिपाद्यं स्यात् । कुतः ? अवधारणात् ' ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ' इति श्रुतौ सच्छब्दवाच्यस्य परमात्मत्वप्रतिपादनपूर्वकं सकलजीवाभिन्नत्वप्रतिपादनेन सच्छब्दवाच्यस्य चेतनत्वनिश्चयादित्यर्थः । नहि जडस्य प्रधानस्य परमात्मत्वं जीवाभिन्नत्वं वा संभवतीति भावः ॥ १७ ॥

कार्याख्यानाधिकरणम् ॥ ९ ॥

उपकोसलविद्याप्रकरणे विद्यमानं आहवनीयगार्हपत्यदक्षिणाग्निविषयकमुपासनात्रयं हिरण्यगर्भोपासनं चेत्युपासनचतुष्टयमपि चित्तशुद्धिद्वारा सगुणब्रह्मोपासनाङ्गं वा, स्वातन्त्र्येण फलान्तरसाधनं वा । एवं सर्वास्वपि उपनिषत्सु सगुणब्रह्मोपासनासन्निधौ विद्यमानानि ब्रह्मव्यतिरिक्तपदार्थविषयकाणि प्राणाद्युपासनानि सगुणब्रह्मोपासनाङ्गानि, स्वातन्त्र्येण फलान्तरसाधनानि वा । एवं भूमविद्याप्रकरणे विद्यमानानि नामाद्युपासनानि भूमाख्यसगुणब्रह्मोपासनाङ्गानि वा, स्वातन्त्र्येण फलान्तरसाधनानि वा । एवं वैश्वानरप्रकरणे विद्यमानानि वैश्वानरस्यैकैकावयवविषयकोपासनानि वैश्वानरोपासनाङ्गानि वा, न वा । एवं तत्तदुपासनाप्रकरणेषु विद्यमानानि ब्रह्मव्यतिरिक्तपदार्थविषयकाणि उपासनानि तत्त-

त्सगुणब्रह्मोपासनाङ्गानि वा, स्वातन्त्र्येण फलान्तरसाधनानि वा इति संशये सति तन्निर्णयं करोति—

## कार्याख्यानादपूर्वम् ॥ १८ ॥

तत्तत्सगुणब्रह्मोपासनासन्निधौ विहितानि अग्नित्रयजीवमुख्यप्राणनामादिविषयकाणि उपासनानि प्रकरणबलात् तत्तत्सगुणब्रह्मोपासनाङ्गान्येव, न तु स्वातन्त्र्येण फलान्तरसाधनानि । तथा च कार्याख्यानात् कार्याणां कर्तव्यानां जीवमुख्यप्राणादिविषयकाणाम् अङ्गोपासनानाम् आख्यानादनुष्ठानादेव साङ्गात् सगुणब्रह्मोपासनात् अपूर्वमदृष्टम् उत्पद्यते, न तु अङ्गोपासनारहितात् केवलसगुणब्रह्मोपासनादित्यर्थः । सगुणब्रह्मोपासनाङ्गत्वेन अनुष्ठितात् प्राणाद्युपासनात् क्षुद्रफलमपि अर्थादुत्पद्यते । तथा चाङ्गोपासनासन्निधौ विद्यमानानां फलश्रुतीनां ब्रह्मलोकप्राप्तावेव महातात्पर्यं, क्षुद्रफलेषु तु अवान्तरतात्पर्यमिति भावः ॥ १८ ॥

समानाधिकरणम् ॥ १० ॥

## समान एवं चाभेदात् ॥ १९ ॥

एवं च सति साङ्गस्यैव सगुणब्रह्मोपासनस्य अदृष्टजनकत्वे सति बृहदारण्यकशाखाविहिते समाने सजातीये उपकोशलनामके सगुणब्रह्मोपासने छान्दोग्यशाखागतमुपकोसलविद्याङ्गभूतमुपासनाचतुष्टयमुपसंहर्तव्यम् । कुतः ? अभेदात् शाखाद्वयेऽपि उपकोसलविद्याया एकत्वादित्यर्थः ॥ १९ ॥

संबन्धाधिकरणम् ॥ ११ ॥

उपकोसलविद्यायामुक्तन्यायं वैश्वानरादिविद्यास्वप्यतिदिशति—

## संबन्धादेवमन्यत्रापि ॥ २० ॥

अन्यत्र प्रतर्दनवैश्वानरभूमाविद्यादिष्वपि एवं जीवमुख्यवैश्वानरावयवनामादिविषयकाङ्गोपासनासहकृतात् सगुणब्रह्मोपासनाददृष्टोत्पत्तिः, न तु केवलसगुणब्रह्मोपासनात् । कुतः ? संबन्धात् अङ्गाङ्गिनोरविनाभावः संबन्ध. । अङ्गं विना अङ्गिमात्रस्य अदृष्टजनकत्वासंभवादित्यर्थः । तथा च छान्दोग्यशाखायां श्रूयमाणानि अङ्गोपासनानि बृहदारण्यकशाखान्तर्गतासु सजातीयोपासनासु उपसंहर्तव्यानीति भावः ॥ २० ॥

उपकोसलसन्निधौ विहितमुपासनाचतुष्टयं विजातीयेषु वैश्वानराद्युपासनेषु नोपसंहर्तव्यमित्याह—

न वा विशेषात् ॥ २१ ॥

अग्नित्रयहिरण्यगर्भविषयम् उपासनाचतुष्टयं विजातीयेषु वैश्वानराद्युपासनेषु नोपसंहर्तव्यम्। कुतः? विशेषात् उपासनाचतुष्टयस्य प्रकरणबलेन उपकोसलोपासनाङ्गत्वेन भिन्नप्रकरणस्थवैश्वानराद्युपासनाङ्गत्वाभावादित्यर्थः ॥ २१ ॥

एवं जीवमुख्यप्राणवैश्वानरैकावयवनामादिविषयकाणि अङ्गोपासनानि विजातीयोपासनेषु नोपसंहर्तव्यानीत्याह—

दर्शयति च ॥ २२ ॥

"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते। अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते। अथ यदतः परो दिवो ज्योतिर्दीप्यते। अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यादिषु श्रुतिषु अथशब्द एव प्रकरणभेदं सूचयति। तथा च तदुपासनाप्रकरणे विहितानि उपासनानि सन्निहितसगुणब्रह्मोपासनामात्रं प्रत्यङ्गानि, न तु व्यवहितविजातीयोपासनाङ्गानीति भावः ॥ २२ ॥

संभृत्यधिकरणम् ॥ १२ ॥

'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्मा भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' इत्यस्यां खिलसंहितायां वीर्यसंभृतिद्युलोकव्यापकत्वसकलभूतकारणत्वादयो बहवो गुणाः प्रतिपादिताः। उपासीतेति विधिवाक्यं, फलं च न श्रुतं, एवं स्थिते सति अखिलसंहिताप्रतिपादितानां सर्वेषां गुणानां दहरशाण्डिल्यादिषु सर्वेषु सगुणोपासनेषु उपसंहारः कर्तव्यो वा, उत उपासीतेति विधिं ब्रह्मलोकप्राप्तिरूपं फलं चाध्याहृत्य खिलसंहिताप्रतिपादितसकलगुणविशिष्टब्रह्मोपासनं स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनमित्यङ्गीकर्तव्यं वा इति संशये सति निर्णयं करोति—

संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

अत एव भिन्नप्रकरणस्थत्वात् व्यवहितत्वाच्च संभृतिद्युव्याप्त्यादिगुणविशिष्टब्रह्मोपासनमपि स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनम्। तथा च संभृतिद्युव्याप्त्यादिगुणानां भिन्नप्रकरणस्थव्यवहितदहरवैश्वानराद्युपासनासु उपसंहारो न कर्तव्य इत्यर्थः ॥ २३ ॥

पुरुषविद्याधिकरणम् ॥ १३ ॥

'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्यादिश्रुतौ उपासकस्य करचरणाद्यवयवेषु प्रसिद्धज्योतिष्टोमाङ्गदृष्टिरूपो मानसज्योतिष्टोमो विहितः। किं मानसज्योतिष्टोमस्य कर्मकाण्डज्योतिष्टोमाङ्गत्वम्, उत स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनत्वमिति संशये निर्णयं करोति—

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

इतरेषामुपासकानां करचरणाद्यवयवेषु कल्पितानां समित्कुशपुरोडाशादीनां मानसानामङ्गानां पुरुषविद्यायामिव मानसज्योतिष्टोम इव कर्मकाण्डस्थक्रियामये ज्योतिष्टोमे अनाम्नानादविहितत्वादित्यर्थः। तथा च मानसज्योतिष्टोमक्रियामयज्योतिष्टोमयोः परस्परविलक्षणाङ्गविशिष्टत्वात् मनःकल्पिताङ्गविशिष्टस्य मानसज्योतिष्टोमस्य वास्तवाङ्गविशिष्टक्रियामयज्योतिष्टोमाङ्गत्वमनुपपन्नम्। किं तु स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनत्वमित्यर्थः ॥ २४ ॥

वेधाद्यधिकरणम् ॥ १४ ॥

'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रेधा विपृक्त' इत्यादीनां उपनिषन्मध्यपठितानां शत्रुमरणोद्देशने आभिचारिकदेवताप्रार्थनपराणां मन्त्राणां सगुणब्रह्मोपासनाङ्गत्वं वा, कर्मकाण्डस्थश्येनयागाद्याभिचारिककर्माङ्गत्वं वेति संदेहे सति निर्णयं करोति—

## वेधाद्यर्थभेदात् ॥ २५ ॥

वेधादीनां शत्रुपीडादीनाम् अर्थानां फलानां भेदात् सगुणब्रह्मोपासने असंबन्धात् एतेषां मन्त्राणां सगुणब्रह्मोपासनाङ्गत्वं नास्तीत्यर्थः। 'सर्वं खल्विदं ब्रह्म'। इति श्रुतौ शान्तस्यैव सगुणब्रह्मोपासनायामधिकारस्य प्रतिपादितत्वेन शत्रुमरणकामस्य ब्रह्मविद्यायामधिकारासंभवात् शत्रुमरणफलकस्य अस्य मन्त्रस्य सगुणब्रह्मोपासनाङ्गत्वासंभवात् कर्मकाण्डश्येनयागाङ्गत्वमङ्गीकर्तव्यमिति भावः ॥ २५ ॥

हान्यधिकरणम् ॥ १५ ॥

उपास्यसंबन्धिगुणोपसंहारमुक्त्वा उपासकानाम् अवान्तरफलोपसंहारमप्याह—

---

१ हे आभिचारिकदेवते मच्छत्रोः सर्वमङ्गं प्रविध्य विदारय, विशेषतश्च हृत्पुरीकं प्रविध्य पीडय, धमनीः नाडीश्च प्रवृज्य पीडय, शिरश्च अभिप्रवृज्य छेदय, मच्छत्रुदेहस्त्रिधा भग्नो भवत्विति श्रुत्यर्थः।

हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्द-
स्स्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' । इति सामशाखायां श्रुतौ सगुणब्रह्मोपासकानां मरणानन्तरं सुकृतदुष्कृतत्यागमात्रमुक्तम् । 'सुकृतदुष्कृते विधूनुते तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति शाखान्तरीयश्रुतौ तु उपासकानां सुकृतदुष्कृतत्यागानन्तरम् उपासकमित्राणाम् उपासकद्वेषिणां च सुकृतदुष्कृतस्वीकार उक्तः । एवंस्थिते सति हानौ सुकृतदुष्कृतत्यागरूपहानमात्रप्रतिपादकश्रुतौ उपासकसुहृदाम् उपासकद्वेषिणां च सुकृतदुष्कृतस्वीकाररूपम् उपायनम् उपसंहर्तव्यम् । कुतः? उपायनशब्दशेषत्वात् 'तत् सुकृतदुष्कृते विधूनुते' इति श्रुतौ हानप्रतिपादकस्य विधूननशब्दस्य उपायनप्रतिपादकशब्दसाहचर्यादित्यर्थः । तत्र दृष्टान्तमाह—कुशाच्छन्दस्स्तुत्युपगानवत् । यथा हि एकस्यां शाखायां सहपठितानां कर्माङ्गानां कुशाच्छन्दस्स्तुत्युपगानानां मध्ये अन्यस्यां शाखायाम् एकैकस्याङ्गस्य श्रवणे सति अन्येषामङ्गानामुपसंहारः, तद्वदित्यर्थः । तदुक्तम् एकैकाङ्गश्रवणे सति अन्येषामङ्गानाम् उपसंहरणं पूर्वमीमांसायामुक्तमित्यर्थः ॥ २६ ॥

सांपरायाधिकरणम् ॥ १६ ॥

उपासकानां सुकृतदुष्कृतक्षयस्य कालनिर्णयं करोति—

सांपराये तर्तव्यभावात्तथा ह्यन्ये ॥ २७ ॥

सांपराये ब्रह्मलोकप्राप्तिहेतुभूतदेवयानमार्गमध्ये विरजानद्यतिक्रमानन्तरम् उपासकानां सुकृतदुष्कृतक्षयो भवति । कुतः? तर्तव्याभावात् विरजानदीतरणानन्तरं तर्तव्यस्य नद्यन्तरस्याभावादित्यर्थः । विरजानदीतरणानन्तरं सुकृतदुष्कृतक्षय इत्यत्र प्रमाणमाह—तथा ह्यन्ये । अन्ये शाखिनः 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' इतिश्रुतौ विरजानदीतरणानन्तरं सुकृतदुष्कृतक्षयं प्रतिपादयन्तीत्यर्थः ॥ २७ ॥

'अश्व इव रोमाणि विधूय पापम्' इति श्रुतौ पापस्यैव क्षय उक्तः, न तु पुण्यस्येत्याशङ्क्याह—

छन्दत उभयाविरोधात् ॥ २८ ॥

छन्दतः इच्छातः विवक्षाबलादित्यर्थः। अजहल्लक्षणया पापशब्देन पुण्यमपि प्रतिपाद्यते। कुतः? उभयाविरोधात् पुण्यपापोभयविनाशप्रतिपादकश्रुत्यन्तरविरोधपरिहारार्थमित्यर्थः ॥ २८ ॥

गत्यर्थवत्त्वाधिकरणम् ॥ १७ ॥

पुण्यमात्रस्य क्षयानङ्गीकारे बाधकमप्याह—

गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥

उभयथा उभयोः पुण्यपापयोः विनाशाङ्गीकारे सति गतेः आर्चिरादिमार्गेण ब्रह्मलोकगमनस्य अर्थवत्त्वं सफलत्वं भवति। अन्यथा पुण्यस्य क्षयानङ्गीकारे ब्रह्मलोके कंचित्कालमुपासनाफलभोगानन्तरं पुण्यफलभोगार्थं स्वर्गलोकं प्रति पुनरावृत्तेरवश्यमङ्गीकर्तव्यत्वात् विरोधः स्यात् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति श्रुतेरप्रामाण्यं स्यादित्यर्थः ॥ २९ ॥

पुण्यस्यापि क्षयाङ्गीकारे ब्रह्मलोकं गतानामुपासकानां भोगो न स्यादित्याशङ्कयाह—

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

ब्रह्मलोकं गतानां भोग उपपन्नः। कुतः? तल्लक्षणार्थोपलब्धेः तल्लक्षणानां तज्जन्यानां सगुणब्रह्मोपासनाजन्यानामर्थानां भोगानामुपलब्धेः श्रुतिषु प्रतिपादितत्वादित्यर्थः। लोकवत् लोकेऽपि देवतोपास्तिं कुर्वतां पुरुषाणाम् ऐश्वर्यादिप्राप्तिर्दृश्यते। तद्वत् ब्रह्मलोकगतानां सगुणब्रह्मोपासकानां भोगप्राप्तिरुपपद्यत इत्यर्थः ॥ ३० ॥

अनियमाधिकरणम् ॥ १८ ॥

सगुणब्रह्मोपासकानां मध्ये केषांचित् ब्रह्मलोकप्राप्तिरस्ति, केषांचित् नास्तीत्येवंविधो नियमोऽङ्गीक्रियते, उत सर्वेषामपि सगुणब्रह्मोपासकानां ब्रह्मलोकप्राप्तिरित्येवंविधः अनियमोऽङ्गीक्रियते वा इति संशये सति निर्णयं करोति—

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

सर्वेषामहंग्रहोपासकानां ब्रह्मलोकप्राप्तौ अनियमः। अहंग्रहोपासकानां मध्ये केषांचित् ब्रह्मलोकप्राप्तिः, केषांचित् नास्तीत्येवंविधस्य नियम-

स्याभाव एव अविरोधः विरोधरहितः प्रामाणिक इत्यर्थः । कुतः ? शब्दानुमानाभ्यां बहुश्रुतिस्मृतिभ्यां दहरशाण्डिल्योपकोसलवैश्वानराद्यहंग्रहोपासनापराणां सर्वेषामपि ब्रह्मलोकप्राप्तेः प्रतिपादितत्वादित्यर्थः ॥ ३१ ॥

आधिकारिकाधिकरणम् ॥ १९ ॥

आदित्यचन्द्रनक्षत्रादीनां ग्रहाणां वरुणकुबेरेन्द्रप्रभृतीनामष्टदिक्पालकानां च वर्तमानदेहपातानन्तरं मुक्तिर्वा, उत देहान्तरप्राप्तिरस्ति वा इति संशये सति निर्णयं करोति—

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥**

आधिकारिकाणां परब्रह्मणा आमहाप्रलयमधिकारं कुर्वतां पूर्वस्मिन् जन्मनि सगुणब्रह्मोपासकानामस्मिन् जन्मनि निर्गुणब्रह्मसाक्षात्कारवतां जीवन्मुक्तानां सूर्यचन्द्रनक्षत्रादीनां यावदधिकारमधिकारसमाप्तिपर्यन्तमेव अवस्थितिः देहधारणं, स्वस्वाधिकारपरिसमाप्त्यनन्तरं लिङ्गशरीरनाशपूर्वकं ब्रह्मण्येकरूपभावं विदेहकैवल्यमेव, न तु देहान्तरप्राप्तिरित्यर्थः ॥ ३२ ॥

अक्षरध्यधिकरणम् ॥ २० ॥

प्रसङ्गादाधिकारिकपुरुषाणां वर्तमानदेहपतनानन्तरं विदेहकैवल्यं प्रसाध्येदानीं प्रस्तुतामेव चिन्तां करोति—

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥**

'अनियमः सर्वेषाम्' इति सूत्रे सगुणब्रह्मोपासकानां सर्वेषामपि ब्रह्मलोकप्राप्तिरित्युक्तम् । अक्षरधियां निर्गुणब्रह्मसाक्षात्कारवतां तु अवरोधः परलोकगमनप्रतिबन्धः । परलोकगमनाभाव एवाङ्गीकर्तव्यः । कुतः ? सामान्यतद्भावाभ्यां निर्गुणब्रह्मसाक्षात्कारवतां सर्वेषामपि लिङ्गशरीरनाशस्य समानत्वात् तद्भावात् ब्रह्मण्येकीभावाच्चेत्यर्थः । औपसदवत् यथा चौपसदानां यज्ञादिकर्तॄणां सर्वेषां स्वर्गलोकप्राप्तिः तद्वत्, निर्गुणब्रह्मसाक्षात्कारवतां सर्वेषामपि लिङ्गशरीरनाशस्य व्यापकब्रह्मण्येकीभावस्य च तुल्यत्वात् परलोकगमनमनुपपन्नमित्यर्थः । तत्र प्रमाणमाह—तदुक्तम् 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते ब्रह्म वेद ब्रह्मैव भवति' इत्यादिषु श्रुतिषु निर्गुणब्रह्मसाक्षात्कारवतां लिङ्गशरीरनाशपूर्वकं ब्रह्मैक्यं प्रतिपादितमित्यर्थः ॥ ३३ ॥

इयदामननाधिकरणम् ॥ २१ ॥

'द्वा सुपर्णा सयुजा सखाया' इति श्रुतौ सुपर्णशब्देन पक्षिणौ उच्येते वा, उत जीवपरमात्मानौ उच्येते वा इति संशये सति निर्णयं करोति—

## इयदामननात् ॥ ३४ ॥

सुपर्णशब्देन जीवपरमात्मानौ उच्येते । कुतः ? इयदामननात् । इयत्तायाः द्वित्वसङ्ख्यायाः आमननात् कथितत्वादित्यर्थः । प्रायेण उपनिषत्सु जीवब्रह्मणोरेव द्वित्वसङ्ख्यानिर्देशात् 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति वाक्यशेषे भोक्तृत्वरूपविरुद्धधर्मनिर्देशाच्च सुपर्णशब्देन लक्षणया जीवपरमात्मानौ प्रतिपाद्येते इति भावः ॥ ३४ ॥

अन्तराधिकरणम् ॥ २२ ॥

वृहदारण्यके 'यत्साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व' इति उषस्तिना प्रश्नः कृतः । तदनन्तरम् 'यत्साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व' इति कहोलकेन प्रश्नः कृतः । तत्र वाक्यद्वयेऽपि ब्रह्मशब्दात्मशब्दाभ्यां जीवभिन्नपरमात्मा प्रतिपाद्यते, उत जीवाभिन्नः परमात्मा प्रतिपाद्यते इति संशये सति निर्णयं करोति—

## अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥

स्वात्मनः स्वाभिन्नस्य सकलजीवाभिन्नस्य परमात्मनः अन्तरा सकलभूतानां हृदयमध्ये अवस्थितत्वमुच्यते, न तु जीवभिन्नस्य परमात्मनः । कुतः ? भूतग्रामवत् भूतग्रामवाक्यवदित्यर्थः । 'एको देवः सर्वभूतेषु गूढः' इति श्रुतौ सकलजीवाभिन्नस्य परमात्मनः सकलभूतहृदयान्तर्वर्तित्वप्रतिपादनात् तदनुसारेण यत् साक्षादपरोक्षात् ब्रह्मेति प्रश्नद्वयेऽपि जीवाभिन्नस्यैव परमात्मनः सकलभूतहृदयान्तर्वर्तित्वमुच्यत इत्यर्थः ॥ ३५ ॥

ननु ब्रह्मसाक्षात्कारवतामुषस्तिकहोलकादीनामृषीणां लोकोपकारार्थं खलु प्रश्नः तथा च एकेनैव प्रश्नेन लोकोपकारस्य सिद्धत्वात् प्रश्नद्वयं व्यर्थमिति प्रासङ्गिकीं शङ्कामाशङ्क्य निराकरोति—

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अन्यथा प्रष्टव्यभेदं विना भेदानुपपत्तिः प्रश्नभेदानुपपत्तिः लोके दृष्टा । तथा च प्रकृतेऽपि प्रष्टव्यस्य जीवब्रह्माभेदस्य प्रश्नद्वयेऽपि एकत्वात् प्रश्नद्वयं व्यर्थमिति चेत्, उपदेशान्तरवदुपपत्तेः । यथा श्वेतकेतुना 'भूय एव मा भगवान् विज्ञापयतु' इति नववारं प्रश्ने कृते उद्दाल-

केन तत्त्वमसीति नववारमुत्तरं दत्तम्, एवमत्रापि उषस्तिकहोलकाभ्यां प्रश्नद्वये कृते शाकल्येन उत्तरद्वयं दत्तमिति न विरोधः। जीवब्रह्माभेदस्य अत्यन्तं दुर्विज्ञेयत्वेन बुद्धिशोधनार्थं बहुप्रश्नानां बहुवचनानां च सफलत्वादिति भावः॥ ३६॥

व्यतिहाराधिकरणम्॥ २३॥

अहङ्ग्रहोपासकानां सत्यसंकल्पादिगुणविशिष्टं ब्रह्मास्मीत्येवंरूपेण जीवस्य ब्रह्माभेदमात्रं ध्यातव्यं वा, उत अहं ब्रह्मास्मि ब्रह्माहमस्मीत्येवंरूपेण सगुणब्रह्मजीवयोः परस्पराभेदो ध्यातव्यो वा इति संशये सति निर्णयं करोति—

## व्यतिहारो विशिंषन्ति हीतरवत्॥ ३७॥

सगुणब्रह्मजीवयोः व्यतिहारः परस्पराभेद एव ध्यातव्यः। कुतः? विशिंषन्ति 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादिश्रुतयः परस्परमभेदं ध्यातव्यं विशिंषन्ति प्रतिपादयन्ति खलु। तत्र दृष्टान्तमाह—इतरवत् त्वं ब्रह्मासि अहं ब्रह्मास्मीत्यादिवाक्यवदित्यर्थः। 'यथा त्वं ब्रह्मासि अहं ब्रह्मास्मि' इतिवाक्यं निर्गुणब्रह्मजीवयोः परस्पराभेदं ध्यातव्यं प्रतिपादयति, एवम् 'त्वं वा अहमस्मि' इत्यादिवाक्यं सगुणब्रह्मजीवयोः परस्पराभेदमेव ध्यातव्यं प्रतिपादयतीत्यर्थः॥ ३७॥

सत्याद्यधिकरणम्॥ २४॥

'उपसंहारोऽर्थाभेदात्' इति सूत्रे सामान्यतः सजातीयोपासनानां भिन्नशाखागतानां गुणानामुपसंहार उक्तः। इदानीं तु तमेव गुणोपसंहारं सूत्रद्वयेन उपासनाद्वये विशिष्य प्रतिपादयति—

## सैव हि सत्यादयः॥ ३८॥

छान्दोग्यशाखायां बृहदारण्यकशाखायां च विहिता शाण्डिल्यविद्या सैव एकैव। तथा च सत्यादयः सत्यसंकल्पत्वादयः गुणाः एकैकस्यां शाखायां श्रूयमाणाः शाखाद्वयेऽप्युपसंहर्तव्या इत्यर्थः॥ ३८॥

कामाद्यधिकरणम्॥ २५॥

## कामादीतरत्र तत्र चायतनादिभ्यः॥ ३९॥

इतरत्र छान्दोग्यशाखायां तत्र च बृहदारण्यकशाखायां च श्रूयमाणा दहरविद्यापि एकैव। कुतः? आयतनादिभ्यः उपास्यस्य दहराकाशस्य हृत्पुण्डरीकस्थानसत्यसंकल्पादिलिङ्गानां शाखाद्वयेऽपि तुल्यत्वा-

दित्यर्थः । तथा च कामादि एकैकस्यां शाखायां श्रूयमाणं सत्यकामत्वादिगुणजातं शाखाद्वयेऽप्युपसंहर्तव्यमित्यर्थः ॥ ३९ ॥

अलोपाधिकरणम् ॥ २६ ॥

'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन' इति श्रुतौ वैश्वानरोपासकानां प्राणाग्निहोत्रं एकादशीप्रभृतिषु उपवासदिनेष्वपि कर्तव्यं वा, उत भोजनदिनेष्वेव कर्तव्यं वा इति संशये सति निर्णयं कर्तुं प्रथमं पूर्वपक्षमाह—

## आदरादलोपः ॥ ४० ॥

वैश्वानरोपासकानां प्राणाग्निहोत्रस्यैकादशीप्रभृतिषु दिनेषु अलोपः अनुष्ठानलोपो न कर्तव्यः । कुतः ? आदरात् आदरार्थं वैश्वानरोपासनायाः साङ्गत्वसिद्ध्यर्थमित्यर्थः । तथा च एकादश्यादिदिनेष्वपि किंचिदन्नं पक्त्वा वैश्वानरोपासकेन पञ्चप्राणाहुतिमात्रं कर्तव्यमित्यर्थः ॥ ४० ॥

सिद्धान्तः—

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

उपस्थिते भोजने प्रसक्ते सति अतः भोजनार्थं पकादन्नात् तत् प्राणाग्निहोत्रं कर्तव्यम् । कुतः ? वचनात् 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इति भोजनार्थं पकस्यैवान्नस्य प्राणाग्निहोत्रसाधनत्वप्रतिपादनादित्यर्थः । तथा च उपवासदिनेषु प्राणाग्निहोत्रार्थं पाको न कर्तव्य इति भावः । न च वैश्वानरोपासकानाम् अन्येषां च विशेषो न स्यादिति वाच्यम् । हृदयादिषु गार्हपत्यादिदृष्टेरेव विशेषत्वादिति भावः ॥ ४१ ॥

तन्निर्धारणानियमाधिकरणम् ॥ २७ ॥

प्रसङ्गात् प्राणाग्निहोत्रं विचार्य इदानीमङ्गावबद्धोपासनानामाज्यसमित्पुरोडाशादीनामिव कर्माङ्गत्वम्, उत स्वातन्त्र्येण फलान्तरसाधनत्वमिति संशये सति निर्णयं करोति—

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

तेषु कर्माङ्गेषु उद्गीथाहवनीययूपादिषु यानि निर्धारणानि ब्रह्मदृष्टिरूपाणि अङ्गावबद्धोपासनाज्ञानानि, तेषामनियमः कर्मानुष्ठानकाले अनुष्ठाननियमाभावः । अङ्गत्वाद्यभाव एवाङ्गीकर्तव्यः । कुतः ? तद्दृष्टेः तेषामङ्गावबद्धोपासनाज्ञानरहितानामपि ऋत्विजां कर्मानुष्ठानदर्शनादित्यर्थः । अङ्गावबद्धोपासनानां कर्माङ्गत्वाभावे स्वातन्त्र्येण फलान्तरसाधनत्वं वक्तव्यम् । किं तत् फलमित्याकाङ्क्षायामाह—पृथग्घ्यप्रतिबन्धः

फलं पृथक् कर्मफलात् स्वर्गाद्भिन्नः अप्रतिबन्धः स्वर्गादिफलप्रतिबन्धकपापनिवृत्तिरेव अङ्गावबद्धोपासनानां फलमङ्गीक्रियत इत्यर्थः। न चात्र प्रमाणाभावः। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतौ अङ्गावबद्धोपासनादिविशिष्टस्य कर्मणः वीर्यवत्तरत्वप्रतिपादनात्। अङ्गावबद्धोपासनाविशिष्टस्य कर्मणः वीर्यवत्तरत्वं नाम प्रतिबन्धकपापानां नष्टत्वादव्यवहितभविष्यज्जन्मन्येव स्वर्गप्राप्तिसंपादकत्वम्। अङ्गावबद्धोपासनारहितस्य तु कर्मणः फलप्रतिबन्धकभूतानां प्रबलपापानां विद्यमानत्वात् प्रबलपापानां भोगेन क्षयानन्तरं द्वित्रजन्मावसाने स्वर्गप्राप्तिसंपादकत्वमिति विलम्बेन स्वर्गप्राप्तिहेतुत्वादवीर्यवत्तरत्वमिति भावः॥ ४२॥

प्रदानाधिकरणम् ॥ २८॥

यस्य स्वर्गादिफलप्राप्तिप्रतिबन्धकपापमेव नास्ति, तस्य पुरुषस्य अङ्गावबद्धोपासनं व्यर्थं स्यादित्याशङ्क्याह—

## प्रदानवदेव तदुक्तम् ॥ ४३॥

प्रकृष्टं दानं यस्य तत् प्रदानम्। यथा यथोक्तदक्षिणापेक्षया अधिकदक्षिणाविशिष्टस्य कर्मणः बहुकालं स्वर्गलोकभोगसंपादकत्वम्, एवम् अङ्गावबद्धोपासनासहितस्य पूर्वमेव फलप्रतिबन्धकपापरहितस्य कर्मणः बहुकालं स्वर्गभोगफलसाधनत्वं युक्त्या निश्चीयत इत्यर्थः। तदुक्तम् अधिकदक्षिणाविशिष्टस्य यागस्य बहुकालं स्वर्गलोकसंपादकत्वं पूर्वमीमांसायामुक्तमित्यर्थः। कालस्य बहुत्वं नाम कृप्तकालापेक्षया द्विगुणत्वमिति भावः॥ ४३॥

लिङ्गभूयस्त्वाधिकरणम् ॥ २९॥

'षट्त्रिंशत्सहस्राण्यात्मनोऽग्नीनर्कान्मनोमयान्मनःश्चितान्वेद' इत्याद्यग्निचयनप्रकरणस्थायां श्रुतावुपासकस्य शतसंवत्सरपरिमितायुषः संवत्सरावयवभूतेषु षट्त्रिंशत्सहस्रपरिमितेषु दिनेषु मध्ये एकैकस्मिन् दिने उत्पद्यमानासु मनोवृत्तिरूपासु इष्टकासु एकैकाग्निचयनदृष्टौ मरणपर्यन्तं कृतायां सत्याम् उपासकस्य ब्रह्मलोकप्राप्तिर्भवतीत्युक्तम्। तत्र इदं मानसाग्निचयनं कर्मकाण्डविहितस्य इष्टकामयस्याग्निचयनस्य अङ्गं वा-उत स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनं वा इति संशये सति निर्णयं करोति—

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

इदं मानसाग्निचयनं स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनमेव । कुतः ? लिङ्गभूयस्त्वात् ब्रह्मलोकप्राप्तिफलकत्वेन मरणपर्यन्तानुष्ठेयत्वादिरूपाणां लिङ्गानां बहूनां विद्यमानत्वात् । तल्लिङ्गं बलीयः प्रकरणापेक्षया बलवत्तरं खलु । तदपि बलवत्तरत्वमपि पूर्वमीमांसायामेव प्रतिपादितमित्यर्थः । 'षट्त्रिंशत्सहस्राण्यात्मनोऽग्नीनर्कान्मनोमयान् मनश्चितान्वेद' इत्यादिश्रुतेरयमर्थः—मनुष्याणां शतसंवत्सरपरिमितमायुः । तत्र एकैकसंवत्सरस्य षष्ट्युत्तरशतत्रयपरिमितानि दिनानि । एवंप्रकारेण संवत्सरशतस्यापि षट्त्रिंशत्सहस्रदिनानि भवन्ति । तथा च षट्त्रिंशत्सहस्रदिनानां मध्ये एकैकस्मिन् दिने अहोरात्राभ्यामुत्पद्यमानासु मनोवृत्तिषु एकैकाग्निचयनदृष्टिः कर्तव्या । तथा च षट्त्रिंशत्सहस्रसंख्याविशिष्टानात्मनः स्वस्य मनश्चितान् मनोवृत्तिभिः संपादितान् अर्कान् सूर्यसदृशान् सूर्यवत् शीघ्रफलप्रदान् मनोमयान् मानसान् अग्नीन् अग्निचयनप्रकारान् यः वेद मरणपर्यन्तं उपासीत, स ब्रह्मलोकं प्राप्नोतीत्यर्थः ॥४४॥

पूर्वपक्षसूत्रम्—

## पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४५ ॥

मानसाग्निचयनस्य पूर्वविकल्पः पूर्वस्मिन् कर्मकाण्डविहिते इष्टकामयाग्निचयने विकल्पः अनुष्ठाननियमोऽङ्गीकर्तव्यः । इष्टकामयाग्निचयनाङ्गत्वमङ्गीकर्तव्यमित्यर्थः । कुतः ? प्रकरणात् मानसाग्निचयनस्य इष्टकामयाग्निचयनप्रकरणपठितत्वादित्यर्थः । तत्र दृष्टान्तमाह—क्रियामानसवत् द्वादशाहरूपक्रियाङ्गभूतमानससोमग्रहवदित्यर्थः । द्वादशाहप्रकरणस्थया 'अनया त्वा पात्रेण समुद्रं रसया सोमं संगृह्णामि' इतिश्रुत्या विहितस्य मानससोमग्रहस्य प्रकरणबलात् यथा द्वादशाङ्गत्वमङ्गीकृतम्, एवं मानसाग्निचयनस्य प्रकरणबलादग्निचयनाङ्गत्वमङ्गीकर्तव्यमित्यर्थः । तथा च अङ्गाङ्गिनोरेकफलत्वात् अङ्गिनः अग्निचयनस्य यत् फलं स्वर्गलोकप्राप्तिरूपं, तदेवाङ्गस्य मानसाग्निचयनस्यापि फलमित्यङ्गीकर्तव्यम् । न तु स्वातन्त्र्येण ब्रह्मलोकप्राप्तिरिति भावः ॥ ४५ ॥

## अतिदेशाच्च ॥ ४६ ॥

अग्निचयनमिति नाम्नः उभयत्रापि तुल्यत्वेन अतिदेशात् नाम-

साम्यादपि मानसाग्निचयनस्य इष्टकामयाग्निचयनाङ्गत्वमङ्गीकर्तव्यमित्यर्थः ॥ ४६ ॥

सूत्रद्वयेन पूर्वपक्षमुक्त्वा सिद्धान्तमाह—

**विद्यैव तु निर्धारणात् ॥ ४७ ॥**

मानसाग्निचयनं विद्यैव ब्रह्मलोकप्राप्तिहेतुभूता स्वतन्त्रोपासनैव । कुतः ? निर्धारणात् 'विद्यया हैवं विपश्चितो भवन्ति' इति श्रुतौ विद्याशब्देन स्वतन्त्रोपासनात्वनिश्चयादित्यर्थः ॥ ४७ ॥

**दर्शनाच्च ॥ ४८ ॥**

इष्टकामयाग्निचयनानुष्ठानमकुर्वतोऽपि ब्रह्मलोकप्राप्त्युद्देशेन मानसाग्निचयनानुष्ठानदर्शनादपि मानसाग्निचयनस्य न प्रसिद्धाग्निचयनाङ्गत्वम् । किं तु स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनत्वमित्यर्थः ॥ ४८ ॥

यच्चोक्तं प्रकरणबलात् मानसाग्निचयनस्य इष्टकाग्निचयनाङ्गत्वमिति, तस्य परिहारमाह—

**श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥**

श्रुतिलिङ्गवाक्यानां प्रकरणापेक्षया बलीयस्त्वात् अधिकबलवत्त्वात् प्रकरणेन श्रुतिलिङ्गयोर्बाधो नास्ति । किं तु श्रुतिलिङ्गाभ्यामेव प्रकरणस्य बाध इत्यर्थः ॥ ४९ ॥

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥**

इष्टकाग्निचयनाङ्गसदृशानां मानसानां समित्कुशपुरोडाशाज्यप्रभृतीनाम् अनुबन्धानामङ्गानामुपदेशादिभ्यः हेतुभ्यः मानसाग्निचयनाख्यः कर्मविशेषो दृष्टः स्वातन्त्र्येण ब्रह्मलोकप्राप्तिलक्षणफलसाधनतया निश्चितः । साङ्गस्य मानसस्य कर्मणः स्वातन्त्र्येण फलसाधनत्वे दृष्टान्तमाह—प्रज्ञान्तरपृथक्त्ववत् प्रज्ञान्तरस्य 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्यादिश्रुतिप्रतिपादितस्य साङ्गस्य मानसज्योतिष्टोमस्य यथा पृथक्त्वं स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनत्वं, तद्वन्मानसस्याग्निचयनस्यापि स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनत्वमुपपन्नमित्यर्थः । तदुक्तं तत् मानसज्योतिष्टोमस्य स्वातन्त्र्येण फलसाधनत्वं 'पुरुषविद्यायामिव चेतरेषामनाम्नानात्' इतिसूत्रे उक्तं प्रतिपादितमित्यर्थः ॥ ५० ॥

यच्चोक्तमिष्टकाग्निचयनमानसाग्निचयनयोरग्निचयनमिति नामसाम्या-

दुभयोः सादृश्यं प्रतीयते । तच्च सादृश्यमुभयोरङ्गाङ्गिभावेन मिलित्वा एकस्वर्गजनकत्वरूपमेव वक्तव्यम् । अन्यस्य सादृश्यस्य प्रकृतेऽसंभवादिति, तस्य परिहारमाह—

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥**

सामान्यात् नामसाम्यादपि इष्टकाग्निचयनमानसाग्निचयनयोः सादृश्यं नाङ्गीकर्तव्यम् । कुतः ? उपलब्धेः सादृश्यं विनापि नामसामान्यस्य लोके उपलभ्यमानत्वात् । तत्र दृष्टान्तमाह—मृत्युवत् यथा मृत्युसादृश्यं विनापि कस्यचित् पुरुषस्य मृत्युरयमिति नामसादृश्यं दृश्यते, तथा कृष्णोऽयं रामोऽयमित्यादिकमपि द्रष्टव्यम् । लौकिकदृष्टान्तमुक्त्वा वैदिकदृष्टान्तमप्याह—नहि लोकापत्तिः लोकस्य स्वर्गलोकस्यापत्तिः अग्निसादृश्यप्राप्तिर्नास्ति खलु । 'असौ वाव लोको गौतमाग्निः' इति श्रुतौ स्वर्गलोकस्य अग्निरिति नामधेयं श्रुत्या प्रतिपादितम् । तत्र यथा अग्निस्वर्गलोकयोः सादृश्याभावेऽपि नामसाम्यं श्रुत्या प्रतिपादितम्, एवम् इष्टकाग्निचयनमानसाग्निचयनयोः सादृश्याभावेऽपि नामसाम्यमुपपद्यत इत्यर्थः । वस्तुतस्तु इष्टकाग्निचयनमानसाग्निचयनयोरङ्गाङ्गिभावेन एकफलसाधनत्वरूपसादृश्याभावेऽपि समानाङ्गवत्त्वरूपसादृश्यमादायापि नामसाम्यमुपपन्नमिति द्रष्टव्यम् ॥ ५१ ॥

ननु यदि मानसाग्निचयनं स्वातन्त्र्येण ब्रह्मलोकप्राप्तिसाधनं स्वतन्त्रोपासनं, तर्हि मानसाग्निचयनं मानसज्योतिष्टोमवत् उपनिषत्स्वेव पठितव्यम् । तथा च कर्मकाण्डस्थेष्टकाग्निचयनसन्निधौ पठितत्वमसङ्गतमित्याशङ्कायामाह—

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥**

इष्टकाग्निचयनमानसाग्निचयनयोरुभयोरपि शब्दस्य नाम्ना ताद्विध्यं साम्यमस्ति । तथा च उभयोः नामसामान्यात् भूयस्त्वात् परस्परसदृशाङ्गबाहुल्याच्च मानसाग्निचयनस्य परेण कर्मकाण्डस्थेन इष्टकामयेनाग्निचयनेनानुबन्धः इष्टकाग्निचयनसन्निधौ पठितत्वमुपपन्नमित्यर्थः ॥ ५२ ॥

शरीरे भावाधिकरणम् ॥ ३० ॥

एवमुपासनास्वरूपं विचार्य प्रसङ्गात् सगुणोपासनासु कर्तारं देहादिव्यतिरिक्तजीवात्मानमिदानीं विचारयितुं प्रथमं पूर्वपक्षमाह—

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥**

एके लोकायतिकादयः आत्मनः जीवस्य शरीरे अन्तर्भावं वदन्ति । जीवस्य शरीराभिन्नत्वं वदन्तीत्यर्थः । कुतः ? भावात् शरीरधर्माणां स्थूलत्वकृशत्वादीनां जीवात्मनि प्रतीतेरित्यर्थः ॥ ५३ ॥

सिद्धान्तः—

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥**

उपलब्धिवत् उपलब्धेः आत्मनश्च यथा परस्परमभेदः, एवं शरीरात्मनोरभेदः नतु नास्त्येव, किं तु व्यतिरेकः भेद एवाङ्गीकर्तव्यः । कुतः ? तद्भावाभावित्वात् तस्य शरीरस्य मरणानन्तरम् इह लोके भावेऽपि जीवस्य अभावित्वात् अविद्यमानत्वात् स्वर्गलोकनरकलोकादिपरलोकगमनादित्यर्थः । न च मरणानन्तरं जीवस्य स्वर्गलोकगमने प्रमाणं नास्तीति वाच्यम् । श्रुतिस्मृतीतिहासपुराणानामेव प्रमाणत्वादिति भावः ॥ ५४ ॥

अङ्गावबद्धाधिकरणम् ॥ ३१ ॥

एवं प्रासङ्गिकीं चिन्तां सुत्रद्वयेन परिसमाप्य प्रस्तुतामेव चिन्तां करोति—

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥**

नानाशाखासु विहिता अङ्गावबद्धोपासनाः प्रतिवेदं प्रतिशाखं व्यवस्थिताः न भवन्ति । स्वशाखाविहितासु उपासनासु स्वेषामेवाधिकार इति नियमो नास्ति । किं तु सर्वशाखाविहितासु अङ्गावबद्धोपासनासु सर्वेषामपि शाखिनामधिकारोऽस्तीत्यर्थः । इदमुपलक्षणम् । अहङ्ग्रहोपासनासु प्रतीकोपासनासु च सर्वशाखाविहितासु सर्वेषामपि शाखिनामधिकारोऽस्तीति द्रष्टव्यम् ॥ ५५ ॥

तत्र दृष्टान्तमाह—

**मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥**

यथा शाखान्तरविहितेषु मन्त्रसमित्कुशपुरोडाशप्रभृतिषु कर्माङ्गेषु शाखान्तरस्थानामपि कर्मिणामधिकारः, एवं शाखान्तरविहितासु उपासनासु शाखान्तरस्थानामप्यधिकाराङ्गीकारे अविरोधः विरोधो नास्तीत्यर्थः ॥ ५६ ॥

भूमज्यायस्त्वाधिकरणम् ॥ ३२ ॥

छान्दोग्ये 'नाम ब्रह्मेत्युपासीत, वाचं ब्रह्मेत्युपासीत, मनो ब्रह्मेत्युपा-

सीत' इत्यादीनि बहूनि प्रतीकोपासनानि विधाय तदनन्तरम् 'भूमा त्वेव विजिज्ञासितव्यो भूमानं भगवो विजिज्ञासे यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत् पश्यत्यन्यच्छृणोति अन्यद्विजानाति तदल्पम्' इति श्रुतौ भूमाख्यब्रह्मोपासना च विहिता। तत्र किं सर्वासामुपासनानां समप्राधान्यम्, उत भूमोपासनाया एव प्राधान्यम्, इतरासां तु तदङ्गत्वं वा इतिसंशये सति निर्णयं करोति—

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥

भूम्नः भूमाख्यब्रह्मोपासनस्यैव ज्यायस्त्वं प्रधानत्वं भूमोपासनायामेव वाक्यस्य महातात्पर्यं, नामाद्युपासनानां तु ब्रह्मोपासनां प्रति अङ्गत्वेन उपसर्जनत्वम्। तथा च नामाद्युपासनासु अवान्तरतात्पर्यम्। क्रतुवत् तथा अङ्गिनः ज्योतिष्टोमादिक्रतोः प्रधानत्वं, अङ्गानां तु समित्कुशादीनाम् उपसर्जनत्वं, तद्वदित्यर्थः। तत्र प्रमाणमाह—तथाहि दर्शयति 'अथ यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्' इति श्रुतिः नामाद्युपासनानामल्पत्वमुपसर्जनत्वं प्रतिपादयतीत्यर्थः ॥ ५७ ॥

ननु नामाद्युपासनासु वाक्यस्य अवान्तरतात्पर्यमपि नास्ति। 'नाम ब्रह्मेत्युपासीत' इति वाक्यसंदर्भस्य सर्वस्यापि स्थूलारुन्धतीन्यायेन ब्रह्मोपासनायामेव तात्पर्यात्। तथा च नामाद्युपासनानां कथं ब्रह्मोपासनाङ्गत्वमित्याशङ्क्याह—

नानाशब्दादिभेदात् ॥ ५८ ॥

नानाविधानि अनेकानि नामाद्युपासनान्यपि अङ्गीकर्तव्यानि। कुतः? शब्दादिभेदात् 'नाम ब्रह्म इत्युपासीत, वाचं ब्रह्मेत्युपासीत, मनो ब्रह्मेत्युपासीत' इत्यादिवाक्येषु उपास्तिशब्दानां बहूनां श्रूयमाणत्वात् नामाद्युपास्तीनां फलभेदश्रवणाच्च नामाद्युपासनास्वपि अवान्तरतात्पर्यमङ्गीकर्तव्यमित्यर्थः ॥ ५८ ॥

विकल्पाधिकरणम् ॥ ३३ ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

दहरशाण्डिल्योपकोसलवैश्वानरप्रभृतीनां ब्रह्मलोकप्राप्तिफलकानामहङ्ग्रहोपासनानां विकल्पः अनुष्ठानविकल्पः अङ्गीकर्तव्यः, न तु समुच्चयः। एतासु उपासनासु मध्ये एकेन पुरुषेणैकैवोपासना मरणपर्यन्तं

कर्तव्या, न तु द्वे, तिस्रः, चतस्रो वा, उपासनाः कर्तव्या इत्यर्थः । कुतः? अविशिष्टफलत्वात् अहंग्रहोपासनानां सर्वासामपि तुल्यफलकत्वादित्यर्थः ॥ ५९ ॥

काम्याधिकरणम् ॥ ३४ ॥

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥**

काम्याः आदित्यमण्डलनाममनःप्रभृतिषु जडपदार्थेषु ब्रह्मदृष्टिरूपाः ऐश्वर्यादिभिन्नाभिन्नफलसाधनीभूताः प्रतीकोपासनाः यथाकामं यथेच्छं समुच्चीयेरन्न वा, एतासां प्रतीकोपासनानां समुच्चयो वा, विकल्पो वेति अनियम एवाङ्गीकर्तव्य इत्यर्थः । कुतः ? पूर्वोक्तहेत्वभावात् पूर्वोक्तस्य तुल्यफलकत्वरूपस्य हेतोः अत्राभावादित्यर्थः ॥ ६० ॥

यथाश्रयभावाधिकरणम् ॥ ३६ ॥

अङ्गावबद्धोपासनानामपि प्रतीकोपासनानामिव अनियमं वक्तुं प्रथमं सूत्रचतुष्टयेन पूर्वपक्षमाह—

पूर्वपक्षः—

**अङ्गेषु यथाश्रयभावः ॥ ६१ ॥**

अङ्गेषु उद्गीथाहवनीययूपवेदिप्रभृतिषु ब्रह्मदृष्टिरूपेषु अङ्गावबद्धोपासनेषु यथाश्रयभावः यथाश्रयाणां ब्रह्मत्वारोपं प्रति अधिष्ठानभूतानामुद्गीथादीनामङ्गानां समुच्चयः, एवं तदाश्रितानाम् अङ्गावबद्धोपासनानामपि समुच्चय इत्यर्थः ॥ ६१ ॥

अङ्गानां वा कथं समुच्चयः, समुच्चयबोधकप्रमाणाभावादित्याशङ्क्याह—

**शिष्टेश्च ॥ ६२ ॥**

कर्मकाण्डश्रुतिषु अङ्गानां समुच्चयस्य शिष्टेः शासनादित्यर्थः ॥ ६२ ॥

समुच्चये लिङ्गमाह—

**समाहारात् ॥ ६३ ॥**

[1]वेदान्तरोदितस्य वेदान्तरे समाहारादङ्गानां समुच्चयः ॥ ६३ ॥

अस्त्वङ्गानां समुच्चयः तथापि अङ्गाश्रितानामुपासनानां कथं समुच्चय इत्याशङ्क्याह—

**गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥**

---

१ ' कल्पसूत्रादिग्रन्थेष्वपि अङ्गानां मेलनरूपस्य समाहारस्य प्रतिपादितत्वादित्यर्थः ॥ ६३ ॥' इति पुस्तकान्तरपाठः ।

अङ्गावबद्धोपासनानामपि 'यदेव विद्यया करोति' इति श्रुत्या कर्माङ्गत्वस्य प्रतिपादितत्वेन गुणसाधारण्यश्रवणादङ्गसाम्यप्रतिपादनादङ्गानामिव अङ्गावबद्धोपासनानामपि समुच्चय इत्यर्थः ॥ ६४ ॥

सिद्धान्तः—

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

न वा अङ्गावबद्धोपासनानां समुच्चयनियमो नास्त्येव । कुतः? तत्सहभावाश्रुतेः तासाम् अङ्गावबद्धोपासनानां सहभावस्य समुच्चयस्य अश्रवणादित्यर्थः । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतौ अङ्गावबद्धोपासनानां कर्माङ्गत्वं न प्रतिपाद्यते । 'तन्निर्धारणानियमस्तदृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' इति सूत्रे कर्माङ्गत्वस्य निरस्तत्वात् । किं तु अङ्गावबद्धोपासनापूर्वकं कर्मानुष्ठाने कृते सति स्वर्गादिफलोत्पत्तिबन्धकपापानां निवृत्त्या शीघ्रमेव फलोत्पत्तिर्भवतीत्येतावन्मात्रमेव 'यदेव विद्यया करोति' इति श्रुत्या प्रतिपाद्यते । तथा च अङ्गावबद्धोपासनानामपि प्रतीकोपासनानामिव समुच्चयो वा विकल्पो वेत्यनियम इति भावः ॥ ६५ ॥

दर्शनाच्च ॥ ६६ ॥

एकद्वित्र्यङ्गावबद्धोपासनापरिज्ञानवतां सर्वात्मना अङ्गावबद्धोपासनापरिज्ञानरहितानां च ऋत्विजां कर्मानुष्ठातृत्वदर्शनादपि नाङ्गावबद्धोपासनानां कर्माङ्गत्वं, न वा समुच्चय इत्यर्थः । न च अङ्गावबद्धोपासनानां कर्माङ्गत्वाभावे फलप्रतिबन्धकपापरहितानां पुरुषाणामङ्गावबद्धोपासनानुष्ठानवैयर्थ्यं स्यादिति वाच्यम् । अङ्गावबद्धोपासनासहकृतकर्मानुष्ठानवतां बहुकालस्वर्गभोगस्य 'प्रदानवदेव तदुक्तम्' इति सूत्रे प्रतिपादितत्वादिति भावः ॥ ६६ ॥

इति ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य तृतीयः पादः ॥

---

## तृतीयाध्यायस्य चतुर्थः पादः ।

पुरुषार्थाधिकरणम् ॥ १ ॥

कालान्तरभाविपारलौकिकस्वर्गादिफलभोगयोग्यस्य देहेन्द्रियान्तःकरणव्यतिरिक्तस्य नित्यस्यात्मनो ज्ञानं विना कालान्तरभाविलोकान्तर-

भाविस्वर्गादिफलभोगसाधनेषु बहुवित्तव्ययायाससाध्येषु कर्मसु प्रेक्षावतां प्रवृत्त्यसंभवात् देहादिव्यतिरिक्तात्मज्ञानस्य ज्योतिष्टोमादिसकलकर्मानुष्ठानाङ्गत्वं वक्तव्यम्। तथा च अङ्गाङ्गिनोरेकफलसाधनत्वात् अङ्गिना कर्मणां यत् फलं स्वर्गादिकं, तदेव अङ्गस्य देहादिव्यतिरिक्तात्मज्ञानस्यापि फलमित्यङ्गीकर्तव्यम्। तथा च कर्मानुष्ठानाङ्गस्य देहादिव्यतिरिक्तात्मज्ञानस्य स्वातन्त्र्येण मोक्षलक्षणफलान्तरसाधनत्वासंभवात् उत्तरमीमांसारम्भो व्यर्थ इति पूर्वमीमांसका वदन्ति। तन्मतं निराकर्तुं प्रथमं सिद्धान्तमाह—

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

अतः ब्रह्मसाक्षात्कारात् पुरुषार्थः मोक्षोऽस्तीति बादरायणो मन्यते। कुतः? शब्दात् 'तरति शोकमात्मवित्' इत्यादिश्रुतेरित्यर्थः ॥ १ ॥

पूर्वपक्षः—

शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥

शेषत्वाद्देहादिव्यतिरिक्तात्माविषयकज्ञानस्य कर्माङ्गत्वेन ज्ञानविषयीभूतस्यात्मनोऽपि कर्माङ्गत्वात् 'तरति शोकमात्मवित्' इत्यादिवाक्यं पुरुषार्थवादः पुरुषस्य देहादिव्यतिरिक्तस्य आत्मनः अर्थवादः स्तावकः आत्मज्ञानस्तुतिद्वारा आत्मस्तुतिपरमित्यर्थः। तत्र दृष्टान्तमाह—यथा अन्येषु अन्येषां द्रव्यदेवताकर्मरूपाणामङ्गानां 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति, वायुर्वै क्षेपिष्ठा देवता, यत् प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते' इत्यादिवाक्यं यथा स्तुतिपरं, तद्वदित्यर्थः ॥ २ ॥

आत्मज्ञानस्य स्वातन्त्र्येण मोक्षसाधनत्वाभावे हेत्वन्तरमाह—

आचारदर्शनात् ॥ ३ ॥

आत्मसाक्षात्कारवतां जनकादीनामपि आचारदर्शनात् कर्मानुष्ठानदर्शनात् आत्मज्ञानस्य कर्माङ्गत्वमेव, न स्वातन्त्र्येण मोक्षसाधनत्वमित्यर्थः ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतौ विद्याशब्दवाच्यस्य आत्मज्ञानस्य कर्मानुष्ठानाङ्गत्वश्रवणादपि आत्मज्ञानस्य न स्वातन्त्र्येण मोक्षसाधनत्वमित्यर्थः। यत् कर्म विद्यया

देहातिरिक्तात्मज्ञानेन श्रद्धया आस्तिक्येन च उपनिषदा इन्द्रादिध्यानेन सहकृतः सन् करोति, तदेव कर्म वीर्यवत्तरम् अविलम्बेन स्वर्गादिफलजनकमित्यर्थः ॥ ४ ॥

समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतौ आत्मज्ञानकर्मणोः समन्वारम्भणात् जीवेन सह परलोकगमनश्रवणादपि आत्मज्ञानस्य स्वातन्त्र्येण मोक्षसाधनत्वं न संभवति। मोक्षसाधनत्वाङ्गीकारे इहैव लोके मोक्षजननसमर्थत्वेन परलोकगमनस्य व्यर्थत्वादित्यर्थः। तं परलोकं गच्छन्तं कर्मिणं विद्याकर्मणी आत्मज्ञानकर्मणी, समन्वारभेते सम्यगनुसृत्य गच्छतः, पूर्वप्रज्ञा पूर्वजन्मन्यभ्यस्ता स्रक्चन्दनादिविषयभोगवासना च गच्छतीति श्रुत्यर्थः ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥

'य एवं विद्वान् यजते' इति श्रुतौ आत्मज्ञानवतः कर्मविधानादपि आत्मज्ञानं कर्माङ्गमेव, न स्वातन्त्र्येण मोक्षसाधनमित्यर्थः। यः पुरुषः विद्वान् देहादिव्यतिरिक्तात्मज्ञानवान् सन् यजते यागं करोति, तस्य कर्म शीघ्रमेव फलजनकमिति श्रुत्यर्थः ॥ ६ ॥

नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति श्रुतौ मरणपर्यन्तं ज्ञानिनामज्ञानिनां च कर्मानुष्ठानस्य आवश्यकत्वश्रवणादपि आत्मज्ञानस्य स्वातन्त्र्येण मोक्षसाधनत्वं न संभवति। मोक्षसाधनत्वाङ्गीकारे आत्मज्ञानोत्पत्त्यनन्तरं कर्मानुष्ठानस्य व्यर्थत्वादित्यर्थः ॥ ७ ॥

सिद्धान्तसूत्रम्—

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

देहेन्द्रियान्तःकरणव्यतिरिक्तस्यात्मनः 'तत्त्वमसि। अहं ब्रह्मास्मि' इति वाक्यैः अधिकोपदेशात् अधिकस्य ब्रह्माभेदस्योपदेशात् तत्त्वमस्यादिवाक्यजन्यं जीवब्रह्माभेदविषयकं ज्ञानं बादरायणस्य मते एवं मोक्षसाधनं, न तु देहादिव्यतिरिक्तात्मज्ञानमात्रम्। कुतः? तद्दर्शनात् 'ब्रह्म वेद ब्रह्मैव भवति। ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिषु जीवब्रह्माभेदज्ञानस्य मोक्षसाधनत्वश्रवणादित्यर्थः। 'ब्रह्म वेद ब्रह्मैव भवति'

इत्यादिबहुवाक्यानुसारेण 'तरति शोकमात्मविद्' इति वाक्येऽपि आत्मशब्देन ब्रह्माभिन्नो जीव एवोच्यते। तथा च देहादिव्यतिरिक्तात्मज्ञानमात्रस्य कर्मानुष्ठानाङ्गत्वेऽपि जीवब्रह्माभेदज्ञानस्य कर्मानुष्ठानाङ्गत्वाभावात् स्वातन्त्र्येण मोक्षरूपफलान्तरसाधनत्वमुपपन्नमिति भावः॥ ८

यच्चोक्तं ज्ञानिनां जनकादीनामपि कर्मानुष्ठानदर्शनात् आत्मज्ञानं न मोक्षसाधनमिति, तत्र परिहारमाह–

तुल्यं तु दर्शनम् ॥ ९ ॥

ज्ञानिनां शुकादीनां सकलकर्मानुष्ठानपरित्यागेन तूष्णीमवस्थानमपि दृष्टम्। तथा च लिङ्गदर्शनं मतद्वयेऽपि तुल्यम्। एवंस्थिते सति बहूनां ज्ञानिनां कर्मानुष्ठानपरित्यागस्य दृष्टत्वात् जनकाद्यनुसारेण केषांचित् ज्ञानिनां कर्मानुष्ठानं कुतूहलार्थं वा, लोकशिक्षार्थं वा भविष्यतीति न तावन्मात्रेण जीवब्रह्माभेदज्ञानस्य कर्माङ्गत्वमिति भावः॥ ९ ॥

यच्चोक्तम् 'यदेव विद्यया करोति' इति श्रुत्या ज्ञानस्य कर्माङ्गत्वं प्रतिपाद्यत इति, तस्य परिहारमाह–

असार्वत्रिकी ॥ १० ॥

ब्रह्मलोकप्राप्तिहेतुभूतदहरशाण्डिल्यवैश्वानरोपकोसलादिसगुणब्रह्मविद्या मोक्षसाधनीभूतनिर्गुणब्रह्मविद्या च सार्वत्रिकी सकला इयं विद्याशब्देन नोच्यते, किं तूद्गीथादिषु कर्माङ्गेषु ब्रह्मदृष्टिरूपा या अङ्गावबद्धोपासना, सा 'यदेव विद्यया करोति' इति श्रुतौ विद्याशब्देनोच्यते। तथा चाङ्गावबद्धोपासनाया एव कर्माङ्गत्वं, न सगुणब्रह्मोपासनायाः, न वा निर्गुणब्रह्मज्ञानस्येत्यर्थः॥ १० ॥

यच्चोक्तम् 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतौ आत्मज्ञानकर्मणोरङ्गाङ्गिभावेन मिलितयोः स्वर्गलोकप्राप्तिसाधनत्वप्रतिपादनात् आत्मज्ञानस्य स्वातन्त्र्येण मोक्षसाधनत्वं न संभवतीति, तस्य परिहारमाह—

विभागः शतवत् ॥ ११ ॥

'तं विद्याकर्मणी' इति श्रुतौ विद्याशब्देन निर्गुणब्रह्मज्ञानं नोच्यते। निर्गुणब्रह्मज्ञानिनाम् इहैव लिङ्गशरीरनाशपूर्वकम् इहैव ब्रह्मण्येकीभा-

वस्य श्रुतिषु प्रतिपादितत्वेन परलोकगमनप्रसक्तेरभावात्। किं तु विद्या-शब्देन सगुणब्रह्मोपासनैवोच्यते। एवंस्थिते सति 'तं विद्याकर्मणी समन्वारभेते' इति श्रुतौ विभागो निश्चीयते। कथं? त्वं देवयानमार्गेण ब्रह्मलोकं गच्छन्तं सगुणब्रह्मोपासकं विद्या सगुणब्रह्मोपासना समन्वारभते अनुसृत्य गच्छति, तं धूमादिमार्गेण स्वर्गलोकं गच्छन्तं कर्मिणं ज्योतिष्टोमादिरूपं कर्म समन्वारभते अनुसृत्य गच्छति, इत्येवंविभागो निश्चीयते। शतवत् द्वयोः ब्राह्मणयोः शतं पणा दातव्या इति लौकिकवाक्ये एकस्य ब्राह्मणस्य पञ्चाशत्पणा दातव्याः, अन्यस्य ब्राह्मणस्य पञ्चाशत्पणा दातव्या इति विभागो यथा निश्चीयते, तद्वदित्यर्थः। सगुणब्रह्मोपासनाकर्मणोः स्वातन्त्र्येण प्रत्येकं ब्रह्मलोकस्वर्गलोकप्राप्तिसाधनत्वेन क्लृप्तत्वात् उभयोर्मिलित्वा स्वर्गलोकप्राप्तिं प्रति, ब्रह्मलोकप्राप्तिं प्रति वा साधनत्वासंभवात् विभाग एव श्रुत्यर्थ इति निश्चीयत इति भावः। ननु, 'तं विद्याकर्मणी समन्वारभेते' तं स्वर्गलोकं गच्छन्तं कर्मिणं विद्याकर्मणी विद्या शब्देन कर्माङ्गभूतं देहादिव्यतिरिक्तात्मज्ञानमुच्यते। कर्मशब्देन तदङ्गकम् अग्निहोत्रादिकमुच्यते। उभे अपि समन्वारभेते अनुसृत्य गच्छत इत्येवं श्रुत्यर्थोऽस्त्विति चेत्, इष्टापत्तेः। देहादिव्यतिरिक्तात्मज्ञानमात्रस्य अस्माभिरपि कर्माङ्गत्वाङ्गीकारात् जीवब्रह्माभेदज्ञानस्य कर्माङ्गत्वनिराकरण एवास्माकमाग्रहः। तथा चास्माकमविरोधिनः अर्थाः अस्याः श्रुतेः शतमुच्यन्तां, तथापि नास्माकमनिष्टमिति भावः॥११॥

यच्चोक्तम् 'य एवं विद्वान् यजते' इति श्रुतौ देहादिव्यतिरिक्तात्मज्ञानवतः कर्माधिकारश्रवणात् आत्मज्ञानं कर्मानुष्ठानाङ्गमिति, तस्य परिहारमाह—

अध्ययनमात्रवतः॥ १२॥

इदमुपलक्षणम्। साङ्गवेदाध्ययनवतः कर्मकाण्डप्रतिपाद्यसाङ्गकर्मज्ञानवतः तर्कशास्त्रप्रतिपाद्यदेहादिव्यतिरिक्तात्मज्ञानवतश्च कर्मानुष्ठाने अधिकारः; न तु उपनिषत्प्रतिपाद्यजीवब्रह्माभेदज्ञानवत इत्यर्थः। तथा च 'य एवं विद्वान् यजते' इतिश्रुतौ विद्वच्छब्देन कर्मकाण्डप्रतिपाद्यार्थज्ञानवान् तर्कशास्त्रप्रतिपाद्यदेहादिव्यतिरिक्तात्मज्ञानवांश्च कर्मानुष्ठानाधिकारीत्युच्यते। न तु ज्ञानकाण्डप्रतिपाद्यजीवब्रह्माभेदज्ञानवान्। जीवब्रह्माभेदज्ञानस्य कर्मानुष्ठानानुपयोगित्वादिति भावः॥ १२॥

यच्चोक्तम्, 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति श्रुतौ ब्रह्मज्ञानवतां ब्रह्मज्ञानरहितानां च सर्वेषामपि मरणपर्यन्तं कर्मानुष्ठानस्यावश्यकत्वप्रतिपादनात् ब्रह्मज्ञानं स्वातन्त्र्येण मोक्षसाधनं नास्तीति, तस्य परिहारमाह—

## नाविशेषात् ॥ १३ ॥

'कुर्वन्नेवेह कर्माणि' इति वाक्यं जीवब्रह्माभेदज्ञानरहितदेहाभिमानपुरुषविषयकम् । कुतः ? अविशेषात् एतस्य वाक्यस्य सामान्यवचनत्वादित्यर्थः । अयं भावः—कुर्वन्नेवेह कर्माणीति वाक्यं ज्ञानिविषयकं वा, अज्ञानिविषयकं वा इति संदेहे प्राप्ते सति, इदं वाक्यम् अज्ञानिविषयकमेवेति निश्चीयते ज्ञानिनां ज्ञानोत्पत्त्युत्तरक्षण एव मोक्षप्रतिपादकबहुश्रुत्यनुसारेण ज्ञानोत्तरकालं कर्मानुष्ठानस्य व्यर्थत्वेन मरणपर्यन्तं कर्मानुष्ठानप्रतिपादकस्य अस्य वाक्यस्य अज्ञानिविषयकत्वस्यैव उचितत्वात् 'कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा' इति स्मृतौ ब्रह्मज्ञानरहितानां कर्मानुष्ठानपरित्यागे सति पातित्यश्रवणादिति भावः ॥ १३ ॥

कुर्वन्नेवेह कर्माणीति वाक्यस्य ज्ञानिविषयकत्वमङ्गीकृत्यापि परिहारान्तरमाह—

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

ज्ञानिनामपि मरणपर्यन्तं कर्मानुष्ठानमावश्यकं, किमु वक्तव्यमज्ञानिनामित्येवंरूपेण कर्मप्रशंसार्थमनुमतिः ज्ञानिनां कर्मानुष्ठानस्य आवश्यकत्वप्रतिपादनं, न तु स्वार्थे तात्पर्यमित्यर्थः ॥ १४ ॥

अस्य वाक्यस्य परिहारान्तरमाह—

## कामकारेण चैके ॥ १५ ॥

एके शाखिनः 'किमर्था वयमध्येष्यामः किमर्था वयं यक्ष्यामः किं प्रजया करिष्यामो येषां नोऽयमात्मा' इति श्रुतौ आत्मज्ञानवतां सकलकर्मानुष्ठानं परित्यज्य कामकारेण स्वेच्छया तूष्णीमवस्थानं प्रतिपादयन्ति । तथा च 'किमर्था वयमध्येष्याम' इति श्रुत्यन्तरविरोधादपि 'कुर्वन्नेवेह कर्माणि' इति वाक्यमज्ञानिविषयकं वा, कर्मप्रशंसापरं वा अङ्गीकर्तव्यमिति भावः ॥ १५ ॥

जीवब्रह्माभेदज्ञानस्य कर्मानुष्ठानानुपयोगित्वात् कर्माङ्गत्वं नास्तीत्यु-

क्तम् । इदानीं तु जीवब्रह्माभेदविषयकसाक्षात्कारस्य सकलकर्मनाशकत्वादपि जीवब्रह्माभेदविषयकमपरोक्षज्ञानं न कर्माङ्गमित्याह—

उपमर्दं च ॥ १६ ॥

जीवब्रह्माभेदविषयकमपरोक्षज्ञानं सकलकर्मणामुपमर्दं नाशकम् 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इत्यादिश्रुतिस्मृतिषु ब्रह्मसाक्षात्कारस्य सकलकर्मनाशकत्वप्रतिपादनादित्यर्थः । तथा च ब्रह्मसाक्षात्कारस्य कर्मनाशकत्वादपि न कर्माङ्गत्वमिति भावः । न च ब्रह्मसाक्षात्कारस्य सकलकर्मनाशकत्वेन कर्मानुष्ठानाङ्गत्वाभावेऽपि श्रवणोत्तरकालीनस्य श्रुतवेदान्तशब्दजन्यस्य जीवब्रह्माभेदविषयकस्य परोक्षज्ञानस्य कर्मानुष्ठानाङ्गत्वं भविष्यतीति वाच्यम् । जीवब्रह्माभेदविषयकशाब्दज्ञाने सति जीवनिष्ठानां कर्तृत्वभोक्तृत्वकिंचिज्ज्ञत्वादिधर्माणां, जीवेन क्रियमाणानाम् अग्निहोत्रादिकर्मणां, जीवेन भुज्यमानानां स्वर्गादिफलानां च मिथ्यात्वनिश्चयात् ईश्वरगतानामपि सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वसर्वजगत्कारणत्वसर्वकर्मफलप्रदातृत्वादिधर्माणां च मिथ्यात्वनिश्चयात् जीवब्रह्माभेदविषयकस्य शाब्दपरोक्षज्ञानस्यापि कर्मानुष्ठानविरोधित्वेन कर्मानुष्ठानाङ्गत्वमनुपपन्नमिति भावः ॥ १६ ॥

जीवब्रह्माभेदविषयकस्य ज्ञानस्य कर्मानुष्ठानाङ्गत्वाभावे हेत्वन्तरमाह—

ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥

शब्दे वेदे 'इमं लोकममुं च लोकं परित्यज्यात्मानमन्विच्छेत् । अथ एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति । संन्यस्य श्रवणं कुर्यात्' इत्यादिश्रुतौ ऊर्ध्वरेतस्सु च ऊर्ध्वरेतसां संन्यासिनां श्रवणमनननिदिध्यासनरूपा ब्रह्मविद्या विहिता । तथा च संन्यासिनां अग्निहोत्रादिकर्मानुष्ठानासंभवात् संन्यास्यधिकारिकस्य ब्रह्मज्ञानस्य कर्मानुष्ठानाङ्गत्वमनुपपन्नमिति भावः ॥ १७ ॥

परामर्शाधिकरणम् ॥ २ ॥

संन्यासाश्रमस्यैवाप्रामाणिकत्वात् संन्यासिनां श्रवणमनननिदिध्यासनरूपायां ब्रह्मविद्यायामधिकार इत्येतदनुपपन्नमिति पूर्वपक्षमाह—

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

'ब्रह्मचार्याचार्यकुलेवासी प्रथमः, यज्ञो दानमध्ययनमिति द्वितीयः,

तप इति तृतीयः, त्रय एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति' इति। ब्रह्मचारीत्यनेन ब्रह्मचर्याश्रम उच्यते। यज्ञदानाध्ययनशब्दैः त्रितयप्रधानको गृहस्थाश्रम उच्यते। तपश्शब्देन तपःप्रधानको वानप्रस्थाश्रम उच्यते। एते त्रयो ब्रह्मचारिगृहस्थवानप्रस्थाः पुण्यलोकभाजो भवन्ति। ब्रह्मसंस्थः निरन्तरं ब्रह्मविचारपरः संन्यासी तु श्रवणमननाद्यनुष्ठानद्वारा अमृतत्वं मोक्षं प्राप्नोतीति श्रुत्यर्थः। एवं स्थितेसति 'ब्रह्मसंस्थोऽमृतत्वमेति' इति वाक्यं परामर्शम् अन्धपरंपरान्यायप्राप्तभ्रमसिद्धसंन्यासस्य अनुवादकं जैमिनिर्मन्यते। कुतः? अचोदना खलु विधायकलिङ्लोट्तव्यप्रत्ययादिकं अस्मिन् वाक्ये नास्ति खलु। न केवलमस्मिन् वाक्ये लिङाद्यभावमात्रं, किं तु 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति वाक्यान्तरमग्निहोत्रादिकर्मत्यागात्मकं संन्यासं अपवदति प्रतिषेधतीत्यर्थः॥ १८॥

सिद्धान्तसूत्रम्—

## अनुष्ठेयं बादरायणः साम्यश्रुतेः॥ १९॥

बादरायणस्तु संन्यासाश्रममनुष्ठेयं प्रामाणिकं मन्यते। कुतः? साम्यश्रुतेः 'ब्रह्मचार्याचार्यकुलेवासी प्रथमः' इत्यादिषु आश्रमचतुष्टयविधायकेषु चतुर्ष्वपि वाक्येषु लिङादिप्रत्ययाभावस्य तुल्यत्वादित्यर्थः। तथा च संन्यासाश्रमस्याप्रामाणिकत्वाङ्गीकारे ब्रह्मचर्यादीनां त्रयाणामप्याश्रमाणामप्रामाणिकत्वं स्यादिति भावः। तथा चानुवादरूपवाक्यप्रतिपादितानामपि चतुर्णामप्याश्रमाणां प्रामाणिकत्वमङ्गीकर्तव्यमिति भावः॥ १९॥

परिहारान्तरमाह—

## विधिर्वा धारणवत्॥ २०॥

धारणवत् 'पित्र्येऽग्निहोत्रे अधस्तात् समिधं धारयन्ननुद्रवेत्। दैवेऽग्निहोत्रे उपरि हि देवेभ्यः समिधं धारयति' इति वाक्ये यथा लिङ्प्रत्ययः अध्याह्रियते, एवम् 'ब्रह्मचार्याचार्यकुलेवासी प्रथमः' इत्यादिषु चतुर्ष्वपि वाक्येषु विधिः तव्यप्रत्ययः अध्याहर्तव्य इत्यर्थः॥ २०॥

### स्तुतिमात्राधिकरणम्॥ ३॥

ब्रह्मविद्यास्तावकतया अर्थवादत्वेनापि 'ब्रह्मसंस्थोऽमृतत्वमेति' इति

वाक्यस्य प्रामाण्यसंभवात् अस्मिन् वाक्ये तव्यप्रत्ययाध्याहारो व्यर्थ इत्याशङ्क्य निराकरोति—

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

उपादानात् ब्रह्मविद्याप्रकरणे अस्य वाक्यस्य पठितत्वात् 'ब्रह्मसंस्थोऽमृतत्वमेति' इति वाक्यं स्तुतिमात्रं श्रवणमननाभ्यासशीलानाम् अग्निहोत्रादिसकलकर्मत्यागेऽपि न दोष इत्येवंरूपेण ब्रह्मविद्याप्रशंसार्थमिदं वाक्यं, न संन्यासतात्पर्यकमिति चेन्न। अपूर्वत्वात् संन्यासस्य प्रमाणान्तरेण अज्ञातत्वात् नित्यनैमित्तिककाम्यकर्मानुष्ठानविक्षेपराहित्यसंपादकतया श्रवणाद्यनुकूलत्वेन सफलत्वाच्च फलवत्यज्ञातेऽर्थे श्रुतेस्तात्पर्यमङ्गीकर्तव्यमित्यर्थः ॥ २१ ॥

भावशब्दाच्च ॥ २२ ॥

'यदहरेव विरजेत्तदहरेव प्रव्रजेत्। संन्यस्य श्रवणं कुर्यात्। इमं लोकममुं च लोकं परित्यज्यात्मानमन्विच्छेत्' इत्यादिबहुश्रुतिषु भावशब्दात् विधायकलिङादिशब्दस्य विद्यमानत्वादपि संन्यासस्य प्रामाणिकत्वमित्यर्थः ॥ २२ ॥

पारिप्लवाधिकरणम् ॥ ४ ॥

इयता सूत्रसंदर्भेण संन्यासस्य ब्रह्मविद्यानुकूलत्वं प्रसाध्य इदानीं उपनिषन्मध्यगतानां याज्ञवल्क्यमैत्रेयीसंवादशाकल्यगार्गीसंवादप्रतर्दनेन्द्रसंवादरूपाणाम् उपाख्यानानामपि ब्रह्मविद्यानुकूलत्वं वक्तुं पूर्वपक्षमाशङ्क्य निराकरोति—

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

पारिप्लवो नाम अश्वमेधाङ्गभूतकर्मविशेषः। तस्मिन् कर्मणि ज्योतिष्टोमादिसकलकर्माङ्गभूताः मन्त्राः पठनीयाः। एवं स्थिते सति याज्ञवल्क्यमैत्रेय्यादिसंवादरूपाः कथाप्रबन्धा अपि पारिप्लवार्थाः कर्मकाण्डस्थपारिप्लवाख्यकर्माङ्गभूता इति चेन्न। विशेषितत्वात् कर्मकाण्डस्थाः सकलकर्माङ्गभूता मन्त्राः पारिप्लवे पठितव्या इति विशिष्योक्तत्वादित्यर्थः। तथा च ज्ञानकाण्डस्थानाम् उपाख्यानानां कर्मकाण्डस्थपारिप्लवकर्माङ्गत्वप्रसक्तिर्नास्तीति भावः ॥ २३ ॥

तर्हि उपाख्यानानां वैयर्थ्यमेव स्यादित्याशङ्क्याह—

**तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥**

तथासति उपाख्यानानां पारिप्लवाङ्गत्वाभावे सति एकवाक्यतोपबन्धात् ब्रह्मविद्याप्रकरणपठितानामुपाख्यानानां ब्रह्मप्रतिपादकवाक्यैः सह एकवाक्यतया उपबन्धात् संबन्धात् ब्रह्मविद्याङ्गत्वमित्यर्थः । उपाख्यानपूर्वकं ब्रह्मप्रतिपादने कृते सति मन्दबुद्धीनामपि सुलभतया ब्रह्मज्ञानमुत्पद्यत इति तदर्थं ब्रह्मप्रतिपादकेषु वेदान्तेषु उपाख्यानान्युक्तानीति भावः ॥ २४ ॥

अग्नीन्धनाधिकरणम् ॥ ५ ॥

सूत्रद्वयेन प्रासङ्गिकीं चिन्तां कृत्वा प्रस्तुतामेव चिन्तां करोति—

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥**

यतः श्रवणमनननिदिध्यासनरूपा ब्रह्मविद्या संन्यास्यधिकारिका, अत एवाग्नीन्धनाद्यनपेक्षा अग्न्याधानाग्निहोत्रादिकर्मणां ब्रह्मसाक्षात्कारं प्रति साक्षादपेक्षा नास्ति । ब्रह्मसाक्षात्कारं प्रति साक्षात् साधनत्वं नास्तीत्यर्थः ॥ २५ ॥

सर्वापेक्षाधिकरणम् ॥ ६ ॥

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इत्यादिश्रुतेः यज्ञादीनां ब्रह्मसाक्षात्कारं प्रति साधनत्वबोधिकायाः अप्रामाण्यं स्यादित्याशङ्क्याह—

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥**

यज्ञादिश्रुतेः 'यज्ञेन दानेन तपसानाशकेन' इतिश्रुतिबलात् सर्वापेक्षा सर्वेषां कर्मणां ब्रह्मसाक्षात्कारं प्रति अपेक्षा परम्परया साधनत्वमङ्गीक्रियते । अश्ववत् अश्वस्य यथा गमनक्रियापरम्परया ग्रामप्राप्तिं प्रति साधनत्वं, तद्वदित्यर्थः । तथा च 'तमेतं वेदानुवचनेन' इत्यादिश्रुतेः चित्तशुद्धिवैराग्यसंन्यासश्रवणमनननिदिध्यासनादिपरम्परया यज्ञादिकर्मणां ब्रह्मसाक्षात्कारं प्रति साधनत्वबोधकत्वात् अप्रामाण्यं नास्तीति भावः ॥ २६ ॥

एवं ब्रह्मसाक्षात्कारं प्रति बहिरङ्गसाधनानि यज्ञादिकर्माणि प्रतिपाद्य इदानीं ततोऽप्यन्तरङ्गसाधनानि शमदमादीनि प्रतिपादयति—

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥**

तथापि संन्यासिनां ब्रह्मसाक्षात्कारं प्रति बहिरङ्गसाधनभूताग्निहोत्रादिकर्मानुष्ठानप्रसक्त्यभावेऽपि संन्यासी शमदमाद्युपेतः स्यात् शमदमादिविशिष्टो भवेत्। कुतः? तदङ्गतया ब्रह्मसाक्षात्कारं प्रति साक्षात्साधनतया तद्विधेस्तेषां शमदमादीनाम् 'शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्' इति वाक्येन विहितत्वाद्धेतोः तेषां शमदमादीनां ब्रह्मसाक्षात्कारं प्रति अन्तरङ्गसाधनानामवश्यमनुष्ठेयत्वात् संन्यासिनामप्यवश्यं संपादनीयत्वादित्यर्थः ॥ २७ ॥

सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

'अथ परिव्राडेकशाटीपरिहितो मुण्डोदरपात्र्यरण्यनित्यो भिक्षार्थं ग्रामं प्रविशेत् आसायं प्रदक्षिणेनाविचिकित्सन् सार्ववर्णिकं भैक्षचर्यमभिशस्तपतितवर्जमयज्ञोपवीती शौचकामनिष्ठमेकं वैणवं दण्डमादत्ते सखे मा गोपाय' इति श्रुतौ निष्कम्पं संन्यासिनां ब्रह्मक्षत्रियवैश्यशूद्रगृहेषु भिक्षाचरणमुक्तं, तच्चापत्कालविषयकमित्याह—

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥**

सार्ववर्णिकं भैक्षचर्यमिति श्रुतौ सर्वान्नानुमतिः सर्ववर्णानां गृहेषु अन्नभक्षणानुज्ञा अस्मिन् युगे प्राणात्यये प्राणसंकटकाल एव, न तु स्वस्थावस्थायाम्। कुतः? तद्दर्शनात् महात्मनां प्राणसंकटसमय एव अभक्ष्यभक्षणदर्शनादित्यर्थः ॥ २८ ॥

**अबाधाच्च ॥ २९ ॥**

भक्ष्याभक्ष्यविभागबोधकश्रुतीनामबाधात् अबाधार्थमपि प्राणसंकटसमय एव अभक्ष्यभक्षणमिति भावः ॥ २९ ॥

**अपि च स्मर्यते ॥ ३० ॥**

अपि च स्मृतिष्वपि भक्ष्याभक्ष्यविभागः प्रतिपाद्यत इत्यर्थः ॥ ३० ॥

**शब्दश्चातोऽकामकारे ॥ ३१ ॥**

यतः सर्वान्नानुमतिः प्राणसंकटविषया, अत एव शब्दः उषस्तिश्चाक्रायणः इभ्येन सामि खादितान् कुल्माषांश्चखाद, जलपानं तु उच्छिष्टदोषान्न कृतवान्, कारणं चात्रोवाच—'न वा अहमजीविष्यमिमानखादन् कामो म उदपानम्' इति श्रुतिः अकामकारे अस्वस्थावस्थायामेव उषस्ति-

नामकऋषेः अभक्ष्यभक्षणे प्रवृत्तिं दर्शयति। तथा च चतुर्णामप्याश्रमिणां प्राणसंकटसमय एव अभक्ष्यभक्षणम्, अभोज्यगृहभोजनं च न स्वस्थावस्थायामिति भावः। इदं कलियुगविषयकं, युगान्तरेषु तु संन्यासिनां चतुर्षु वर्णेषु गृहस्थादीनां त्रिषु वर्णेषु च भोजनकरणेऽपि न दोषः। तथाविधाचारस्य विद्यमानत्वादिति द्रष्टव्यम् ॥ ३१ ॥

आश्रमकर्माधिकरणम् ॥ ८ ॥

संन्यासिनां ब्रह्मसाक्षात्कारं प्रति अन्तरङ्गसाधनं शमदमादिकमनुष्ठेयमित्युक्त्वा बहिरङ्गसाधनमपि किञ्चिदनुष्ठेयमस्तीत्याह—

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

आश्रमकर्मापि स्नानशौचभिक्षाटनादिरूपं बहिरङ्गसाधनमपि संन्यासिनां कर्तव्यम्। कुतः? विहितत्वात् 'विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षान्नो ब्रह्मभूयाय भवति। पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति। अथ परिव्राडेकशाटीपरिहितः' इत्यादिश्रुतिषु संन्यासिनामपि भिक्षाटनादीनामाश्रमधर्माणां विहितत्वादित्यर्थः ॥ ३२ ॥

न केवलं विहितत्वमात्रेण संन्यासिनामाश्रमधर्मानुष्ठानं, किं तु चित्तशुद्धिद्वारा ब्रह्मसाक्षात्कारं प्रति साधनत्वादपीत्याह—

सहकारित्वेन च ॥ ३३ ॥

भिक्षाटनाद्याश्रमकर्मानुष्ठानस्य चित्तशुद्धिद्वारा ब्रह्मसाक्षात्कारं प्रति सहकारित्वेन साधनत्वेन हेतुनापि संन्यासिनां भिक्षाटनादिकर्म अवश्यं कर्तव्यमित्यर्थः ॥ ३३ ॥

इयता सूत्रसंदर्भेण संन्यासिनां धर्मान् प्रतिपाद्य इदानीम् 'ऊर्ध्वरेतस्सु च शब्दे हि' इति सूत्रे उपक्रान्तमूर्ध्वरेतसां ब्रह्मविद्याधिकारित्वमुपसंहरति—

सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥

सर्वथापि सर्वश्रुतिस्मृतिपर्यालोचनयापि त एव ऊर्ध्वरेतस एव श्रवणमनननिदिध्यासनरूपायां ब्रह्मविद्यायामधिकारिणः। सर्वथापीत्येतत्पदं स्वयमेव व्याचष्टे—उभयलिङ्गादिति। उभयलिङ्गात् श्रुतिस्मृतिरूपात् ज्ञापकादित्यर्थः ॥ ३४ ॥

संन्यासिनामेव ब्रह्मविद्याधिकार इत्यत्र हेत्वन्तरमाह—

**अनभिभवं च दर्शयति ॥ ३५ ॥**

'यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्। न सुवृत्तं न दुर्वृत्तं वेद कश्चन स द्विजः। तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येनकेनचित्' इत्यादिस्मृतिः। अनभिभवं मानावमानादिराहित्यं ब्रह्मसाक्षात्कारसाधनं दर्शयति। तच्च मानावमानादिराहित्यं प्रायेण संन्यासिनामेव संभवति, न गृहस्थानां पुत्रदाराद्यभिमानवताम्। तस्मादपि संन्यासिनामेव ब्रह्मविद्याधिकार इति भावः॥ ३५ ॥

तद्दृष्ट्यधिकरणम् ॥ ९ ॥

एवं संन्यासिनामेव ब्रह्मविद्याधिकारं प्रसाध्य इदानीं विधुराणामपि अग्निहोत्रादिकर्मानुष्ठाने विक्षेपाभावात् ब्रह्मचर्यवत्त्वाच्च संन्यासितुल्यत्वात् तेषामपि ब्रह्मविद्यायामधिकारमाह—

**अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥**

दैवात् पत्नीवियोगे सति अन्तरा गृहस्थाश्रमसंन्यासाश्रमयोः मध्ये विद्यमानानामनाश्रमिणां विधुराणामपि श्रवणमननिदिध्यासनरूपायां ब्रह्मविद्यायामधिकारोऽस्ति। कुतः? तद्दृष्टेः अनाश्रमिणामपि बहूनां लोके ब्रह्मसाक्षात्कारवत्त्वदर्शनादित्यर्थः॥ ३६ ॥

**अपि च स्मर्यते ॥ ३७ ॥**

अपि च अनाश्रमिणामपि बहूनां ब्रह्मसाक्षात्कारवत्त्वं मन्वादिस्मृतिषु प्रतिपाद्यत इत्यर्थः॥ ३७ ॥

अनाश्रमिणां ज्ञानसाधनीभूतकर्मानुष्ठानाभावात् कथं ज्ञानोत्पत्तिरित्याशङ्क्याह—

**विशेषानुग्रहश्च ॥ ३८ ॥**

अनाश्रमिभिरनुष्ठितानां विशेषाणां स्नानसंध्याजपादीनामनुग्रहः ज्ञानानुग्राहकत्वमुपपन्नमित्यर्थः॥ ३८ ॥

अनाश्रमिकर्मापेक्षया आश्रमिकर्मणामाधिक्यमाह—

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

अतः अनाश्रमिकृतकर्मापेक्षया इतरत् आश्रमिकृतं कर्म ज्यायः श्रेष्ठम् अविलम्बेन ज्ञानसाधकमित्यर्थः॥ ३९ ॥

तद्भूताधिकरणम् ॥ १० ॥

अनाश्रमिणां विधुराणां श्रवणमनननिदिध्यासनरूपायां ब्रह्मविद्यायामधिकारं प्रतिपाद्य इदानीं संन्यासाश्रमं प्राप्य तं परित्यज्य पुनर्गृहस्थाश्रमं प्राप्तानामाश्रमभ्रंशजन्योत्कृष्टपापविशिष्टानामाश्रमभ्रष्टानां ब्रह्मविद्यायामधिकारो नास्तीति वक्तुमाश्रमभ्रंशस्य शास्त्रप्रतिषिद्धत्वेन पापजनकत्वमाह—

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥४०॥**

तद्भूतस्य संन्यासाश्रमं प्राप्तस्य अतद्भावः संन्यासाश्रमात् भ्रंशः शास्त्रविहितो न भवति । प्रत्युत शास्त्रप्रतिषिद्ध एव । कुतः ? नियमातद्रूपाभावेभ्यः नियमेभ्यः संन्यासाश्रमप्राप्त्यनन्तरं मरणपर्यन्तं संन्यासाश्रमेणैव स्थातव्यं, पुनः न निवर्तितव्यमिति नियमप्रतिपादकेभ्यो मन्वादिवचनेभ्यः, अतद्रूपाभावेभ्यः अतद्रूपाणां नियमाप्रतिपादकानां वचनानामभावेभ्यश्च हेतुभ्यः आश्रमभ्रंशः शास्त्रप्रतिषिद्ध इत्यर्थः । संन्यासाश्रमं प्राप्तस्य संन्यासाश्रम एव मरणपर्यन्तमभिरुचिर्यस्योत्पन्ना तस्य संन्यासाश्रमेणैव अवस्थानं यस्य तु गृहस्थाश्रमेऽभिरुचिरुत्पन्ना तस्य संन्यासाश्रमं परित्यज्य पुनर्गृहस्थाश्रमेणावस्थानमित्येवंविधानियमप्रतिपादकानि वचनानि मन्वादिस्मृतिषु कुत्रापि न सन्तीति भावः ॥ ४० ॥

आधिकारिकाधिकरणम् ॥ ११ ॥

संन्यासाश्रमात् भ्रष्टानां कंचित् कालं गृहस्थाश्रमे स्थितानां पश्चात्तापे सति आश्रमभ्रंशजन्यपापस्य प्रायश्चित्तमस्ति वा, न वेति संशये सति प्रायश्चित्तमस्तीति वक्तुं प्रथमं पूर्वपक्षमाह—

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

आधिकारिकाणां संन्यासाश्रम एव तिष्ठतां संन्यासाश्रमविहितकर्मानुष्ठानं कुर्वतां प्रमादात् सकृद्ब्रह्मचर्यादिभ्रंशवतां यत् प्रायश्चित्तम् अनेकमृत्तिकास्नानम् अनेकसहस्रप्रणवजपप्राणायामादिरूपं मन्वादिस्मृतिषु विहितं, तदपि प्रायश्चित्तमनधिकारिणाम् आश्रमभ्रष्टानां नास्ति । कुतः? पतनानुमानात् । 'प्रायश्चित्तं न पश्यामि येन शुद्धेत् स आत्महा' इतिस्मृतावाश्रमभ्रष्टानां पतितत्वप्रतिपादनात् पतितानां तदयोगात् तस्य प्रायश्चित्तस्यायोगात् अनुपपन्नत्वादित्यर्थः ॥ ४१ ॥

सिद्धान्तसूत्रम्—

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥

अशनवत् ब्राह्मणानां शूद्रादिगृहेषु बहुकालं भोजनजन्यपापवदाश्रमभ्रंशजन्यं पापमपि उपपूर्वमेव उपपातकमेव । तथा च एके मन्वादयः आश्रमभ्रंशजन्यपापस्य भावं प्रायश्चित्तसद्भावं वदन्ति । तदुक्तं तच्च प्रायश्चित्तं भूप्रदक्षिणसकलतीर्थस्नानादिरूपं मन्वादिस्मृतिष्वेवोक्तमित्यर्थः ४२

बहिरधिकरणम् ॥ १२ ॥

आश्रमभ्रष्टानां प्रायश्चित्तेन आश्रमभ्रंशजन्यपापस्य नष्टत्वेन परिशुद्धानां परलोकप्राप्त्यभावेऽपि ब्रह्मविद्यायामधिकारो नास्तीत्याह—

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

आश्रमभ्रष्टानां कृतप्रायश्चित्तानाम् अकृतप्रायश्चित्तानां च उभयविधानामपि बहिष्कारः कर्तव्यः । प्रायश्चित्तकरणानन्तरमपि तेषां वेदान्तशास्त्रं गुरुभिर्न पाठनीयं, शिष्टैरपि तेषां निकटे वेदान्तश्रवणं न कर्तव्यं, सहश्रोतृभिरपि तैः सह एकगुरुनिकटे वेदान्तश्रवणं न कर्तव्यम् । तैः सह पङ्क्तिभोजनादिकमपि न कर्तव्यमित्यर्थः । कुतः ? स्मृतेः बहुस्मृतीनां विद्यमानत्वात्, आचारात् शिष्टाचाराच्चेत्यर्थः । कृतप्रायश्चित्तानां तु मरणपर्यन्तं संन्यासाश्रमधर्ममनुतिष्ठतां जन्मान्तरे श्रवणाद्यनुष्ठानेन ब्रह्मसाक्षात्कार इति भावः । इदं सर्वं विविदिषासंन्यासविषयकम् । विद्वत्संन्यासिनां तु ब्रह्मसाक्षात्कारवह्निना ब्रह्महत्यादिमहापातकानामपि दग्धत्वात् प्रायश्चित्तापेक्षा नास्तीति द्रष्टव्यम् ॥ ४३ ॥

स्वाम्यधिकरणम् ॥ १३ ॥

उद्गीथाहवनीययूपादिषु कर्माङ्गेषु ब्रह्मदृष्टिरूपाणि अङ्गावबद्धोपासनानि यजमानस्य वा अनुष्ठेयानि, उत ऋत्विजां वा अनुष्ठेयानीति संदेहे सति निर्णयं कर्तुं प्रथमं पूर्वपक्षमाह—

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

अङ्गावबद्धोपासनानि स्वामिनः यजमानस्य अनुष्ठेयानीति आत्रेयो मन्यते । कुतः ? फलश्रुतेः यजमानस्य फलश्रवणादित्यर्थः । तथा च यजमानस्य अङ्गावबद्धोपासनाजन्यफलभोक्तृत्वात् अङ्गावबद्धोपासनानि यजमानेनैव कर्तव्यानीत्यर्थः ॥ ४४ ॥

सिद्धान्तः—

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥**

अङ्गावबद्धोपासनम् आर्त्विज्यम् ऋत्विजामनुष्ठेयमित्यौडुलोमिर्मन्यते । कुतः ? तस्मै साङ्गकर्मानुष्ठानाय दक्षिणादिना ऋत्विक्परिक्रीयते खलु । तथा च परिक्रीतैः ऋत्विग्भिः कृतानि कर्माणि यथा यजमानस्य फलजनकानि, एवमङ्गावबद्धोपासनान्यपि ऋत्विग्भिरनुष्ठितानि यजमानस्य फलजनकानीत्यर्थः ॥ ४५ ॥

अङ्गावबद्धोपासनायाम् ऋत्विजामपि फलश्रवणाच्च अङ्गावबद्धोपासनानि ऋत्विगनुष्ठेयानीत्याह—

**श्रुतेश्च ॥ ४६ ॥**

'आत्मने वा यजमानाय वा यं कामं कामयते, तं काममागायति' इति श्रुतौ ऋत्विग्यजमानयोरुभयोरपि अङ्गावबद्धोपासनाजन्यफलश्रवणादपि ऋत्विजामनुष्ठेयानि अङ्गावबद्धोपासनानीत्यर्थः । आत्मने स्वस्मै यजमानाय वा यं कामं कामयते ऋत्विक्, तं काममुद्दिश्य आगायति उद्गीथे ब्रह्मदृष्टिपूर्वकम् उद्गीथगानं करोतीति श्रुत्यर्थः । सूत्रत्रयमपि प्रसङ्गादागतं न प्रकृतोपयुक्तमिति द्रष्टव्यम् ॥ ४६ ॥

सहकार्यन्तरविध्यधिकरणम् ॥ १४ ॥

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववद्' इति सूत्रे संन्यासाश्रमात् पूर्वमनुष्ठेयानि ब्रह्मसाक्षात्कारं प्रति परम्परया साधनत्वेन बहिरङ्गसाधनानि यज्ञादिकर्माणि प्रतिपाद्य संन्यासाश्रमानन्तरमनुष्ठेयानि ब्रह्मसाक्षात्कारं प्रति साक्षात्साधनत्वेन अन्तरङ्गसाधनानि शमदमादीन्यपि 'शमदमाद्युपेतः स्यात्' इति सूत्रे प्रतिपाद्य इदानीं ततोऽप्यन्तरङ्गसाधनानि श्रवणमनननिदिध्यासनानि प्रतिपादयति—

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥**

विध्यादिवत् विध्यादौ कर्मकाण्डे यथा गृहस्थाश्रमवतः अग्निहोत्रादीनि बहूनि कर्माणि स्वर्गादिफलोद्देशेन विहितानि एवं तद्वतः संन्यासाश्रमवतः पुरुषस्य 'तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य' इति ज्ञानकाण्डस्थश्रुतौ सहकार्यन्तरविधिः शमदमाद्यपेक्षया सहकार्यन्तराणां श्रवणमनननिदिध्यासनानां ब्रह्मसाक्षात्कारोद्देशेन विधिरङ्गीकर्तव्यः । तत्र त्रयाणां मध्ये श्रवणमनने सर्वेषामपि ब्रह्मसाक्षात्कारकामानां बहुकालमनुष्ठा-

तव्ये। तृतीयं निदिध्यासनं तु पक्षेण कालविकल्पेन अनुष्ठेयम्। येषां श्रवणमननानन्तरमपि ब्राह्मणत्वक्षत्रियत्वादिवर्णाभिमानः, ब्रह्मचारित्वगृहस्थत्वाद्याश्रमाभिमानः, जातिकुलाद्यभिमानः, स्थूलोऽहं कृशोऽहं कर्ताहं भोक्ताहमित्येवंविधो देहाद्यभिमानो दृढो वर्तते, तेषां बहुकालं निदिध्यासनं कर्तव्यम्। येषां तु अतिशुद्धान्तःकरणानां देहाभिमानः श्रवणमननाभ्यामेव शिथिलीभूतः, तेषां स्वल्पकालनिदिध्यासनेनैव साक्षात्कारोत्पत्तेः बहुकालं निदिध्यासनं न कर्तव्यमित्यर्थः। इदमुपलक्षणम्। अत्यन्तविशुद्धान्तःकरणानामत्यन्तेश्वरानुग्रहवतां श्रवणमनने अपि स्वल्पकालमेव अनुष्ठातव्ये, अन्येषां तु बहुकालमनुष्ठातव्ये इति श्रवणमनननिदिध्यासनानां त्रयाणामपि पुरुषभेदेन कालविकल्प इति द्रष्टव्यम्। 'तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य' इति श्रुतेरयमर्थः—तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इति। सर्वे कर्माणि संन्यस्य साधनचतुष्टयानन्तरं पाण्डित्यं श्रवणं निर्विद्य कृत्वा बाल्येन श्रवणजन्यज्ञानस्य बलसंपादकेन दार्ढ्यसंपादकेन मननेन तिष्ठासेत् मननं कुर्वन् स्थातुमिच्छेत्, बाल्यं च पाण्डित्यं च निर्विद्य मननं श्रवणं च कृत्वा अथ मुनिः मौनशीलः निदिध्यासनशीलो भवेत। एवम् अमौनं मौनात् निदिध्यासनादन्यत् श्रवणमननद्वयं, मौनं निदिध्यासनं च लब्ध्वा अथ ब्राह्मणः ब्रह्मसाक्षात्कारवान् मुख्यब्राह्मणो भवेदित्यर्थः॥ ४७॥

'अभिसमावृत्य कुटुम्बे शुचौ देशे यावज्जीवं स्वाध्यायमधीयीत' इति श्रुतौ ब्रह्मचर्याश्रममुपक्रम्य गृहस्थाश्रमस्य उपसंहृतत्वात् ब्रह्मचर्यगृहस्थाश्रमौ द्वावेव प्रामाणिकौ, संन्यासाश्रमस्त्वप्रामाणिकः। तथा च गृहस्थानामेव अग्निहोत्रादिकर्मसु श्रवणमननादिषु च अधिकारः न संन्यासिनामित्याशङ्कयाह—

## कृत्स्नभावात्तु गृहिणोपसंहारः॥ ४८॥

कृत्स्नभावात् कृत्स्नानां सकलाश्रमधर्माणाम् इन्द्रियनिग्रहतपोब्रह्मचर्यादीनां भावात् गृहस्थाश्रमे विद्यमानत्वात् तावन्मात्रेण गृहिणा गृहस्थाश्रमिणा उपसंहारः कृतः, न तु संन्यासाश्रमव्यवच्छेदाभिप्रायेण। संन्यासाश्रमविधायकानां बहुश्रुतिवाक्यानां विद्यमानत्वात्। तथा च गृहस्थानां नित्यनैमित्तिककाम्यकर्मानुष्ठानपूर्वकत्वेन श्रवणमनननिदिध्यास-

नानुष्ठानेऽवकाशाभावात् संन्यासिनामेव श्रवणादावधिकारः । तथा च कर्मकाण्डविहितेषु अग्निहोत्रादिकर्मसु ज्ञानकाण्डविहितेषु श्रवणमननादिषु च अधिकारभेद एवाङ्गीकर्तव्य इति भावः । यद्यपि 'अनुष्ठेयं बादरायणः साम्यश्रुतेः' इति सूत्र एव संन्यासाश्रमः स्थापितः, तथापि श्रवणादौ अधिकारिचिन्ताप्रसङ्गात् 'कृत्स्नभावात्तु गृहिणोपसंहारः' इति सूत्रे संन्यासाश्रमो दृढीकृत इति न पौनरुक्त्यमिति द्रष्टव्यम् । अभिसमावृत्य स्वाध्यायाध्ययनपरिसमाप्त्यनन्तरं गुरुगृहान्निर्गत्य स्वगृहं गत्वा कुटुम्बे गृहस्थाश्रमे स्थित्वा अविरक्तश्चेत् शुद्धस्थले यावज्जीवं ब्रह्मयज्ञस्वाध्यायाध्ययनं कुर्यात्, विरक्तश्चेत् कंचित्कालं गृहस्थाश्रमे स्थित्वा पश्चात् संन्यासाश्रमं स्वीकृत्य श्रवणमननादिकं कुर्यादित्यर्थः । तथा च यावज्जीवमित्येतदविरक्तविषयकमिति द्रष्टव्यम् ॥ ४८ ॥

तर्हि ब्रह्मचर्यगार्हस्थ्यसंन्यासाश्रमास्त्रयोऽपि प्रामाणिका भवन्तु नाम । वानप्रस्थाश्रमस्तु अप्रामाणिक एव । वानप्रस्थाश्रमासाधारणस्य कस्यचिदनुष्ठेयस्याभावादित्याशङ्क्याह—

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

मौनवत् मौनप्रधानकानां संन्यासिनामसाधारणश्रवणमननादिविधानवत् इतरेषां वानप्रस्थानामप्युपदेशात् उपवासप्रधानस्य कायक्लेशहेतुभूतस्य आश्रमान्तरासाधारणस्य तपसः श्रुतिस्मृत्यादिषु विहितत्वादित्यर्थः । तथा च ब्रह्मचारिणां यथेष्टभोजनपूर्वकं स्वाध्यायाध्ययनमसाधारणो धर्मः । गृहस्थानामपि यथोचितभोजनपूर्वकमग्निहोत्रादिकर्मानुष्ठानमसाधारणो धर्मः । संन्यासिनामपि यथोचितभोजनपूर्वकं श्रवणमननाद्यनुष्ठानमसाधारणो धर्मः । वानप्रस्थानां तु प्रायशः उपवासप्रधानकं शरीरशोषणहेतुभूतं पञ्चाग्निमध्यावस्थानरूपं तपश्चरणमसाधारणो धर्मः । तथा च स्वाध्यायाध्ययनाग्निहोत्रादिकर्मानुष्ठानकृच्छ्रचान्द्रायणादितपश्चरणवेदान्तश्रवणरूपेषु चतुर्षु असाधारणधर्मेषु चतुर्णामाश्रमिणाम् अधिकार इति भावः ॥ ४९ ॥

अनाविष्कुर्वदधिकरणम् ॥ १६ ॥

'बाल्येन तिष्ठासेत्' इति श्रुतौ बाल्यशब्देन ब्रह्मज्ञानस्य दार्ढ्यरूपबलसंपादकं मननमुच्यत इति 'सहकार्यन्तरविधिः' इति पूर्वसूत्रे उक्तम् । इदानीं बालसादृश्यं बाल्यमिति बाल्यशब्दस्यार्थान्तरमप्याह—

अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

कृतसंन्यासो ब्राह्मणः पाण्डित्यं श्रवणमननोभयरूपं पाण्डित्यं निर्विद्य संपाद्य बाल्येन बालसदृशतया तिष्ठेदिति श्रुतेरर्थः । अस्मिन्नर्थे बाल्यशब्दस्यार्थमाह—अनाविष्कुर्वन् बालकवत् स्वस्य ज्ञानवैराग्यादिकं लोकानामप्रकटयन् दम्भदर्पाहङ्कारादिरहितः सन् कृतश्रवणमननः संन्यासी सर्वदा ब्रह्मध्यानं कुर्वन् तिष्ठेदित्यर्थः । कुतः ? अन्वयात् दम्भदर्पाहंकारादिराहित्यस्य ध्यानं प्रति साधनत्वेनान्वितत्वादित्यर्थः ॥ ५० ॥

ऐहिकमप्यप्रस्तुतप्रतिबन्ध इत्यधिकरणम् ॥ १६ ॥

एवं ब्रह्मसाक्षात्कारस्य अन्तरङ्गसाधनानि बहिरङ्गसाधनानि च निरूप्य इदानीमस्मिन् जन्मनि कृतश्रवणमनननिदिध्यासनस्य पुरुषस्य अस्मिन्नेव जन्मनि ब्रह्मसाक्षात्कारोत्पत्तिर्वा जन्मान्तरे वेति संशये सति निर्णयं करोति—

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

अप्रस्तुतप्रतिबन्धे प्रस्तुतानां श्रवणमनननिदिध्यासनानां दृढदेहाद्यभिमानलक्षणे प्रतिबन्धके असति ऐहिकं ज्ञानमस्मिन्नेव जन्मनि ब्रह्मसाक्षात्कार उत्पद्यते । दृढदेहाभिमानलक्षणप्रतिबन्धके सति तु जन्मान्तरे पुनरपि श्रवणमनननिदिध्यासनानुष्ठानानन्तरं ब्रह्मसाक्षात्कार उत्पद्यत इत्यर्थः । कुतः ? तद्दर्शनात् ‘ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ’ इत्यादिस्मृतिवाक्येषु प्रबलदेहाभिमानवतामनेकजन्मसु श्रवणमननाद्यनुष्ठानेन साक्षात्कारवत्त्वप्रतिपादनादित्यर्थः । तथा च विशुद्धान्तःकरणानां स्वल्पदेहाभिमानवतामीश्वरानुग्रहवताम् एकजन्मानुष्ठितश्रवणमननादिभिरेव ब्रह्मसाक्षात्कारोदयः, अन्येषां तु बहुजन्मानुष्ठितश्रवणमननादिभिः साक्षात्कारोत्पत्तिरिति भावः ॥ ५१ ॥

मुक्तिफलानियमाधिकरणम् ॥ १७ ॥

ब्रह्मसाक्षात्कारे उक्तं न्यायं मोक्षेऽप्यतिदिशति—

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

ब्रह्मसाक्षात्कारवत् मुक्तिफलस्यापि मोक्षरूपफलस्याप्यनियमः अस्मिन्नेव जन्मनि मोक्षोदय इति नियमो नास्त्येव । किं तु ईश्वरानुग्रहवतां कृतश्रवणमनननिदिध्यासनानां पुरुषाणामस्मिन्नेव जन्मनि मोक्षोदय अन्येषां तु जन्मातरे मोक्षोदय इत्येवंविधो नियमोऽङ्गीकर्तव्यः । कुतः?

तदवस्थावधृतेः तदवस्थाया मोक्षावस्थायाः अवधृतेः 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिषु मोक्षावस्थायाः ब्रह्मसाक्षात्कारोत्तरकालीनत्वनिश्चयादित्यर्थः । तथाच यस्मिन् जन्मनि ब्रह्मसाक्षात्कारोत्पत्तिः तस्मिन् जन्मनि ब्रह्मभावलक्षणस्य मोक्षस्योत्पत्तिरिति भावः। ब्रह्मभावस्य उत्पत्तिर्नाम विस्मृतकण्ठाभरणस्येव अविद्यावृतस्य ब्रह्मभावस्य जीवब्रह्माभेदविषयकसाक्षात्कारेण अविद्यानिवृत्तौ सत्यामभिव्यक्तिरिति भावः ॥ ५२ ॥

इति ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य चतुर्थः पादः।

---

श्रीमच्छंकरभगवत्पादशिष्यप्रणीता

# ब्रह्मसूत्रवृत्तिः ।

## ( अद्वैतमञ्जरी )

### चतुर्थाध्यायस्य प्रथमः पादः ॥

आवृत्त्यधिकरणम् ॥ १ ॥

**आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

ब्रह्मविषयकश्रवणमनननिदिध्यासनानामसकृत् अनेकवारम् आवृत्तिः कर्तव्या अभ्यासः कर्तव्यः । कुतः ? उपदेशात् 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया । तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । दिने दिने च वेदान्तश्रवणाद् भक्तिसंयुतात् ॥ गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत् ।' इत्यादिस्मृतिषु निरन्तरं ब्रह्मविचारस्य कर्तव्यत्वोपदेशादित्यर्थः ॥ १ ॥

**लिङ्गाच्च ॥ २ ॥**

सुवर्णरत्नमुक्ताविद्रुमादितारतम्यपरिज्ञानस्य बहुकालं विचारसाध्यत्वदर्शनात् तद्दृष्टान्तेन ब्रह्मज्ञानस्यापि बहुकालविचारसाध्यत्वमङ्गीकर्तव्यमित्यर्थः ॥ २ ॥

आत्मेत्यधिकरणम् ॥ २ ॥

निर्गुणश्रवणाद्यावृत्तिं निरूप्य सगुणध्यानस्वरूपं निरूपयति—

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥**

उपासनानि त्रिविधानि—अहंग्रहोपासनानि, प्रतीकोपासनानि, अङ्गावबद्धोपासनानि च । तत्राहंग्रहोपासनानि, दहरशाण्डिल्यवैश्वानरोपकोसलविद्यादीनि । तत्र जीवस्य सगुणब्रह्मणश्चाभेदानुसंधानम् अहंग्रहोपासनेत्युच्यते । जडेषु कर्मानङ्गेषु नामादिपदार्थेषु ब्रह्मादिपदार्थदृष्टिः प्रतीकोपासना । जडेषु कर्माङ्गेषु उद्गीथादिपदार्थेषु ब्रह्मादिपदार्थ-

दृष्टिः अङ्गावबद्धोपासना । एवंस्थिते सति दहरवैश्वानराद्युपासनेषु परमात्मा आत्मेति ध्यातव्यः जीवाभिन्न इत्येव ध्यातव्य इति वृद्धाः उपगच्छन्ति अङ्गीकुर्वन्ति, ग्राहयन्ति च 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादिश्रुतयः जीवानां सगुणब्रह्मणश्च अभेदध्यानमेव प्रतिपादयन्तीत्यर्थः । तथा च 'वैश्वानरोऽहं, दहराकाशोऽहं, अक्षिपुरुषोऽहं, भारूपोऽहम्' इत्येवंरूपेणैव सगुणब्रह्मोपासनानि कर्तव्यानीति भावः ॥ ३ ॥

न प्रतीकाधिकरणम् ॥ ३ ॥

## न प्रतीके न हि सः ॥ ४ ॥

'प्रतीके 'नाम ब्रह्मेत्युपासीत, मनो ब्रह्मेत्युपासीत, आदित्यं ब्रह्मेत्युपासीत ' इत्यादिषु प्रतीकोपासनेषु न जीवब्रह्माभेदध्यानं कर्तव्यम् । कुतः ? नहि सः जीवब्रह्माभेदध्यानोपदेशः । तत्र न हि नास्ति खलु, नामादिब्रह्मणोरेवाभेदध्यानस्य तत्रोपदिष्टत्वात् नामब्रह्माभेदध्यानमेव तत्र कर्तव्यं, न जीवब्रह्माभेदध्यानमित्यर्थः । न च ब्रह्माभिन्ननामाहमस्मि, ब्रह्माभिन्नादित्यमण्डलमहमस्मि, ब्रह्माभिन्नमनोऽहमसीत्येवं ध्यानं कर्तव्यम् । तथाविधविधेरप्यभावात् अविहितकरणस्य निष्फलत्वात् । तस्माद्विध्यनुसारेण जडानां नामादीनां ब्रह्मणश्चाभेदानुसंधानमेव कर्तव्यमिति भावः ॥ ४ ॥

ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

आदित्यमण्डलनाममनआदिषु अधिष्ठानेषु ब्रह्मत्वमारोप्य ध्यानं कर्तव्यं वा ब्रह्मणि अधिष्ठाने नामत्वादित्यमण्डलत्वमनस्त्वादीनि आरोप्य ध्यानं कर्तव्यं वा इति संशये सति निर्णयं करोति—

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

निकृष्टेषु आदित्यमण्डलनामादिषु उत्कृष्टब्रह्मदृष्टिः कर्तव्या । कुतः? उत्कर्षात् फलाधिक्यादित्यर्थः । लोकेऽपि निकृष्टेषु उत्कृष्टदृष्टिः फलाधिक्याय भवति, उत्कृष्टे निकृष्टदृष्टिस्तु फलाधिक्याय न भवति, प्रत्युत अनर्थायैव भवतीति भावः ॥ ५ ॥

आदित्यादिमत्यधिकरणम् ॥ ५ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

'उद्गीथं ब्रह्मेत्युपासीत, आहवनीयं ब्रह्मेत्युपासीत, वेदिं ब्रह्मेत्यु-

पासीत, आदित्यं यूपमित्युपासीत' इत्यादिषु अङ्गावबद्धोपासनेषु आदित्यादिमतयश्च आदित्यब्रह्मादिदृष्टयोऽपि अङ्गे वचनव्यत्ययः छान्दसः अङ्गेष्वित्यर्थः। तथा च अङ्गेषु आहवनीयादिषु कर्तव्याः। कुतः? उपपत्तेः निकृष्टेषूत्कृष्टबुद्धिः फलाधिक्याय भवतीति पूर्वोक्तयुक्तेरित्यर्थः॥ ६॥

आसीनाधिकरणम्॥ ६॥

इदानीं ध्यानसाधनानि आसनादीनि निरूपयति—

**आसीनः संभवात्॥ ७॥**

सुखासने आसीनः सन् ध्यानं कुर्यात्। कुतः? संभवात् आसीनस्यैव चित्तैकाग्र्यसंभवादित्यर्थः॥ ७॥

**ध्यानाच्च॥ ८॥**

ध्यानशब्दार्थपर्यालोचनादपि आसीनेनैव ध्यानं कर्तव्यम्। प्रपञ्चविषयकप्रत्ययतिरस्कारेण ब्रह्मविषयकप्रत्ययप्रवाहीकरणं हि ध्यानशब्दार्थः। एवंविधध्यानं शयानस्य न संभवति निद्रया पीडितत्वात्। तिष्ठतोऽपि न संभवति पादवेदनया पीडितत्वात्। गच्छतोऽपि न संभवति कण्टकादिना पीडितत्वात्। तस्मात् आसीनस्यैव ध्यानमित्यर्थः॥ ८॥

**अचलत्वं चापेक्ष्य॥ ९॥**

अचलत्वं निश्चलत्वं च अपेक्ष्य उद्दिश्य आसीन एव ध्यानं कुर्यादित्यर्थः॥ ९॥

**स्मरन्ति च॥ १०॥**

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' इत्यादिस्मृतयोऽपि आसीनस्यैव ध्यानं प्रतिपादयन्तीत्यर्थः॥ १०॥

यत्रैकाग्रताधिकरणम्॥ ७॥

कस्मिन् देशे ध्यानं कर्तव्यमित्याकाङ्क्षायामाह—

**यत्रैकाग्रता तत्राविशेषात्॥ ११॥**

नदीतीरदेवालयपुण्यक्षेत्रग्रामाणां मध्ये यत्र यस्मिन् देशे मनस एकाग्रता प्रसन्नता, तत्र ध्यानं कर्तव्यम्। कुतः? अविशेषात् शुद्धान्तःकरणस्य सर्वत्रापि मनःप्रसादस्य तुल्यत्वादित्यर्थः॥ ११॥

आप्रायणाधिकरणम् ॥ ८ ॥

कति संवत्सराणि ध्यानं कर्तव्यमित्याकाङ्क्षायामाह—

**आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥**

आप्रायणात् मरणपर्यन्तं ध्यानं कर्तव्यम्। कुतः ? तत्रापि मरणकालेऽपि दृष्टम् 'यं यं वापि स्मरन् भावम्' इत्यादिस्मृतिषु ध्यानं प्रतिपादितमित्यर्थः ॥ १२ ॥

तदधिगमाधिकरणम् ॥ ९ ॥

सगुणध्यानस्वरूपं विचार्य पुनरपि निर्गुणस्वरूपं विचारति। कर्माणि चतुर्विधानि—संचितानि, प्रारब्धानि, अतीतानि, आगामीनि च। तत्र पूर्वजन्मसु कृतानि भविष्यद्देहजननयोग्यानि स्वर्गादिफलोद्देशेन कृतानि कर्माणि संचितानि, महता प्रयासेन श्रवणमनननिदिध्यासनसाक्षात्कारादिसकलमोक्षसाधनसंपादकवर्तमानशरीरारम्भकाणि पूर्वजन्मकृतानि कर्माणि प्रारब्धानि, ब्रह्मसाक्षात्कारोत्पत्तेः पूर्वमस्मिन् जन्मनि जन्मान्तरे वा ब्रह्मसाक्षात्कारोद्देशेन कृतानि कर्माणि अतीतानि, ब्रह्मसाक्षात्कारोत्पत्त्यनन्तरमस्मिन् जन्मनि कृतानि आगामीनि। तत्र चतुर्विधेषु कर्मसु मध्ये संचितानां भविष्यद्देहपरम्परारूपफलमनुत्पाद्यैव नाशम्, आगामिनां च देहाभिमानरहितेन कृतत्वात् फलजननासामर्थ्यं च प्रथमं प्रतिपादयति—

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥**

तदधिगमे तस्य ब्रह्मणः अधिगमे साक्षात्कारे सति उत्तरपूर्वाघयाः आगामिसंचितपापयोरश्लेषविनाशौ भवतः। आगामिपापस्यासंस्पर्शः, संचितपापस्य विनाशश्च भवति। कुतः ? तद्व्यपदेशात् 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत' 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन' इत्यादिश्रुतिस्मृतिषु आगामिसंचितकर्मणोरश्लेषविनाशव्यपदेशादित्यर्थः ॥ १३ ॥

इतराश्लेषाधिकरणम् ॥ १० ॥

पापस्याश्लेषविनाशौ प्रतिपाद्य पुण्यस्याश्लेषविनाशौ प्रतिपादयति—

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥**

पाते ब्रह्मसाक्षात्कारेण देहाभिमाननाशे सति इतरस्य ब्रह्मज्ञानोत्तरकालीनपुण्यस्यासंश्लेषः असंस्पर्शो भवति। इदमुपलक्षणम्। संचितपुण्यस्य नाश इत्यपि द्रष्टव्यम् ॥ १४ ॥

अनारब्धकार्याधिकरणम् ॥ ११ ॥

वर्तमानदेहजनकयोः प्रारब्धपुण्यपापयोस्तु ज्ञानान्नाशो नास्तीत्याह–

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

अनारब्धकार्ये अनुत्पादितवर्तमानशरीरे एव पुण्यपापे नश्यतः, न तु वर्तमानशरीरारम्भके। कुतः? तदवधेः ब्रह्मसाक्षात्कारानन्तरमपि प्रारब्धकर्मनाशपर्यन्तं शरीरावस्थानस्य 'तस्य तावदेव चिरम्' इत्यादिश्रुतिषु प्रतिपादितत्वादित्यर्थः। तस्य तावदेव चिरमित्यादिश्रुतेरयमर्थः— तस्य ब्रह्मसाक्षात्कारवतो जीवन्मुक्तस्य तावदेव चिरं तावानेव विदेहकैवल्यस्य विलम्वः, यावन्न विमोक्ष्ये यावत् प्रारब्धकर्मभिर्न विमुच्यते अथ संपत्स्ये अथ प्रारब्धकर्मनाशानन्तरं संपत्स्ये विदेहकैवल्यं प्राप्नोतीत्यर्थः ॥ १५ ॥

अग्निहोत्राद्यधिकरणम् ॥ १२ ॥

एवमतीतस्य ज्ञानसाधनाग्निहोत्रादेरपि ब्रह्मज्ञानेन नाशो नास्तीत्याह–

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

ज्ञानोद्देशेन कृतमग्निहोत्रादिकं तत्कार्याय ज्ञानरूपकार्याय भवति। कुतः? तद्दर्शनात् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इत्यादिश्रुतिषु अग्निहोत्रादीनां परम्परया ज्ञानसाधनत्वप्रतिपादनात्। तथा चाग्निहोत्रादीनां ब्रह्मज्ञानसाधनत्वेन ब्रह्मज्ञानं प्रत्युपजीव्यत्वात् ब्रह्मज्ञाननाश्यत्वं नास्तीति भावः। यद्यपि कर्मणां फलनाश्यत्वात् फलभूतेन ब्रह्मज्ञानेन नाशोऽस्त्येव, तथापि फलत्वेन रूपेणैव ब्रह्मज्ञानस्य कर्मनाशकत्वं न तु ज्ञानत्वेन रूपेणेति भावः ॥ १६ ॥

ज्ञानसाधनाग्निहोत्रादेः ज्ञानेन नाशाभावे कस्य कर्मणः ज्ञाननाश्यत्वमित्याकाङ्क्षायां संचितकर्मण एव नाश इति पूर्वोक्तं स्मारयति—

## अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

अतः ज्ञानसाधनाग्निहोत्रादेः अन्या स्वर्गादिफलोद्देशेन पूर्वजन्मसु कृता या अग्निहोत्रादिक्रिया, सा ब्रह्मज्ञानेन नश्यति। एकेषामाचार्याणां मते उभयोर्जैमिनिबादरायणयोश्च मत इत्यर्थः ॥

अथवा 'तमेतं वेदानुवचनेन' इति श्रुत्या सर्वेषां कर्मणां ज्ञानसाधन-

त्वेन बोधितत्वात् ज्ञानासाधनीभूतं कर्मैवाप्रसिद्धम् । तथा च 'तदधिगमः' इति सूत्रं निर्विषयकमित्याशङ्क्याह—

अतोऽन्यापि ह्येकेषामुभयोः

एकेषां काण्वानां शाखायां ज्ञानसाधनत्वेन विहितात् अतः अग्निहोत्रादेः अन्या स्वर्गसाधनीभूता अग्निहोत्रादिक्रिया उभयोः जैमिनिबादरायणयोः संमतास्ति । सा ब्रह्मज्ञानेन नश्यतीति 'तदधिगम' इति सूत्रे प्रतिपाद्यते । तथा च सूत्रस्य निर्विषयत्वं नास्तीत्यर्थः । यद्यपि ज्ञानसाधनीभूताग्निहोत्रादिकं स्वर्गादिसाधनीभूताग्निहोत्रादिकं च एकमेव तथापि ज्ञानोद्देशेन कृतं सत् ज्ञानसाधनं, स्वर्गोद्देशेन कृतं सत् स्वर्गसाधनं च भवति । तथा च ज्ञानसाधनत्वस्वर्गसाधनत्वरूपविशेषणभेदात् विशिष्टकर्मभेदमङ्गीकृत्य ज्ञानसाधनीभूताग्निहोत्रादेः स्वर्गसाधनीभूताग्निहोत्रादेश्च भेदव्यपदेश उपपन्न इति भावः ॥ १७ ॥

यदेवाधिकरणम् ॥ १३ ॥

यदेव विद्ययेति हि ॥ १८ ॥

यत् कर्म विद्यया अङ्गावबद्धोपासनया सहकृतं, तदेव कर्म अस्मिन् जन्मनि ब्रह्मज्ञानसाधनम् । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति उपासनासहकृतस्यैव कर्मणः अविलम्बेन ब्रह्मज्ञानसाधनत्वप्रतिपादनादित्यर्थः । उद्गीथाहवनीयादिकर्माङ्गेषु ब्रह्मदृष्टिपूर्वकमनुष्ठितानि अग्निहोत्रादिकर्माणि अस्मिन्नेव जन्मनि ब्रह्मज्ञानं जनयन्ति । उपासनारहितानि तु कर्माणि कालविलम्बेन जन्मपरम्परया ब्रह्मज्ञानजनकानीत्यर्थः ॥ १८ ॥

भोगाधिकरणम् ॥ १४ ॥

प्रारब्धयोः पुण्यपापयोः कदा नाश इत्याकाङ्क्षायामाह—

भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

भोगेन सुखदुःखानुभवेन इतरे वर्तमानशरीरजनके प्रारब्धे पुण्यपापे क्षपयित्वा नाशयित्वा संपद्यते विदेहकैवल्यं प्राप्नोतीत्यर्थः ॥ १९ ॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य प्रथमः पादः ।

---

## ॥ चतुर्थाध्यायस्य द्वितीयः पादः ॥



वाक्संपत्त्यधिकरणम् ॥ १ ॥

मुमूर्षूणामवस्था द्विविधा—मरणावस्था, उत्क्रान्त्यवस्था च । तत्र मरणानन्तरं सगुणब्रह्मोपासकानामर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिः, सुकृतिनां तु धूमादिमार्गेण स्वर्गलोकप्राप्तिः, पापात्मनां तु तृतीयमार्गेण नरकलोकप्राप्तिः, निर्गुणब्रह्मसाक्षात्कारवतां तु अत्रैव ब्रह्मणि लय इति वक्तुं प्रथमं सर्वसाधारणां मरणावस्थां निरूपयति—

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥**

वाक् वागिन्द्रियं मनसि संबध्यते । कुतः ? दर्शनात् लोके मुमूर्षूणां वाग्व्यापारनाशानन्तरमपि मनोव्यापारस्य दर्शनात्, शब्दाच्च 'अस्य प्रयतो जीवस्य वाङ् मनसि संपद्यते मनः प्राणे प्राणोऽध्यक्षे अध्यक्षस्तेजसि तेजः परस्यां देवतायाम्' इति श्रुतौ वागिन्द्रियस्य मनसि संबन्धप्रतिपादनाच्चेत्यर्थः ॥ १ ॥

**अत एव च सर्वाण्यनु ॥ २ ॥**

अत एव वाक्छब्दस्य सर्वेन्द्रियोपलक्षकत्वेन शब्दादर्शनाच्च सर्वाणीन्द्रियाणि वाचमनुसृत्य मनसि संबध्यन्त इत्यर्थः ॥ २ ॥

मनस्संपत्त्यधिकरणम् ॥ २ ॥

**तन्मनः प्राण उत्तरात् ॥ ३ ॥**

तन्मनः प्राणे संबध्यते । कुतः ? उत्तरात् 'मनः प्राण' इत्युत्तरवाक्यादित्यर्थः ॥ ३ ॥

प्राणसंपत्त्यधिकरणम् ॥ ३ ॥

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥**

स प्राणः अध्यक्षे जीवे संबध्यते । कुतः ? तदुपगमादिभ्यः हेतुभ्यः 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति श्रुतौ प्राणादीनां जीवानुगामित्वप्रतिपादनात् जीवेन सह परलोकगमनश्रवणादित्यर्थः ॥ ४ ॥

**भूतेषु तच्छ्रुतेः ॥ ५ ॥**

स चाध्यक्षः भूतेषु पञ्चमहाभूतेषु संबध्यते । कुतः ? तच्छ्रुतेः

'अध्यक्षस्तेजसि' इति श्रुतेस्तेजश्शब्दस्य पञ्चमहाभूतोपलक्षकत्वादिति भावः ॥ ५ ॥

तेजश्शब्दस्य पञ्चमहाभूतोपलक्षकत्वं कथमित्याशङ्क्याह—

**नैकस्मिन् दर्शयतो हि ॥ ६ ॥**

एकस्मिन्नेव तेजसि जीवस्य संबन्धं श्रुतिस्मृती न दर्शयतः न प्रतिपादयतः, किं तु पञ्चमहाभूतेषु । तथा च बहुश्रुतिस्मृत्यनुरोधेन तेजःपदं पञ्चमहाभूतोपलक्षणार्थमित्यर्थः ॥ ६ ॥

आसृत्युपक्रमाधिकरणम् ॥ ४ ॥

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥**

लिङ्गशरीरान्तर्गतानां भूतेन्द्रियमनःप्राणजीवानां हृत्पुण्डरीके परस्परमेलनरूपा इयं मरणावस्था आसृत्युपक्रमात् सृत्युपक्रमं वर्जयित्वा समाना निर्गुणब्रह्मसाक्षात्कारवतां सगुणब्रह्मोपासकानां कर्मिणां च तुल्या । सृत्युपक्रमो नाम हृत्पुण्डरीकस्थस्य पञ्चमहाभूतप्राणेन्द्रियमनःप्रभृतिचतुरङ्गबलपरिवृतस्य जीवाख्यस्य राज्ञः स्वर्गनरकब्रह्मलोकादिराष्ट्रदर्शनार्थं नाडीद्वारा देहाख्यान्तःपुरात् बहिर्निर्गमनरूपा उत्क्रान्तिः । एतामुत्क्रान्तिं विना जीवस्य इन्द्रियादिसकलपरिवारमेलनरूपा मरणावस्था ज्ञानिनामपि तुल्येत्यर्थः । हृत्पुण्डरीके मिलितं ज्ञानिनां लिङ्गशरीरं कुत्र गच्छतीत्याकाङ्क्षायामाह—अमृतत्वं चानुपोष्य ज्ञानिनां लिङ्गशरीरमनुपोष्य लोकान्तरमगत्वा हृत्पुण्डरीकावच्छिन्ने ब्रह्मण्येव अमृतत्वं मोक्षमात्यन्तिकनाशं प्राप्नोतीत्यर्थः । जीवस्तु ब्रह्माभेदं प्राप्नोतीति भावः । तथा च 'तेजः परस्यां देवतायाम्' इति श्रुतिः ज्ञानिमात्रविषया, ततः पूर्वा श्रुतिस्तूपासककर्मिज्ञानिसाधारणेति भावः ॥ ७ ॥

तदापीत्यधिकरणम् ॥ ५ ॥

ननु, 'तेजः परस्यां देवतायाम्' इति श्रुतिरपि पूर्वश्रुतिवत् सर्वसाधारणा भवतु, बाधकाभावादित्याशङ्क्याह—

**तदापीतेः संसारव्यपदेशात् ॥ ८ ॥**

तत् लिङ्गशरीरम् आपीतेः आमोक्षात् ब्रह्मसाक्षात्कारपर्यन्तं तिष्ठति । कुतः ? संसारव्यपदेशात् उपासकानां कर्मिणां च स्वर्गनरकब्रह्मलोकादिसंचारोपदेशादित्यर्थः । तथा च 'तेजः परस्यां देवतायाम्' इति श्रुतेर्ज्ञान्यज्ञानिसाधारणत्वे कर्मकाण्डोपासनाकाण्डयोरप्रामाण्यप्रसङ्गात्

'तेजः परस्यां देवतायाम्' इति श्रुतेर्ज्ञानिमात्रविषयत्वमेवाङ्गीकर्तव्यमिति भावः ॥ ८ ॥

यदि लिङ्गशरीरं मरणकाले शरीराद्बहिर्निर्गच्छति, तर्हि मृतशरीरसमीपवर्तिनां सर्वेषां कथं न दृश्यत इत्याशङ्क्याह—

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

लिङ्गशरीरं सूक्ष्मम् इन्द्रियाग्राह्यं प्रमाणतः परिमाणतोऽपि सूक्ष्मम् । कुतः ? तथोपलब्धेः श्रुतिषु लिङ्गशरीरस्य अतीन्द्रियत्वप्रतिपादनादित्यर्थः ॥ ९ ॥

लिङ्गशरीरस्य स्थूलशरीरात् बहिर्निर्गमने लिङ्गमाह—

**नोपमर्देनातः ॥ १० ॥**

अतः लिङ्गशरीरस्य मरणानन्तरं स्थूलशरीरात् बहिर्निर्गमनादेव उपमर्देन पीडासाधनेन दहनादिना स्थूलशरीरस्य पीडा नास्तीत्यर्थः ॥ १० ॥

लिङ्गान्तरमाह—

**अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥**

अस्य लिङ्गशरीरस्य उपपत्तेः संबन्धादेव जीवनावस्थायां स्थूलशरीरस्य एष ऊष्मा उष्णस्पर्शः सर्वेषामुपलभ्यते । मरणानन्तरं तु शैत्योपलम्भात् लिङ्गशरीरनिर्गमनमनुमीयत इत्यर्थः ॥ ११ ॥

उत्क्रान्तिप्रतिषेधाधिकरणम् ॥ ६ ॥

एतावत्पर्यन्तं निर्गुणब्रह्मज्ञानरहितानां जीवानां लिङ्गशरीरनिर्गमनं प्रसाध्य इदानीं निर्गुणब्रह्मसाक्षात्कारवतां लिङ्गशरीरनिर्गमनाभावं वक्तुं प्रथमं पूर्वपक्षमाह—

**प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥**

'न तस्मात् प्राणा उत्क्रामन्ति' इति श्रुत्या उत्क्रमणप्रतिषेधात् ज्ञानिनां लिङ्गशरीरनिर्गमनं नास्तीति चेन्न । शारीरात् तस्याः श्रुतेः शारीराज्जीवाद्भिना इन्द्रियाणां स्वातन्त्र्येण गमननिषेधप्रतिपादकतया सर्वात्मना गमननिषेधपरत्वाभावादित्यर्थः । अयं भावः—'न तस्मात् प्राणा उत्क्रामन्ति' इति श्रुतेरयमर्थः—तस्माद्ब्रह्मसाक्षात्कारविशिष्टात् जीवाद्भिना प्राणा इन्द्रियाणि नोत्क्रामन्ति, किं तु जीवेन सहैव उत्क्रामन्ति । तथाचास्याः श्रुतेः स्वातन्त्र्येण निर्गमनाभावप्रतिपादकत्वेन जीवविशिष्टलिङ्गशरीरनिर्गमनाभावप्रतिपादकत्वाभावादनया श्रुत्या ज्ञानिनां लिङ्गशरीरनिर्गमनाभावो न सिध्यतीति पूर्वपक्ष्याशयः ॥ १२ ॥

सिद्धान्तः—

## स्पष्टो ह्येकेषाम् ॥ १३ ॥

एकेषां काण्वानां शाखायाम् 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते' इति श्रुतौ स्वातन्त्र्येण पारतन्त्र्येण च सर्वथापि ज्ञानिनां लिङ्गशरीरनिर्गमनाभावः स्पष्टः । तथा च 'न तस्मात् प्राणा उत्क्रामन्ति' इति माध्यंदिनशाखायामपि तस्मादिति पञ्चम्यन्तपदस्य लक्षणया षष्ठ्यर्थप्रतिपादकत्वमेव वक्तव्यम् । अन्यथा अज्ञानिनामपि जीवं विना स्वातन्त्र्येण लिङ्गशरीरनिर्गमनाभावेन अप्रसक्तप्रतिषेधादिति भावः ॥ १३ ॥

## स्मर्यते च ॥ १४ ॥

भगवद्गीतादिस्मृतिष्वपि ज्ञानिनां लिङ्गशरीरनिर्गमनाभावः प्रतिपाद्यत इत्यर्थः ॥ १४ ॥

### लयाधिकरणम् ॥ ७ ॥

तर्हि ज्ञानिनां लिङ्गशरीरं कुत्र गच्छतीत्याकाङ्क्षायामाह—

## तानि परे तथा ह्याह ॥ १५ ॥

तानि ज्ञानिनां भूतेन्द्रियप्राणान्तःकरणानि परे परमात्मनि लीयन्ते । कुतः ? तथा ह्याह—'इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । भिद्यते हृदयग्रन्थिः । तथा विद्वान्नामरूपाद्विमुक्तः । यदा सर्वे प्रमुच्यन्ते' इत्यादिश्रुतयः ब्रह्मज्ञानिसंबन्धिनां दशेन्द्रियाणां पञ्चप्राणानां मनसश्च परमात्मनि लयं प्रतिपादयन्तीत्यर्थः । यद्यपि 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य' इति सूत्रे ज्ञानिनां लिङ्गशरीरस्य ब्रह्मणि लय उक्तः, तथापि 'तानि परे तथा ह्याह' इति सूत्रे वक्ष्यमाण एवार्थः सुखबोधार्थमाकृष्य पूर्वमुक्त इति न पौनरुक्त्यमिति भावः ॥ १५ ॥

### अविभागाधिकरणम् ॥ ८ ॥

स च लिङ्गशरीरनाशः सुषुप्त्युत्क्रान्तिप्रलयादिकालेष्विव स्थूलावस्थानाशमात्रं न भवति, किं तु आत्यन्तिकनाश इत्याह—

## अविभागो वचनात् ॥ १६ ॥

अविभागः ज्ञानिनां लिङ्गशरीरस्य आत्यन्तिकनाशः अङ्गीकर्तव्यः । कुतः? वचनात् 'अविद्यायाः परं पारं तारयसि' इति श्रुतौ ब्रह्मसाक्षात्कारेण अविद्यानिवृत्तिश्रवणात् अविद्याजन्यस्य लिङ्गशरीरस्य आत्यन्तिकनाश एवाङ्गीकर्तव्य इत्यर्थः ॥ १६ ॥

तदोकोऽग्राधिकरणम् ॥ ९ ॥

इयता सूत्रसंदर्भेण ज्ञानिनां लिङ्गशरीरनिर्गमनाभावमुक्त्वा सगुणोपासकानां लिङ्गशरीरनिर्गमनप्रकारं दर्शयति—

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

तदोकोऽग्रज्वलनं तस्य जीवस्य प्राणेन्द्रियादिपरिवृतस्य ओकः स्थानं हृत्पुण्डरीकं तस्य अग्रज्वलनं भवति अग्रस्य ऊर्ध्वभागस्य विकासो भवति तत्प्रकाशितद्वारा तेन विकासेन प्रदर्शितदेवयानमार्गः सन्नुपासकः सुषुम्नानाडीद्वारा देहात् वहिर्निर्गच्छतीति उत्तरेण संवन्धः । हृत्पुण्डरीकस्य ऊर्ध्वप्रदेशविकासे हेतुद्वयमाह—विद्यासामर्थ्यात् सगुणब्रह्मोपासनासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगात् तस्याः सगुणब्रह्मोपासनायाः शेषभूतयाङ्गभूतया गत्यनुस्मृत्या देवयानमार्गचिन्तया योगात् संवन्धाच्च तदोकोऽग्रज्वलनं भवतीति पूर्वेणान्वयः । तत्प्रकाशितद्वारः सन् उपासकः हार्दानुगृहीतः हृत्पुण्डरीकस्थेन सगुणब्रह्मणा अनुगृहीतः प्रेरितस्सन् शताधिकया शतसङ्ख्याकाभ्यः प्रधाननाडीभ्यः अधिकया अतिरिक्तया एकशततम्या सुषुम्नानाड्या देहात् वहिर्निर्गच्छतीत्यर्थः । 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति श्रुतिवलादिति भावः । अस्याः श्रुतेरयमर्थः—हृत्पुण्डरीकसंबन्धिन्यो नाड्य एकोत्तरशतं भवन्ति । तासां मध्ये एका सुषुम्नाख्या नाडी मूर्धानमभिनिस्सृता ब्रह्मरन्ध्रपर्यन्तं व्याप्ता । तया द्वारा ऊर्ध्वमायन् देहात् वहिर्निगच्छन् उपासकः अमृतत्वं ब्रह्मलोकाख्यं गौणममृतत्वं प्राप्नोति, विष्वक् हृत्पुण्डरीकस्य चतसृषु दिक्षु विद्यमाना अन्या नाड्यः कर्मिणामुत्क्रमणे द्वाराणि भवन्तीत्यर्थः । सुकृतिनां दुष्कृतिनां च धूमादिमार्गेण तृतीयमार्गेण च स्वर्गनरकादिप्राप्तिः रंहतिपाद एवोक्तेति नात्रोच्यत इति भावः ॥ १७ ॥

रश्म्यधिकरणम् ॥ १० ॥

**रश्म्यनुसारी ॥ १८ ॥**

सुषुम्नानाड्या देहात् वहिर्निर्गतः उपासकः रश्म्यनुसारी नाडीसंसृष्टसूर्यकिरणावलम्बी सन् किरणद्वारेण ब्रह्मलोकं गच्छतीत्यर्थः ॥१८॥

**निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥**

दिवा मृतस्य उपासकस्य रश्मिद्वारा सूर्यलोकप्राप्तिरस्तु। रात्रौ मृतस्य उपासकस्य नाडीसंसृष्टरश्म्यभावात् रश्मिद्वारेण ब्रह्मलोकसंबन्धो न संभवतीति चेन्न । संबन्धस्य रश्मिनाडीसंबन्धस्य यावद्देहभावित्वात् दिवा च रात्रौ च रश्मिनाडीसंबन्धस्य विद्यमानत्वात् । दर्शयति च— 'आसु नाडीषु रश्मयः सन्तता' इति श्रुतिः सर्वकालेष्वपि रश्मिनाडीसंबन्धं प्रतिपादयतीत्यर्थः । सूर्यमण्डलस्य मेरुव्यवधानेन प्रत्यक्षयोग्यस्थूलकिरणाभावेऽपि अतीन्द्रियाः सूक्ष्मकिरणाः रात्रावपि सन्त्येव । अन्यथा ग्रीष्मकाले रात्रिषु तापस्वेदादिकं न स्यादिति भावः ॥ १९ ॥

अयनाधिकरणम् ॥ ११ ॥

**अतश्चायनेऽपि हि दक्षिणे ॥ २० ॥**

यतः कारणाद्रात्रौ मृतस्य उपासकस्य ब्रह्मलोकसंबन्ध उक्तः, अत एव दक्षिणे अयने । इदमुपलक्षणं कृष्णपक्षे च मृतस्य उपासकस्य सूर्यकिरणद्वारा अर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिरस्तीत्यर्थः ॥ २० ॥

ननु 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति भगवद्गीतास्मृतिः उत्तरायणदक्षिणायनयोः मृतानामेव उपासकानां कर्मिणां च ब्रह्मलोकस्वर्गलोकादिप्राप्तिं दर्शयति । तथा च कथं दक्षिणायनकृष्णपक्षरात्र्यादिकालेषु मृतानामुपासकानां ब्रह्मलोकप्राप्तिरुच्यत इत्याशङ्क्याह—

**योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥**

स्मार्ते स्मृत्युक्ते एते उत्तरायणदक्षिणायने इत्येतदुभयं योगिनः प्रति प्राणायामादियोगाभ्यासतत्परान् प्रति उच्यत इति स्मर्यते प्रतिपाद्यते, न तु सगुणब्रह्मोपासकान् कर्मठांश्च प्रति । तथा च योगाभ्यासपराणां दक्षिणायने मृतिश्चेत् स्वर्गलोकप्राप्तिः, उत्तरायणे मृतिश्चेत् ब्रह्मलोकप्राप्तिः, नान्यथा । उपासकानां कर्मिणां च यदाकदाचिन्मृतानामपि ब्रह्मलोकप्राप्तिः स्वर्गलोकप्राप्तिश्च संभवतीति भावः । वस्तुतस्तु भगवद्गीतास्मृतौ विद्यमानानां अहश्शब्दरात्रिशब्दशुक्लकृष्णदक्षिणायनोत्तरायणशब्दानां श्रुतिस्थाहरादिशब्दानामिव लोकपरत्वेन कालपरत्वाभावात् अस्याः स्मृतेः उपासककर्मिपरत्वेऽपि न कोऽपि विरोध इति भावः॥२१॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

# चतुर्थाध्यायस्य तृतीयः पादः ।

अर्चिराद्यधिकरणम् ॥ १ ॥

उपासकानामुत्क्रान्तिप्रकारं कालानियमं च प्रतिपाद्य इदानीमर्चिरादिमार्गस्वरूपं निरूपयति—

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

उपासकः अर्चिरादिना मार्गेण ब्रह्मलोकं गच्छति । कुतः ? तत्प्रथितेः तस्य अर्चिरादिमार्गस्य 'तेऽर्चिषमभिसंभवन्ति' इति छान्दोग्यश्रुतौ प्रसिद्धत्वादित्यर्थः ॥ १ ॥

वाय्वधिकरणम् ॥ २ ॥

वृहदारण्यकश्रुतौ 'स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकम्' इति वायुलोकवरुणलोकादयश्चत्वार उक्ताः । तेषां कुत्र प्रवेश इत्याकाङ्क्षायामाह—

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

अब्दात् संवत्सरलोकादुपरि वायुलोकं प्रवेशयेत् । कुतः ? अविशेषविशेषाभ्याम् 'स वायुलोकम्' इत्यविशेषवचनात् सामान्यवचनात् वायुलोकस्य कुत्रचित् प्रवेशः कर्तव्यः । तत्र वाय्वादित्ययोः परस्परं संबन्धरूपविशेषात् संवत्सरादित्ययोर्मध्ये वायोर्निवेश इति निश्चीयत इत्यर्थः । 'स वायुलोकम्' इति श्रुतेर्लोकमात्रप्रतिपादकत्वेन क्रमप्रतिपादकत्वाभावात् अविशेषवचनत्वमिति द्रष्टव्यम् ॥ २ ॥

तटिदधिकरणम् ॥ ३ ॥

## तटितोऽधिवरुणः संबन्धात् ॥ ३ ॥

तटितः विद्युल्लोकात् उपरि वरुणलोकः प्रवेशनीयः । कुतः ? संबन्धात् विद्युद्वरुणयोः परस्परं संबन्धादित्यर्थः । इन्द्रप्रजापतिलोकयोस्तु 'अवशिष्टानामन्ते निवेशः' इति न्यायेन वरुणलोकानन्तरमिन्द्रलोकः, तदनन्तरं प्रजापतिलोक इति भावः ॥ ३ ॥

आतिवाहिकाधिकरणम् ॥ ४ ॥

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

एतेषु अर्चिरादिलोकेषु पूर्वपूर्वलोकस्थाः देवाः उत्तरोत्तरलोकप्राप्तिपर्य-

-न्तमुपासकानामातिवाहिकाः सहायभूताः नेतारः अङ्गीकर्तव्याः । कुतः ? तल्लिङ्गात् 'स एनान् ब्रह्म गमयति' इति श्रुतौ विद्युल्लोकप्राप्त्य-नन्तरम् अमानवपुरुषस्य नेतृत्वप्रतिपादनरूपाल्लिङ्गात् तद्दृष्टान्तेन पूर्वलोकेष्वपि नेतारोऽङ्गीकर्तव्या इत्यर्थः ॥ ४ ॥

## उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

उपासकसंबन्धिनाम् उभयेषां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च व्यामोहात् ब्रह्मलोकप्राप्तिपर्यन्तं स्थूलशरीराभावेन ज्ञानेन्द्रियाणां मार्गपरिज्ञानसामर्थ्याभावात् कर्मेन्द्रियाणां चलनसामर्थ्याभावाच्च तत्सिद्धेः तैरातिवाहिकैर्देवैरेव सिद्धेः गमनस्यावश्यं वक्तव्यत्वादित्यर्थः ॥ ५ ॥

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥

ततः विद्युल्लोकप्राप्त्यनन्तरं वैद्युतेनैव ब्रह्मलोकाद्विद्युल्लोकं प्रत्यागतेन अमानवपुरुषेणैव नीयमानाः उपासकाः ब्रह्मलोकं गच्छन्ति । कुतः ? तच्छ्रुतेः 'ततस्तत्पुरुषोऽमानव एत्य' इति श्रुतौ विद्युल्लोकप्राप्त्यनन्तरम् अमानवपुरुषस्य नेतृत्वश्रवणात् उपासकानां वरुणेन्द्रप्रजापतिलोकेषु नेत्रन्तरापेक्षाया अभावादित्यर्थः ॥ ६ ॥

### कार्याधिकरणम् ॥ ९ ॥

इयता सूत्रसंदर्भेण अर्चिरादिमार्गस्वरूपं विचार्य इदानीं 'स एनान् ब्रह्म गमयति' इति वाक्यस्थब्रह्मशब्दार्थं विचारयति । प्रथमं सिद्धान्तमाह चतुर्भिः सूत्रैः—

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

कार्यम् 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतौ परब्रह्मजन्यत्वेन प्रतिपाद्यमानं हिरण्यगर्भाख्यं ब्रह्मलोकास्थलीलाशरीरविशिष्टं कार्यं ब्रह्म सगुणब्रह्मोपासकानां प्राप्यमिति बादरिर्मन्यते । कुतः ? अस्य उपासकस्य गत्युपपत्तेः परिच्छिन्नहिरण्यगर्भप्राप्त्यर्थमर्चिरादिमार्गेण गमनस्य उपपन्नत्वात् । परब्रह्मणस्तु आकाशवत् सर्वत्र परिपूर्णत्वेन परब्रह्मप्राप्त्यर्थमर्चिरादिमार्गेण गमनस्य व्यर्थत्वादित्यर्थः ॥ ७ ॥

## विशेषितत्वाच्च ॥ ८ ॥

'स एनान् ब्रह्मलोकान् गमयति यस्मिन् सरण्यौ द्वौ समुद्रौ यस्मिन्नैरंमदीयं सरः यस्मिन्नश्वत्थः सोमसवनः यस्मिन्नपराजिता पूः ब्रह्मणः

प्रभुविमितं हिरण्मयं वेश्म तं ते प्राप्नुवन्ति' इत्यादिश्रुत्यन्तरेषु उपासकानां ब्रह्मलोकप्राप्तेः विशिष्योक्तत्वात् 'स एनान् ब्रह्म गमयति' इति श्रुतावपि ब्रह्मशब्देन ब्रह्मलोकस्थं हिरण्यगर्भाख्यं कार्यं ब्रह्मैव उपासकानां प्राप्यमित्यर्थः । हिरण्यगर्भप्राप्तिर्नाम हिरण्यगर्भभोगसदृशसकलभोगानुभवविशिष्टतया हिरण्यगर्भसंनिधौ अवस्थानम् ॥ ८ ॥

परब्रह्मणि मुख्यस्य ब्रह्मशब्दस्य हिरण्यगर्भे कथं प्रयोग इत्याशङ्क्याह—

**सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥**

सामीप्यात् हिरण्यगर्भस्य प्रथमं परब्रह्मजन्यत्वेन असाधारणसंबन्धात् तद्व्यपदेशः लक्षणया ब्रह्मशब्दप्रयोगः ॥ ९ ॥

ब्रह्मलोकं प्राप्तानामुपासकानां कदा मुक्तिरित्याकाङ्क्षायामाह—

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥**

कार्यात्यये महाप्रलयसमये कार्यस्य ब्रह्मलोकस्य अत्यये नाशे सति तदध्यक्षेण ब्रह्मलोकाध्यक्षेण हिरण्यगर्भेण सह अतः परं हिरण्यगर्भादपि उत्कृष्टं परब्रह्म उपासकाः प्राप्नुवन्ति । कुतः ? अभिधानात् 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति' इति श्रुतेः ॥ १० ॥

**स्मृतेश्च ॥ ११ ॥**

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मृतेश्चेत्यर्थः ॥ ११ ॥

चतुर्भिः सूत्रैः प्रथमं सिद्धान्तमुक्त्वा पश्चात् सूत्रत्रयेण पूर्वपक्षमाह—

**परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥**

'स एनान् ब्रह्म गयमति' इत्यत्र ब्रह्मशब्देन परब्रह्मैवोच्यते इति जैमिनिर्मन्यते । कुतः ? मुख्यत्वात् ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् मुख्ये संभवति गौणस्यान्याय्यत्वादित्यर्थः ॥ १२ ॥

**दर्शनाच्च ॥ १३ ॥**

'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिषु ब्रह्मशब्दस्य परब्रह्मणि प्रयोगदर्शनाच्चेत्यर्थः ॥ १३ ॥

पूर्वपक्षी स्वपक्षं प्रसाध्य सिद्धान्तं दूषयति—

**न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥**

'स एनान् ब्रह्मलोकान गमयति' इति श्रुत्यन्तरबलादपि कार्ये हिर-

ण्यगर्भे प्रतिपत्त्यभिसंधिः प्राप्त्याशा न कर्तव्या । ब्रह्मलोकादिशब्दानां सर्वेषामपि लक्षणया परब्रह्मप्रतिपादकत्वसंभवादिति भावः ॥

अनेकेषाम् ऐरंमदीयाश्वत्थहिरण्मयवेश्मब्रह्मलोकादिशब्दानां परब्रह्मणि लक्षणाकल्पनापेक्षया एकस्यैव ब्रह्मशब्दस्य हिरण्यगर्भलक्षकत्वाङ्गीकारे लाघवात् व्यापकस्य ब्रह्मणः अत्रैव प्राप्तुं शक्यत्वेन तत्प्राप्त्यर्थमुपासकानामर्चिरादिमार्गेण गमनवैयर्थ्यात् बादरिमतमेव समीचीनं, न तु जैमिनिमतमिति भावः ॥ १४ ॥

अप्रतीकालम्बनाधिकरणम् ॥ ६ ॥

अहंग्रहोपासकानां प्रतीकोपासकानां च सर्वेषामपि ब्रह्मलोकप्राप्तिरिति केचिद्वदन्ति । तन्मतं निराकरोति—

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥ १५ ॥**

अप्रतीकालम्बनान् प्रतीकोपासकभिन्नान् अहंग्रहोपासकानेव अमानवपुरुषः ब्रह्मलोकं नयतीति बादरायणो मन्यते । कुतः ? उभयथा अहंग्रहोपासकान् प्रतीकोपासकांश्च उभयविधानपि ब्रह्मलोकं प्रापयतीत्यङ्गीकारे दोषात् बहुप्रयाससाध्याहङ्ग्रहोपासनानुष्ठानवैयर्थ्यरूपात् दोषादित्यर्थः । किं च तत्क्रतुश्च 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इति तत्क्रतुश्रुतिरपि अहंग्रहोपासकस्यैव ब्रह्मलोकप्राप्तिं दर्शयति । इदमुपलक्षणम् 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्' इति स्मृतिरपि द्रष्टव्या । अयं भावः—मनोमयत्वभारूपत्वसत्यसंकल्पत्वाद्यनेकगुणविशिष्टं ब्रह्मैवाहमस्मीत्येवंविधानि जीवब्रह्माभेदध्यानरूपाणि दहरशाण्डिल्योपकोसलवैश्वानरविद्यादीनि अहंग्रहोपासनानि सत्यसंकल्पत्वादिबहुगुणज्ञानसाध्यत्वात् बहुप्रयाससाध्यानि । 'नाम ब्रह्मेत्युपासीत । मनो ब्रह्मेत्युपासीत । आदित्यं ब्रह्मेत्युपासीत' इत्येवंविधानि जडेषु नामादिषु ब्रह्मदृष्टिरूपाणि प्रतीकोपासनानि तु बहुगुणज्ञानाधीनत्वाभावात् स्वल्पायाससाध्यानि । तस्मात् अहंग्रहोपासकानामेव ब्रह्मलोकप्राप्तिः, प्रतीकोपासकानां तु ब्रह्मलोकादधस्तनमहर्लोकादिप्राप्तिरेवेति भावः । किंच 'यथाक्रतुरस्मिन् लोके पुरुषो भवति' इति तत्क्रतुश्रुतिरपि भ्रमरकीटन्यायेन सत्यसंकल्पत्वादिविशिष्टं सगुणब्रह्मैवाहमस्मीति ब्रह्माभेदध्यानवताम् अहंग्रहोपासकानामेव सगुणब्रह्मप्राप्तिं दर्शयति, न तु जडेषु नामादिषु ब्रह्मदृष्टिमतां प्रतीकोपासकानामिति भावः ॥ १५ ॥

विशेषं च दर्शयति ॥ १६ ॥

'ये चारण्ये श्रद्धां सत्यमित्युपासते ते ब्रह्मलोकमभिसंपद्यन्ते' इति श्रुतिरपि सत्यब्रह्मोपासकानामेव ब्रह्मलोकप्राप्तिं दर्शयति, न तु मिथ्याभूतनामादिषु ब्रह्मदृष्टिं कुर्वतां प्रतीकोपासकानामित्यर्थः ॥ १६ ॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य तृतीयः पादः ।

## ॥ चतुर्थाध्यायस्य चतुर्थः पादः ॥

संपद्याविर्भावाधिकरणम् ॥ १ ॥

सगुणब्रह्मोपासकानामर्चिरादिमार्गेण हिरण्यगर्भप्राप्तिमुक्त्वा इदानीं निर्गुणब्रह्मज्ञानिनामत्रैव परब्रह्मप्राप्तिमाह—

संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

हृत्पुण्डरीके भूतेन्द्रियान्तःकरणादिमिलितः जीवः लिङ्गशरीरनाशानन्तरं हृत्पुण्डरीके सर्वत्र च परिपूर्णं ब्रह्म संपद्य प्राप्य स्वेन रूपेण नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्दादिस्वरूपेण आविर्भावः आविर्भूतो भावः स्वरूपं यस्य स अभिव्यक्तस्वरूपवान् भवति । कुतः ? शब्दात् 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतेरित्यर्थः ॥ १ ॥

'अस्माच्छरीरात् समुत्थाय' इति वाक्ये ज्ञानिनामपि शरीरात् बहिर्निर्गमनस्य प्रतीयमानत्वात् कथं लिङ्गशरीरनाशपूर्वकं हृत्पुण्डरीकावच्छिन्नब्रह्मप्राप्तिरित्याशङ्क्याह—

मुक्तः प्रतिज्ञानात् ॥ २ ॥

अस्माच्छरीरात् समुत्थायेत्यत्र शरीरे विद्यमानेऽपि शरीराभिमानविनिर्मुक्तः शुद्धजीवः उच्यते । कुतः ? प्रतिज्ञानात् 'स्वेन रूपेणाभिनिष्पद्यते' इति उत्तरवाक्ये स्वरूपाभिव्यक्तिकथनादित्यर्थः ॥ २ ॥

ननु, 'परं ज्योतिरुपसंपद्य' इति वाक्ये ज्योतिश्शब्देन आदित्यमण्डलमुच्यते तथा च ज्ञानिनामपि उपासकानामिव सूर्यलोकद्वारा ब्रह्मलोकप्राप्तिरेव, नत्वत्रैव लिङ्गशरीरनाशपूर्वकं व्यापकब्रह्मप्राप्तिरित्याशङ्क्याह—

आत्मा प्रकरणात् ॥ ३ ॥

ज्योतिश्शव्देन परमात्मैवोच्यते, न त्वादित्यमण्डलम्। कुतः? प्रकरणात् 'य आत्मा अपहतपाप्मा तमावां विविदिषावहै' इति पूर्ववाक्ये इन्द्रविरोचनाभ्यां हिरण्यगर्भं प्रति परमात्मनः पृष्टत्वादित्यर्थः ॥ ३ ॥

अविभागाधिकरणम् ॥ २ ॥

'ज्योतिरुपसंपद्य' इति वाक्ये ज्ञानिनां ब्रह्मसंवन्ध एव प्रतिपाद्यते, न ब्रह्मैक्यमित्याशङ्क्याह—

## अविभागेन दृष्टत्वात् ॥ ४ ॥

अविभागेन ब्रह्माभिन्नतयैव ज्ञानिनामवस्थानं, न तु ब्रह्मसंवन्धितया। कुतः? दृष्टत्वात् 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिषु ज्ञानिनां ब्रह्माभेदप्रतिपादनादित्यर्थः ॥ ४ ॥

ज्योतिश्शव्दस्य प्रकरणवलात् ब्रह्मप्रतिपादकत्वेऽपि वक्ष्यमाणयुक्त्या लक्षणया लीलाशरीरविशिष्टहिरण्यगर्भाख्यसगुणब्रह्मप्रतिपादकत्वमेव वक्तव्यम्। तथा च ज्ञानिनामपि ब्रह्मलोकहिरण्यगर्भप्राप्तिरेव, न तु व्यापकब्रह्मप्राप्तिरिति पूर्वपक्षमाह—

ब्राह्माधिकरणम् ॥ ३ ॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

निर्गुणब्रह्मज्ञानिनोऽपि सगुणब्रह्मोपासकवत् ब्राह्मं निर्गुणब्रह्मसंबन्धिनं हिरण्यगर्भाख्यं सत्यलोकस्थं प्राप्नुवन्तीति जैमिनिर्मन्यते। पूर्वस्मिन् पादे सगुणब्रह्मोपासकानामपि व्यापकब्रह्मप्राप्तिः शङ्किता। अस्मिन् पादे ज्ञानिनामपि हिरण्यगर्भप्राप्तिः शङ्क्यत इति भेदः। कुतः? उपन्यासादिभ्यः 'जक्षत् क्रीडन् रममाणः' इत्यादिवाक्येभ्यः ज्ञानिनामपि जक्षणादिव्यापारप्रतिपादनात्। निर्गुणब्रह्माभेदाङ्गीकारे जक्षणादिव्यापारासंभवात् निर्गुणब्रह्मज्ञानजन्यसगुणहिरण्यगर्भावाप्तिरेव 'परं ज्योतिरुपसंपद्य' इति वाक्ये लक्षणया प्रतिपाद्येत्यङ्गीकर्तव्यमिति भावः। न च हिरण्यगर्भप्राप्तिपक्षे स्वेन रूपेणाभिनिष्पद्यत इति वाक्यमसङ्गतमिति वाच्यम्। स्वेन स्वकीयेन रूपेण शरीरेण हिरण्यगर्भशरीरसदृशशरीरेण विशिष्टः सन् हिरण्यगर्भसमीपे अभिनिष्पद्यते प्रकाशत इत्येवंरूपेण हिरण्यगर्भसारूप्यप्रतिपादकतया 'स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यस्य प्रामाण्योपपत्तेः। तथा च ज्ञानिनामुपासकानां च सर्वेषामपि ब्रह्मलोकप्राप्तिरेव मुक्तिः, न परब्रह्माभेदरूपेति भावः ॥ ५ ॥

सिद्धान्तमाह—

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

निर्गुणब्रह्माभेदध्यानपराणां ज्ञानिनां चितितन्मात्रेण शुद्धचैतन्यमात्रस्वरूपनिर्गुणब्रह्मरूपेणावस्थानमित्यौडुलोमिर्मन्यते । कुतः ? तदात्मकत्वात् तस्मिन्नेव आत्मा अन्तःकरणं येषां ते, तदात्मकत्वात् सर्वदा शुद्धचैतन्यध्यानपरत्वादित्यर्थः । तथा च 'यथाक्रतुरस्मिन् लोके पुरुषो भवति' । 'यं यं वापि स्मरन् भावम्' इत्यादिश्रुतिस्मृत्यनुसारेण व्यापकशुद्धचैतन्यध्यानपराणां शुद्धचैतन्यात्मकव्यापकनिर्गुणब्रह्मरूपेणैवावस्थानमङ्गीकर्तव्यं, न ब्रह्मलोकप्राप्तिरिति भावः ॥ ६ ॥

ज्ञानिनां शुद्धचैतन्यरूपनिर्गुणब्रह्मैक्याङ्गीकारे जक्षणादिव्यापारप्रतिपादकवाक्यस्य का गतिरित्याशङ्क्याह—

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

एवमप्युपन्यासात् 'यत्र त्वस्य सर्वमात्मैवाभूत् । आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । आत्मक्रीड आत्मरतिरात्मकामः आत्मलाभान्न परं विद्यते' इत्यादिश्रुतिषु ब्रह्मसाक्षात्कारानन्तरं जक्षणादिसकलव्यापाराभावस्यापि प्रतिपादितत्वात् मोक्षकाले जक्षणादिव्यापारप्रतिपादकानां बहूनां वाक्यानां जक्षणादिव्यापाराभावप्रतिपादकानां बहूनां वाक्यानां च परस्परविरोधात् अप्रामाण्ये प्राप्ते अविरोधं विरोधाभावं बादरायणो मन्यते । कुतः ? पूर्वभावात् ब्रह्मसाक्षात्कारात् पूर्वमुपासकानां मानुषदेवगान्धर्वेन्द्रप्रभृतीनां जक्षणादिव्यापारजन्यानां सकलविषयानन्दानां नित्ये ब्रह्मानन्दे भावात् अन्तर्भावात् तावन्मात्रेण जक्षणादिव्यापारस्य मोक्षकाले उक्तत्वेन स्वार्थे तात्पर्याभावादित्यर्थः । न च जन्यानां विषयानन्दानां नित्ये ब्रह्मानन्दे अन्तर्भाव एवानुपपन्न इति वाच्यम् । स्वरूपानन्दस्यैव स्रक्चन्दनादिविषयसंपर्कजन्यान्तःकरणवृत्तिषु प्रतिबिम्बितस्य विषयानन्दशब्देन व्यवह्रियमाणत्वेन स्वरूपानन्दविषयानन्दयोर्भेदाभावात् । अन्तःकरणवृत्तिनिष्ठजन्यत्वविनाशित्वधर्मयोः वृत्तिप्रतिबिम्बितस्वरूपानन्दे आरोप्यमाणत्वात् विषयतारतम्येन वृत्तितारतम्यात् वृत्तितारतम्येन वृत्तिप्रतिबिम्बितस्वरूपानन्दे तारतम्यप्रतीतेरन्यथासिद्धत्वादिति भावः ॥ ७ ॥

संकल्पाधिकरणम् ॥ ४ ॥

इयता सूत्रसंदर्भेण निर्गुणब्रह्मसाक्षात्कारवतां शुद्धचैतन्यात्मकव्यापकब्रह्मरूपेणावस्थानं प्रतिपाद्य इदानीं सगुणब्रह्मोपासकानां ब्रह्मलोकं गतानां भोगप्रकारं दर्शयति—

## संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

उपासकानां संकल्पादेव स्रक्चन्दनवनितादिसकलविषयप्राप्तिर्भवति। कुतः ? तच्छ्रुतेः 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति संकल्पादेवास्य सर्वे देवा गन्धर्वा विद्याधराश्च समुत्तिष्ठन्ति' इति श्रुतौ पितृदेवगन्धर्वादीनां भृत्यवत् परिचारकत्वश्रवणादित्यर्थः ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव संकल्पमात्राधीनसकलविषयभोगवत्त्वादेव उपासकः अनन्याधिपतिः न विद्यते अन्यः अधिपतिर्यस्य, सः अनन्याधिपतिः अन्यनियम्यो न भवति, किं तु स्वतन्त्र इत्यर्थः ॥ ९ ॥

बादर्यधिकरणम् ॥ ६ ॥

## अभावं बादरिराह ह्येवम् ॥ १० ॥

लिङ्गशरीरमात्रविशिष्टानामुपासकानां स्थूलशरीरस्याभावं बादरिर्मन्यते। कुतः ? आह ह्येवं 'मनसैवैतान् कामान् पश्यन् रमते' इति श्रुतिः स्थूलशरीराभावमुपासकानां प्रतिपादयतीत्यर्थः ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

जैमिनिस्तु स्थूलशरीरस्य भावं मन्यते। कुतः ? विकल्पामननात् ब्रह्मलोकं गतानामुपासकानां बहुश्रुतिषु विकल्पस्य भोगस्य आमननात् स्थूलशरीररहितानां लिङ्गशरीरमात्रविशिष्टानां भोगासंभवादित्यर्थः। 'मनसैवैतान् कामान्' इति वाक्यस्थस्य एवकारस्य अयोगव्यवच्छेदकत्वेन अन्ययोगव्यवच्छेदप्रतिपादकत्वाभावादिति भावः ॥ ११ ॥

एवकारस्य अन्ययोगव्यवच्छेदकत्वमङ्गीकृत्यापि परिहारमाह—

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

अतः 'मनसैवैतानि' इति श्रुतिस्थैवकारबलात् भोगान्यथानुपपत्तिरूपार्थापत्तिप्रमाणाच्च उभयविधत्वं कदाचिल्लिङ्गशरीरमात्रविशिष्टत्वं, कदाचित् स्थूलशरीरविशिष्टत्वमिति कालभेदेन उभयविधत्वमुपासकानाममोघसंकल्पानां संकल्पानुसारेण उपपन्नमिति बादरायणो मन्यते। द्वाद-

शाहवत् यथा द्वादशाहस्य प्रमाणबलात् सत्रत्वम् अहीनत्वं च प्रयोगभेदेनाङ्गीक्रीयते, तद्वदित्यर्थः ॥ १२ ॥

स्थूलशरीराभावकाले कथं भोग इत्याशङ्क्याह—

**तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥**

तन्वभावे स्थूलशरीराभावकाले सन्ध्यवत् स्वप्नावस्थायामिव उपपत्तेः प्रातिभासिकभोगोपपत्तेरित्यर्थः ॥ १३ ॥

**भावे जाग्रद्वत् ॥ १४ ॥**

भावे स्थूलशरीरस्य सद्भावे जाग्रद्वत् जाग्रदवस्थायामिव व्यावहारिकभोगोपपत्तेरित्यर्थः ॥ १४ ॥

प्रदीपाधिकरणम् ॥ ६ ॥

उपासकानामुपासनासामर्थ्यात् योगिनामिव कायव्यूहनिर्माणेन अनेकशरीरेषु युगपत् भोगमाह—

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥**

उपासकस्य ब्रह्मलोकस्थस्य स्वेच्छया निर्मितेषु अनेकशरीरेषु युगपदेव आवेशः प्रवेशः अभिमानः अङ्गीकर्तव्यः प्रदीपवत्। यथा एकस्य प्रदीपस्य तैलसिक्तासु सहस्रसङ्ख्याकासु वर्तिषु युगपत् प्रवेशस्तद्वदित्यर्थः। तथा हि दर्शयति—'स एकधा भवति द्विधा भवति त्रिधा भवति' इत्यादिश्रुतिः उपासकानां संकल्पमात्रेणैव अनेकशरीरनिर्मातृत्वं दर्शयतीत्यर्थः ॥ १५ ॥

सगुणब्रह्मोपासकानामर्चिरादिमार्गेण ब्रह्मलोकप्राप्त्यनन्तरक्षण एव व्यापकनिर्गुणब्रह्माभेदं प्राप्तानां कथं कायव्यूहनिर्माणं, कथं वा भोग इत्याशङ्क्याह—

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥**

स्वाप्ययः सुषुप्त्यवस्था, संपत्तिः मोक्षावस्था, सुषुप्त्यवस्थामोक्षावस्थयोर्मध्ये अन्यतरापेक्षम् अन्यतरावस्थासंबन्ध्येव जीवानां ब्रह्माभिन्नत्वं श्रुतिषु आविष्कृतं प्रतिपादितमित्यर्थः। तथा च उपासकानां ब्रह्मलोकप्राप्त्यनन्तरमेव न व्यापकब्रह्मैक्यम्। श्रुतिषु तथा अप्रतिपादनात् देहाद्यभिमाननिवृत्तिकालेष्वेव जीवानां ब्रह्माभेदप्रतिपादनात् ब्रह्मलोकप्राप्तिमात्रेण देहाद्यभिमाननिवृत्तेरभावाच्च। किं तु कंचित्कालं ब्रह्मलोकस्थभोगानन्तरं क्रमेण ब्रह्मसाक्षात्कारानन्तरं हिरण्यगर्भेण सह व्यापकब्रह्मैक्यरूपा मुक्तिरिति भावः ॥ १६ ॥

जगद्व्यापाराधिकरणम् ॥ ७ ॥

उपासकानां स्वेच्छया कायव्यूहनिर्मातृत्वाङ्गीकारे देवगन्धर्वमनुष्यपशुपक्ष्यादिशरीरस्रष्टृत्वमप्युपासकानां स्यादित्याशङ्क्याह—

**जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥**

जगद्व्यापारवर्जं देवगन्धर्वादिशरीरजगत्सृष्टिव्यापारं वर्जयित्वा स्वभोगसाधनीभूतकायव्यूहादिनिर्माणसामर्थ्यमात्रमेव उपासकानाम् । देवगन्धर्वादिशरीरसृष्टिव्यापारस्तु हिरण्यगर्भस्यैव । कुतः ? प्रकरणात् हिरण्यगर्भप्रकरणेष्वेव हिरण्यगर्भस्य देवादिशरीरस्रष्टृत्वप्रतिपादनात् कुत्राप्युपासनाप्रकरणेषु उपासकानां स्वशरीरव्यतिरिक्तदेवादिशरीरस्रष्टृत्वाप्रतिपादनादित्यर्थः । किं च असंनिहितत्वाच्च 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' 'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिश्रुतिषु देवासुरादिसकलभूतोत्पत्तेः पूर्वमेव हिरण्यगर्भस्य साक्षात्परब्रह्मजन्यत्वप्रतिपादनेन परब्रह्म प्रति संनिहितत्वात् अन्तरङ्गत्वात् देवासुरभूतप्रेतपिशाचादिसकलभूतनिर्माणसामर्थ्यमस्ति । उपासकानां तु मन्वाद्यनेकभूतपरम्परया हिरण्यगर्भजन्यत्वेन साक्षात्परब्रह्मजन्यत्वाभावेन असंनिहितत्वात् परमात्मानं प्रति अन्तरङ्गत्वाभावाच्च देवादिभूतनिर्माणसामर्थ्यं नास्तीत्यर्थः ॥ १७ ॥

उपासकानामिव हिरण्यगर्भस्यापि देवादिभूतस्रष्टृत्वं नास्ति । पुरुषसूक्ते परमात्मन एव देवादिभूतस्रष्टृत्वप्रतिपादनादित्याशङ्क्य निराकरोति—

**प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

प्रत्यक्षोपदेशात् 'तेन देवा अयजन्त साध्या ऋषयश्च ये' इत्यादिश्रुतिषु परमात्मन एव देवादिसकलस्रष्टृत्वस्य साक्षादुपदिष्टत्वात् नेति चेत् हिरण्यगर्भस्य देवादिभूतस्रष्टृत्वं नास्तीति चेत्, न । आधिकारिकमण्डलस्थोक्तेः आधिकारिकस्य परब्रह्माज्ञावशवर्तिनः मण्डलस्थस्य ब्रह्माण्डमण्डलाभिमानिनः विराट्पुरुषनामकस्य ब्रह्मलोकेऽपि चतुर्मुखलीलाविग्रहं धृत्वा विद्यमानस्य हिरण्यगर्भस्य उक्तेः पुरुषसूक्ते देवादिभूतस्रष्टृत्वप्रतिपादनात् न परमात्मनः साक्षात् देवासुरादिभूतस्रष्टृत्वं, किं तु हिरण्यगर्भद्वारैवेत्यर्थः ॥ १८ ॥

तर्हि पुरुषसूक्ते प्रतिपाद्यस्य हिरण्यगर्भस्यैव देवासुरादिभौतिकसकलशरीरस्रष्टृत्ववत् पञ्चमहाभूतस्रष्टृत्वस्यापि संभवात् हिरण्यगर्भ एव

परब्रह्मस्थानाभिषिक्तो भवतु, तदतिरिक्तं परं ब्रह्म किमर्थमङ्गीकर्तव्यमित्याशङ्क्याह—

विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥

विकारावर्ति विकारासंस्पृष्टं ब्रह्माण्डमध्ये विद्यमानमपि ब्रह्माण्डाभिमानरहितं हिरण्यगर्भातिरिक्तं परं ब्रह्माङ्गीकर्तव्यम्। कुतः ? तथा हि 'स्थितिमाह—' पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ' इति पुरुषसूक्तस्थश्रुतिरेव हिरण्यगर्भातिरिक्तस्य परब्रह्मणः अवस्थानं प्रतिपादयतीत्यर्थः। 'पादोऽस्य विश्वा भूतानि' इति श्रुतेरयमर्थः—अस्य परब्रह्मणः सर्वाणि भूतानि चतुर्मुखादिपिपीलिकान्तसकलशरीराणि प्रविश्य सकलशरीरेषु विद्यमानसकलशरीराभिमानविशिष्टं सकलभूतसंबन्धि सुखदुःखहर्षशोकभयादिसमान्वितं विराटपुरुषचैतन्यमेकः पाद एकांऽशः, दिवि ब्रह्माण्डमध्ये विद्यमानमपि ब्रह्माण्डान्तर्वर्तिसकलशरीराभिमानरहितम् अमृतं मरणभयशोकादिरहितं शुद्धचैतन्यं त्रिपात् अंशत्रयवदित्यर्थः ॥ १९ ॥

हिरण्यगर्भातिरिक्तपरब्रह्मसद्भावे पुरुषसूक्तातिरिक्तं प्रमाणान्तरमप्याह—

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

प्रत्यक्षानुमाने 'द्वे ब्रह्मणी वेदितव्ये परं चापरं च' 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति श्रुतिस्मृती हिरण्यगर्भातिरिक्तं परब्रह्म दर्शयतः प्रतिपादयत इत्यर्थः। तथा च परब्रह्मण एव पञ्चमहाभूतस्रष्टृत्वं हिरण्यगर्भस्य तु परब्रह्मणः आज्ञया चराचरसकलभौतिकशरीरस्रष्टृत्वमिति भावः ॥ २० ॥

एवं प्रसङ्गादागतं परब्रह्महिरण्यगर्भयोर्भेदविचारं परिसमाप्य प्रस्तुते उपासकानां देवासुरादिशरीरस्रष्टृत्वाभावे हेत्वन्तरमाह—

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

हिरण्यगर्भस्य यादृशो भोगः, तादृशो भोगः उपासकानामप्यस्तीति भोगमात्रसादृश्यस्यैव श्रुतिषु प्रतिपादितत्वात् सर्वात्मना हिरण्यगर्भसादृश्यस्य अप्रतिपादितत्वाच्च अस्मादपि लिङ्गात् ज्ञापकात् नोपासकानां देवादिशरीरस्रष्टृत्वमित्यर्थः। इदमुपलक्षणम् उपासकानां स्वातन्त्र्येण देवासुरादिभौतिकशरीरस्रष्टृत्वमित्यङ्गीकारे परस्परकलहप्रसङ्गात् हिरण्यगर्भाज्ञावशवर्तित्वेनैव उपासकानां स्रष्टृत्वं वक्तव्यम्। तथा च आवश्य-

कत्वात् लाघवाच्च एकस्यैव हिरण्यगर्भस्य भौतिकशरीरस्रष्टृत्वमङ्गीकर्तव्यं, नानेकेषामुपासकानामिति भावः ॥ २१ ॥

ब्रह्मलोकं गतानां सर्वेषामपि ब्रह्मणा सह मुक्तिर्वा, उत केषांचित् ब्रह्मणा सह मुक्तिः, केषांचित् कंचित्कालं भोगानन्तरं भूलोकादिषु पुनरावृत्तिर्वा इति संशये प्राप्ते निर्णयं करोति—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

ब्रह्मलोकं गतानां सर्वेषामुपासकानाम् अनावृत्तिः भूलोकादिषु पुनरावृत्त्यभाव एवाङ्गीकर्तव्यः । कुतः ? शब्दात् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति श्रुतेरित्यर्थः । अनावृत्तिशब्दस्य द्विरुक्तिरध्यायपरिसमाप्तिद्योतनार्था । न च गङ्गाशन्तनुचक्रवर्तिप्रभृतीनां ब्रह्मलोकवासिनामपि हिरण्यगर्भशापवशात् भूलोकं प्रत्यावृत्तिः पुराणादिषु प्रतिपाद्यत इति वाच्यम् । ब्रह्मलोकवासिभिः कैश्चिदपि रागद्वेषादिकं न कर्तव्यमिति ब्रह्मलोकवासिनां शिक्षार्थं हिरण्यगर्भेण शापे कृते सति तं-शापं कंचित्कालं भूलोके अनुभूय पुनः ब्रह्मलोकं गतानां शन्तनुचक्रवर्तिप्रभृतीनां ब्रह्मणा सह मुक्तेः तेष्वेव पुराणेषु प्रतिपादितत्वेन विरोधाभावादिति भावः ॥ २२ ॥

इति ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः ॥

---

॥ अध्यायश्च संपूर्णः ॥



# VADARTHA SAMGRAHA

(VAD-SUDHAKAR, LAGHU-VIBHAKTI-ARTHA NIRNAYA, AND SHABDA-BODHA PRAKASHIKA)

(Third Part)

EDITED BY

MAHADEVA GANGADHAR BAKRE



Printed and Published by Manilal Itcharam Desai at
**THE GUJARATI PRINTING PRESS,**
No. 8, SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY.

---

V. S. 1971. A. D. 1915

PRICE RE 0-8-0

# वादार्थसंग्रहः ।

( तृतीयो भागः )

श्रीकृष्णाचार्यविरचितः

## वादसुधाकरः १०



शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥
इति वात्सल्यवान् बिभ्रत्तद्रूपं पातु माधवः ॥ १ ॥
कोलाहलोऽत्र कुधियां न प्रत्यूहो विवेकिनाम् ॥
कलिदोषो रमानाथदासमीष्टे न वीक्षितुम् ॥ २ ॥

### आख्यातार्थधात्वर्थनिर्णयः ।

आख्यातस्य कृतौ शक्तिर्न तु कर्तरि कृत्याश्रयत्वमेव हि कर्तृत्वं, तच्च कृतिरूपमित्यनन्तकृतीनां शक्यतावच्छेदकत्वे गौरवादिति तार्किकाः । नचैवं रथो गच्छतीत्यादावचेतने रथे कृतेर्बाधादाश्रयत्वादौ लक्षणायां लक्ष्यतावच्छेदकगौरवेण साम्यमिति वाच्यम् । अतिरिक्तशक्तिकल्पनापेक्षया क्लृप्तायां शक्यसंबन्धरूपलक्षणायां गौरवाभावात् । ननु लक्षणाश्रयणे कथं वर्तमानत्वादीनामन्वयः युगपद्वृत्तिद्वयाऽनभ्युपगमादिति-चेन्न । शक्ततावच्छेदकलक्षकतावछेदकयोर्भेदात् । लट्त्वेन हि वर्तमानत्वे शक्तिः । लकारत्वेन लक्षणेति । अत एव सकृदुच्चरित इति न्यायात्कथं कृतिवर्तमानत्वयोर्युगपद्बोध इत्यपि नाशङ्क्यम् । लकारत्वलट्त्वरूपशक्ततावच्छेदकभेदात् । ननु तथापि लक्षणाज्ञानजन्याश्रयत्वाद्युपस्थितेः पृथक् हेतुत्वकल्पने गौरवमिति चेन्न, तद्विषयकशाब्दबोधं प्रति तद्विषयकवृत्तिज्ञानजन्योपस्थितित्वेनैव हेतुतया लक्षणाज्ञानस्य पृथग्घेतुत्वाऽभावात् । घटपदात्समवायेनाकाशस्मरणे तच्छाब्दबोधवारणाय वृत्तिज्ञानेति विशेषणम् ।

अथैवमनुकूलत्वादीनां संसर्गाणां शाब्दबोधविषयत्वं दुर्लभमिति चेन्न, घटपदादुपस्थितस्य घटत्वस्य विशेष्यतयाऽन्वयवारणाय तद्धर्मप्रकारकतद्विशेष्यकशाब्दबोधं प्रति तद्धर्मप्रकारकतद्विशेष्यकवृत्तिज्ञानजन्योप-

स्थितेर्हेतुत्वावश्यकतया संसर्गस्य तत्रप्रकारत्वाभावेनादोषात् । स्यादेतत्, वृत्त्यनुपस्थितस्यापि संसर्गस्य शाब्दबोधविषयत्वे राजपुरुष इत्यादौ यावत्संबन्धभानापत्तिः जन्यजनकभावादेरपि संभवादिति चेन्न, तात्पर्यस्य नियामकत्वात् ।

अत्रेदमवधेयम्—आख्यातस्य कर्तृवाचकत्वाभावे पच्यते तण्डुलेनेत्यादौ 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यतिदेशात्कर्मणि द्वितीयापत्तिः । वैयाकरणानां तु लिङ्याशिष्यङिति द्विलकारकाङ्ग इत्यनुवृत्तेर्लकारवाच्यः कर्ता कर्मवदित्यर्थान्नातिप्रसङ्गः । भावे लकारे च लकारेण कर्तुरनुपस्थितेः । एवं भेत्तव्यं कुसूलेनेत्यत्रापि कर्मवत्कर्मणेति कर्मवद्भावे (भावे) प्रत्ययानापत्तिः । अस्मन्मते च लकारवाच्यस्यैव कर्तुः कर्मवद्भावात्कृति कर्तुः कर्मवत्त्वाभावेनोक्तदोषाभावः । नच लकारवाच्यकृत्याश्रयः कर्ता कर्मवदित्यर्थान्निस्तारः शङ्क्यः लकारस्य तत्र विक्लित्त्याश्रयत्ववाचकत्वेन कृतिवाचकत्वाभावात्, तदाश्रयत्वस्याप्यसंभवाच्च । नच लकारार्थसंख्याश्रयः कर्मकर्ता कर्मवदित्यर्थ इति वाच्यम्, पच्यमानस्तण्डुल इत्यादौ लकारेण संख्याया अनुपस्थितया कर्मवद्भावानापत्तेः । अत एव लकारार्थकर्तृत्वाश्रयः कर्ता कर्मवदित्यर्थेऽप्यत्र न निर्वाहः वाचनिकातिरिक्तवचनारम्भस्यैव गुरुत्वात् ।

किंच लक्षणायाः शक्यानुसंधानपूर्वकत्वाल्लक्षणायां लाघवं निर्युक्तिकमेव । अत एव निषादस्थपतिं याजयेदित्यत्र निषादश्चासौ स्थपतिश्चेति कर्मधारयो न तु निषादानां स्थपतिरिति तत्पुरुषः पूर्वपदे लक्षणाप्रसङ्गादिति सकलसिद्धान्तः । अत एव राजपुरोहितौ स्वाराज्यकामौ यजेयातामित्यत्र राजा च पुरोहितश्चेति द्वन्द्वो नतु राज्ञः पुरोहिताविति तत्पुरुषो लक्षणाप्रसङ्गादिति सर्वसिद्धान्तः । अत एवोद्भिदा यजेत पशुकाम इत्यत्रोद्भिच्छब्दः कर्मनामधेयमुद्भिच्छब्देन खनित्रादिकं गृहीत्वोद्भिद्वता यागेनेत्यर्थाश्रयणे तु मत्वर्थलक्षणापत्तिरिति उद्भिदधिकरणं संगच्छते ।

वस्तुतस्तु फलव्यापारयोरुभयोर्धातुलभ्यत्वादखण्डशक्तिरूपमाश्रयत्वमेवाख्यातशक्यतावच्छेदकमिति न गौरवसंभावना । तार्किकपरिभाषया यत्नत्वस्येव शाब्दिकपरिभाषया आश्रयत्वस्याप्यतिरिक्तत्वे बाधकाभावात् । कुमारीभार्य इत्यादौ जातेश्चेति पुंवद्भावप्रतिषेधसिद्धये कौमारादीनामपि जातित्वमभ्युपगच्छतां भाष्यकारादीनां नित्यैव जातिरिति नियमात् । अत एव दीधितिकृताऽपि सिद्धान्तलक्षणेऽधिकरणत्वादीनामतिरि-

क्तत्वं स्वीकृतं तस्य हि अधिकरणस्वरूपत्वे आधेयस्वरूपत्वे वा परस्परासंयुक्तघटभूतलसत्त्वेऽपीदानीं भूतलं घटवदिति प्रत्ययप्रसङ्ग इति विस्तरस्तत्रैव । किंचाश्रयत्वं नित्यमेवास्तु उत्पादविनाशव्यवहारस्तु निरूपितत्वाद्युत्पत्त्यादिकमादायैवास्तु वायुत्वरूपयोः समवायस्यैकत्वेऽपि रूपनिरूपितत्वाभावेन वायौ रूपवत्ताप्रतीत्यभाववत् ।

किंच लकारस्य यत्नार्थत्वे पचन्तं चैत्रं पश्येत्यादावपि यत्नमात्रबोधापत्तिः । तथाचानन्वयः । नहि तत्र यत्नस्याश्रयतासंबन्धेनान्वयः संभवति नामार्थयोरभेद इति नियमात् । नच तत्र शत्रादीनां कर्तरि शक्तिः शक्त्या स्थानिनामेव तार्किकमते वाचकत्वात् स्थान्यर्थेन निराकाङ्क्षतया 'कर्तरि कृत्' इत्यस्य तत्रानुपस्थितेः । अन्यथा पच्यमान इत्यत्रापि तदापत्तेः । अथ पचन्तमित्यादौ लकारस्य कर्तरि लक्षणेति चेत्सत्यं, पाकपदादीनां तद्वति लक्षणया पाको देवदत्त इत्यादेरप्यापत्तेः । किंच लाक्षणिकं नानुभावकं लाक्षणिकार्थस्य बोधे पदान्तरसमभिव्याहारः कारणमिति तार्किकसिद्धान्तात्स्वादिसमभिव्याहारस्य तादृशबोधं प्रति हेतुत्वकल्पने पचमानः पच्यमान इत्यनयोर्वैलक्षण्यानापत्तिः यत्तु किं करोतीत्यत्र किंविषयको यत्न इत्येवं यत्नार्थककरोतिना प्रश्ने पचतीत्युत्तरदर्शनादाख्यातस्य यत्नार्थत्वमिति, तत्र कृञो यत्नार्थत्वे यतिवदकर्मकत्वापत्तेः । किंच यत्नमात्रार्थत्वे क्रियते घटः स्वयमेवेत्यादौ कर्मवद्भावानापत्तौ यगाद्यनापत्तेः । कर्मावस्थायां या क्रिया सा कर्त्रवस्थायां चेत्तदैव 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यस्य प्रवृत्तेः । कृतिश्च न घटादिनिष्ठा । प्रश्नवाक्ये यत्नविशिष्टे जिज्ञासितसंबन्ध उत्तरे त्वाश्रयत्वादिविशिष्ट इति वैषम्यात् । एतेन पचति पाकं करोतीति यत्नार्थककरोतिना विवरणादाख्यातस्य यत्नोऽर्थ इत्यपास्तम् । उक्तरीत्या कृञो यत्नार्थत्वाभावात् ।

किंचाचेतने स्वरसतः कर्तृपदप्रयोगाभावात्कृञो यत्नार्थत्वमित्येव भवतामाग्रहः स चापार्थः । बीजादिनाऽङ्कुरः कृतो रथो गमनं करोतीत्यचेतनेऽपि कृञः प्रयोगात् । अत एव भवतामचेतने कर्तृपदप्रयोगः । अत एव पचतीत्युक्ते कः किंजातीय इति कर्तृविषयकप्रश्नानुभवः सार्वजनीनः । किंच लः कर्मणि चेति सूत्रे कर्तृशब्दस्य कर्तृत्वपरतया कर्तृत्वं कृतिरेवेति तद्विरोधपरिहारे कर्तरि कृदित्यत्रापि कृत्यर्थत्वापत्तेः । तत एव कर्तरीत्यस्यानुवृतेः शब्दाधिकाराश्रयणेऽपि क्लेश एव ।

अथ तत्र नामार्थयोरभेद इति नियमात् कर्तृवाचित्वमिति चेत् पचन् चैत्र इत्यादावपि लकारस्य कर्तृवाचकत्वापत्तिः । अभेदस्योभयत्र तुल्यत्वात् । कीदृशोऽत्रनियमः नामार्थयोरभेद एवेति अभेदो नामार्थयोरेव वेति । आद्ये राज्ञः सुतस्य धनमित्यादौ व्यभिचारः, द्वितीये तु स्तोकं पचतीत्यत्र । ननु नामार्थधात्वर्थयोर्नामार्थयोश्च साक्षाद्भेदान्वयो नेत्येव नियमः । राज्ञः सुतस्येत्यादौ विभक्त्यर्थसंबन्धद्वारान्वयो न स्यात् राजपुरुष इत्यत्र तु राजपदस्य राजसंबन्धिनि लक्षणयाऽभेद एव । प्राप्तोदकादावप्युदकपदस्योदककर्तृकप्राप्तिकर्मणि लक्षणा । उपकुम्भमित्यादौ कुम्भादिपदस्य कुम्भादिसमीपादौ, धवखदिरावित्यादौ तु द्वयोरपि प्रधानत्वेन परस्परं संबन्धाभावात् । एवं तर्हि पचतिकल्पमित्यादावुक्तव्युत्पत्तिबलादेव कर्तार्थोऽस्तु । नच तत्र नाम्नः समुदायस्यार्थ एव नास्तीति शङ्क्यम्, पाचक इत्यादावपि तन्मते समुदायार्थविरहात् । तस्मान्नामजन्यबोधविषयत्वमेव नामार्थत्वम् ।

किंच कर्तुरवाच्यत्वे पचति चैत्र इत्यादौ कर्तुरनभिधानात्तृतीयापत्तिः । अथायमाशयः—अभिहितसंख्याके कर्तरि तृतीया । तद्यथा कर्तृकरणयोर्द्व्येकयोरित्यादीनामेकवाक्यतयाऽनभिहिते कर्तृगतैकत्वे इत्यर्थ इति चेदेवं तर्हि 'कृष्टपच्या व्रीहयः' इत्यत्र कर्मकर्तरि कर्तृसंख्याभिधानाभावात्तृतीयापत्तिः । पाचको देवदत्त इत्यादौ कृत्तद्धितसमासेषु संख्याभिधानाभावेनागतेः ।

नन्वनभिहिते कर्तृत्वे इत्यर्थोऽस्तु अस्ति च पाचक इत्यादावपि विशेषणतया कृतेरभिधानमिति चेन्न । कृष्णस्य कृतिरित्यत्र कृतेरभिहितत्वेन कर्तरि षष्ठ्यनापत्तेः । तण्डुलः पच्यते स्वयमेवेत्यादौ तण्डुलपदात्तृतीयापत्तेः तत्रापि कृतेरनभिधानात् । सिद्धान्ते तु कर्तुरभिहितत्वात्तत्र प्रथमा । किंच धातुनैव कृतेरभिधानात् देवदत्तेन क्रियत इत्यत्र तृतीयानापत्तिः ।

आश्रयत्वं तृतीयार्थ इति तु दुर्वचमनुशासनाभावात् । नन्वाख्यातस्याश्रयार्थत्वे बीजाभावः देवदत्तादेराधेयतया पाकादावन्वयसंभवादिति चेन्न । नामार्थधात्वर्थयोः साक्षाद्भेदान्वयस्याव्युत्पन्नत्वात् । अन्यथा तण्डुलः पचतीत्यपि प्रयोगापत्तेः । कर्मतासंबन्धेन तण्डुलस्य पाकेऽन्वयसंभवात् । किंचाख्यातस्य कर्तृवाचित्वाभावे पचति चैत्र इत्यादावनुभवसिद्धस्य सामानाधिकरण्यस्यानुपपत्तिः । ततश्च पचन्ति चैत्र इति प्रयो -

गप्रसङ्गः । अस्मन्मते त्वभेदान्यथानुपपत्त्या न्यायसिद्धं समानवचनकत्वम् ।

अथ चैत्रादिगतसंख्याभिधायित्वमेव चैत्रादिसामानाधिकरण्यमिति चेदेतन्मते संख्यायाः कुत्रान्वय इत्यत्रैव नियामकाभावः। अत्राहुः—भावनान्वयिनि संख्यान्वयः भावनान्वययोग्यश्चेतराविशेषणीभूतप्रथमान्तपदोपस्थाप्यः चन्द्र इव मुखानि दृश्यन्त इत्यत्रेवार्थसादृश्यस्य विशेषणे चन्द्रे संख्यान्वयवारणाय इतरविशेषणेति । भावना च संख्याकालातिरिक्तप्रत्ययार्थ इति । अथ कथं न पचति चैत्र इत्यत्र भावना(न)न्वयिनि पाकानुकूलकृत्यभाववति चैत्रे संख्यान्वय इति चेन्न । भावनान्वययोग्यताया एव विवक्षितत्वात् । अत एव भावनान्वययोग्यश्चेत्युक्तम् । परे तु परंपरया भावनान्वयमूरीचक्रुः ।

अत्र वदन्ति । भावनान्वयिनि संख्यान्वये पचेतेत्यत्रेष्टसाधनत्वान्वितपाके संख्यान्वयापत्तिः इष्टसाधनत्वाद्यतिरिक्तत्वेन विशेषणे तु तदेव गौरवम् । यत्तूक्तनियमस्वीकारे लाघवमेव बीजम्। तथाहि भावनान्वयबोधायाऽपरपदार्थचैत्राद्युपस्थितिकल्पनमावश्यकम्। तथाच तत्र संख्यान्वयस्वीकारे पदार्थान्तरोपस्थित्यकल्पनप्रयुक्तलाघवमक्षुण्णमेवेति चेन्न । शाब्दिकमते भावनाया आख्यातवाच्यत्वाभावात् । आख्यातार्थे आश्रये संख्यान्वयस्वीकारे पदान्तराऽननुसंधानेन लाघवात् । तथाच संख्याबोधं प्रत्याख्यातजन्याश्रयोपस्थितेर्हेतुत्वं बोध्यम् । एतेन युष्मदादिसमानाधिकरणे इत्यस्य युष्मदर्थगतसंख्याभिधायिनीत्यप्यर्थोऽपास्तः । संख्यान्वयस्यानिश्चयात् । अतित्वं भवतीत्यत्रापि मध्यमत्वापत्तेश्च त्वच्छब्दस्यैव त्वत्कर्मकातिक्रमणकर्तरि लक्षणया युष्मदर्थ एव संख्यान्वयात् इत्यलम् ।

आख्यातस्थले क्रियाविशेष्यकः शाब्दबोधः प्रथमान्तविशेष्यकः शाब्दबोधो वा । अत्राहुः—पश्य मृगो धावतीत्यत्र प्रधानदर्शनक्रियां प्रति मृगस्य कर्मत्वात् द्वितीयापत्तिः । ननु तार्किकमते नायं दोषः, वाक्यार्थस्य कर्मत्वाद्वाक्यस्य प्रातिपदिकत्वाभावेन द्वितीयाया असंभवात् । अत एव कैयटादयोऽपीत्थमेव समादधुः । अत एव 'क्रमादमुं नारद इत्यबोधि सः,' इत्यादौ वाक्यार्थस्य कर्मत्वान्न द्वितीयेति समादधते । यत्तु तत्र निपातेनाभिहितत्वान्न द्वितीयेति तन्न । 'अत्रेभिधानं च तिङ्कृत्त-

द्धितसमासैः' इत्येव भाष्ये पाठादिति चेत्सत्यम्। तदेव तु भवन्मते दुर्वचम्। तथाहि—वैयाकरणानां मते कारकविशिष्टा क्रिया वाक्यार्थः। तत्र धावतीत्यस्य प्रातिपदिकत्वाभावेन न द्वितीयेति युक्तोऽयं समाधिः। तार्किकमते तु क्रियाविशिष्टप्रथमान्तार्थस्य वाक्यार्थतया तस्य कर्मत्वं दुर्वारमेव। अन्यथा पचन्तं चैत्रं पश्येत्यादावपि पाकानुकूलकृतिविशिष्टस्य चैत्रस्य कर्मतया द्वितीयानापत्तेः। अत एव नीलो घटः करोतीति न प्रयोगः। नच नीलं करोति घटं करोतीति पृथगेव भाष्यरीत्या कर्मत्वात् द्वितीयेति वाच्यम्। एवमपि विशिष्टस्य कर्मतामादाय प्रथमापत्तेर्दुर्वारत्वात्। स्यादेतत्।

पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः।

इत्यादौ बकादेः प्रातिपदिकत्वसंभवात् द्वितीया दुर्वारेति चेन्न। तत्राप्यस्त्यादिक्रियाध्याहारेणैव बोधात्। अत एव धिक् देवदत्तेत्यादौ धिगादियोगेऽपि न द्वितीया, संबोधनं क्रियायां विशेषणमिति सिद्धान्तितत्वेनास्मन्मतेऽध्याहृतक्रियाया एव विशेष्यत्वात्। अत एव शृणु देवदत्तो गायतीत्यत्र गानादेरेव कर्मत्वमनुभवसिद्धम्। एतेन—

श्रुत्वा ममैतन्माहात्म्यं तथाचोत्पत्तयः शुभाः।

इत्यत्रोत्पत्तीरिति द्वितीयावारणायार्षत्वं स्वीकुर्वन्तः परास्ताः। तत्राप्यध्याहृतायाः सन्तीत्यादिक्रियाया एव विशेष्यत्वात्।

अथ प्रथमान्तस्य विशेष्यत्वाभावे—

'सुरथो नाम राजाभूत्समस्ते क्षितिमण्डले।
तस्य पालयतः सम्यक्'

इत्यादौ तच्छब्देन सुरथपरामर्शानापत्तिरिति चेदेवं तर्हि—

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत्।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्।

इत्यादौ तच्छब्देन ग्रसनस्य परामर्शानापत्तिः। अत एव च भावप्रधानमाख्यातमिति यास्कवचनमप्युपपद्यते। नचाख्यातार्थेषु संख्याकालादिषु भावनायाः प्राधान्यमिति तदर्थः शङ्क्यः। यत्रोभे भावप्रधाने भवत इति निरुक्तवचनमुपादाय यत्रोभे नामाख्याते भवतस्तत्र भावप्रधाने क्रियाप्रधाने इत्यर्थ इति तद्भाष्यव्याख्याया असंगतिः।

किंच पठन् गच्छतीतिवत्पठति गच्छतीत्यपि प्रयोगापत्तिः। पाठा-

नुकूलकृतिमांश्चैत्रो गमनानुकूलकृतिमानिति बोधसंभवात् । शाब्दिकमते तु क्रिययोः परस्परमनन्वयान्न तथा प्रयोगः । कथं तर्हि पचति भवतीत्यत्र पाकक्रिया भवतिक्रियायाः कर्त्री भवन्तीति भाष्यम् । अत एव तिङन्तोपस्थापिता क्रिया क्रियान्तरैः समवायं गच्छतीति उक्तं भाष्य एवेति चेत्सत्यम् । कर्तृकर्मभावेन क्रिययोः परस्परमन्वयो भवति नतु करणत्वेनेति कैयटेन व्याख्यातम् । किंच धात्वर्थव्यापारप्रकारकशाब्दबोधं प्रत्याख्यातजन्योपस्थितेस्तार्किकमते हेतुतया—

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्निशं दिवः ॥

इत्यादौ पुर्यवस्कन्दनरूपाऽस्वास्थ्यक्रियेत्याद्याकारकान्वयाभावे धातुसंबन्धे विहितस्य लोडादेरनापत्तिः । किंच धातुसंबन्धे प्रत्यया इत्यस्य धात्वर्थानां परस्परसंबन्धे सति यस्मिन्काले प्रत्यया उक्तास्ततोऽन्यत्रापि भवन्तीत्यर्थः । वर्तमानसामीप्य इत्यादिना कालबाधस्यैव प्रक्रान्तत्वात्काल एव बाध्यते । तत्रापि कृदुपस्थाप्यस्य गौणत्वानापत्तौ उक्तकालबाधरूपव्यवस्थाया अनुपपत्तिर्बोध्या । अपि च सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यदित्यादौ क्रिययोः कार्यकारणभावेनान्वयाभावे हेतुहेतुमतोर्लृङित्यादेरप्रवृत्त्यापत्तेरिति दिक् ।

धातूनां तु फलव्यापारोभयवाचकत्वं नतु व्यापारमात्रवाचकत्वम् । नच कर्मणि द्वितीयेत्यत्र कर्मपदस्य कर्मत्वपरतया कर्मत्वं च फलमेवेति फलं द्वितीयार्थ एवेति नैयायिकनव्योक्तं शङ्क्यम्, सकर्मकाकर्मकत्वविभागानापत्तेः फलव्यापारोभयवाचकत्वं सकर्मकत्वं केवलव्यापारवाचकत्वमकर्मकत्वमिति तैः स्वीकारात् । नच यद्धातुसमभिव्याहारे फलं व्यापारश्च प्रतीयते स धातुः सकर्मक इति तल्लक्षणमस्त्विति वाच्यं, कर्मप्रयोगे सकर्मकत्वज्ञानं सकर्मकत्वज्ञाने च कर्मप्रयोग इत्यन्योन्याश्रयापत्तेः । अथायमाशयः—संयोगरूपफलबोधे गमधातुसमभिव्याहारः कारणमावश्यकश्चायं कार्यकारणभावः अन्यथा गच्छतीत्यत्र विभागानुकूलव्यापार एव कुतो न प्रतीयत इत्यत्र नियामकाभावात् । गमधातुसमभिव्याहारस्य कारणत्वापेक्षया गमधातोः कारणत्वे एव लाघवात् । अत एव पाको गमनमित्यत्र न पर्यायता । नच तत्र तत्तत्फलावच्छिन्ने व्यापारे लक्षणा, तात्पर्यग्राहकं विना लक्षणाया अप्यसंभवात्, स्वरसत एव तद्बोधोदयेन लक्षणाया अयुक्तत्वाच्च । बोधकत्वं स्वीकृत्य वाचकत्वं

नास्तीत्यस्य दुर्वचत्वाच्च । किंच शाब्दबोधे वृत्त्या पदजन्यपदार्थोपस्थिते-र्हेतुतया फलविषयकशाब्दबोधं प्रति द्वितीयाजन्योपस्थितेर्हेतुत्वे गौरवम् । नच धातुजन्यफलोपस्थितेर्हेतुत्वं कल्प्यमिति साम्यमिति वाच्यम् । फल-विशेषबोधे धातुविशेषसमभिव्याहारस्य नियामकत्वेन तदंशे साम्यात् । अथाश्रयमात्रं द्वितीयार्थ इति द्वितीयाजन्योपस्थितेर्हेतुत्वकल्पने साम्य-मिति चेन्न, ग्राममध्यास्तेऽधिशेते इत्यादिप्रयोगानुरोधेनाश्रयत्वबोधं प्रति तद्धेतुत्वस्य भवतोऽप्यावश्यकत्वात् ।

किंच व्यापारमात्रस्य धात्वर्थत्वे पच्यते तण्डुलः स्वयमेवेत्यादौ कर्म-वद्भावानापत्तिः । नच धात्वर्थजन्यफलाश्रयत्वमेव कर्मवद्भावविषय इति वाच्यम्, (पच्यते? यत्यते) घटः स्वयमेवेत्यस्याप्यापत्तेः । धात्वर्थयत्नजन्यो-त्पत्तिरूपफलस्य घटे सत्त्वात् । अन्यथा क्रियते घटः स्वयमेवेत्यस्याना-पत्तेः । क्रिया च व्यापारसमुदायः । तदुक्तं हरिणा—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ इति ।

एतेन धात्वर्थः क्रिया तद्वाचकत्वं च धातुत्वमित्यन्योन्याश्रयो-ऽपास्तः । साध्यत्वं च क्रियान्तरानुत्थापकत्वं तदेवासत्त्वभूतत्वम् । एतदे-वाभिप्रेत्योक्तं हरिणा—

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते । इति ।

व्यापाराणामनन्ततेति तदादिन्यायेन बुद्धिविशेषादेरेव शक्यतावच्छे-दकानां नियामकत्वात् । लकारविशेषाणां लडादीनां तु वर्तमानत्वादि-कमप्यर्थः । वर्तमानत्वं च प्रारब्धाऽपरिसमाप्तक्रियोपलक्षितत्वम् । वर्तमा-नत्वादीनां तु धात्वर्थव्यापारे एवान्वयः । तत्सत्त्वे एव पचतीत्यादि-प्रयोगात् ।

तार्किकास्तु यत्न एव वर्तमानत्वादीनामन्वयः, यत्नाभावेऽग्निसंयोगा-दिरूपव्यापारसत्त्वेऽप्ययं न पचतीति प्रयोगात् । वस्तुतस्तु यत्नस्यापि व्या-पारविशेषत्वाददोषः । किंच जानातीत्यादौ व्यापार एव तेषां वर्तमानत्वा-न्वयः । नष्टे नश्यतीति प्रयोगवारणायोत्पत्तेरप्याख्यातार्थत्वं स्वीकृत्य तत्रैव वर्तमानत्वादीनामन्वय इति दीधितिकृतापि स्वीकारादनेककार्य-कारणभावप्रसङ्गः । नच व्यापारे तदन्वये नाशस्य वर्तमानत्वान्नष्टेऽपि घटे नश्यतीति प्रयोगापत्तिरिति वाच्यम्, प्रतियोगिसहितनाशसाम-

ग्रीसमवधानस्यैव तत्र व्यापारात् । तच्चेदं वर्तमानत्वादि लकारद्योत्यं वाच्यं वेति पक्षद्वयमपि क्षोदक्षममेव । कालस्य क्रियारूपतया क्रियामात्रस्य च धातुवाच्यत्वात् लकारो द्योतक एव । अथवा क्रियागतं वर्तमानत्वादि लकारवाच्यमेवेत्यन्यत्र विस्तरः ।

परोक्षत्वमतीतत्वमनद्यतनत्वं च लिडर्थः । परोक्षत्वं च वक्तृसाक्षात्काराविषयत्वम् ' व्यातेने किरणावलीमुदयनः ' इति त्वयुक्तमेव । एवं ' चक्रे सुबन्धुः सुजनैकवन्धुः ' इत्यपि । यत्तु णलुत्तमो वेति ज्ञापकादपरोक्षेऽपि लिड् भवतीति तन्न, चित्तविक्षेपादिना स्वक्रियायाः प्रत्यक्षत्वाभावे उत्तमप्रयोगात् यथा 'वहु जगदपुरस्तात्तस्य मत्ता किलाहम्' इति ।

यत्तूक्तं वर्द्धमानेन तिङन्तप्रतिरूपकोऽयं निपात इति तच्चिन्त्यम् । तथा सति धात्वर्थतावच्छेदकफलाश्रयत्वाभावेन किरणावलीमित्यस्य कर्मत्वानापत्तेः ।

इत्याख्यातार्थधात्वर्थनिर्णयः ।

---

## समासार्थनिर्णयः ।

समासस्थले विशिष्टस्यैवार्थवत्त्वं घटादिपदे घकारादीनामिव तत्राप्यवयवानां निरर्थकत्वादिति शाब्दिकाः । तार्किकास्त्ववयवशक्त्यैव निर्वाहमिच्छन्ति तन्मते समासे वृत्तिमत्त्वरूपार्थवत्त्वाभावात्प्रातिपदिकत्वानापत्तिः । अवयवार्थमादाय समुदायस्यार्थवत्त्वं तु न संभवति, एवमपि समुदायस्य शक्तिलक्षणयोरसंभवात् । अर्थवत्त्वं ह्यत्र सूत्रे वृत्तिमत्त्वमेव । अन्यथा गवित्ययमाहेत्यादावपि प्रातिपदिकत्वापत्तिः । सिद्धान्ते तु अनुकार्याऽनुकरणयोरभेदविवक्षायां सादृश्याद्गोशब्दादीनामुपस्थापकत्वेऽपि वृत्त्योपस्थापकत्वाभावान्नार्थवत्त्वम् । नच तत्र समासग्रहणात्प्रातिपदिकत्वं, तथासति समासग्रहणस्य नियमार्थत्वाभावे वाक्यस्यापि प्रातिपदिकत्वापत्तौ सुब्लुगापत्तेः । मूलकेनोपदंशमित्यादौ कृद्ग्रहणपरिभाषया प्रातिपदिकत्वापत्तेश्च । राजपुरुष इत्यादौ नामार्थयोरितिनियमाद्राजाभिन्नः पुरुष इति बोधापत्तिश्च । राजपदस्य राजसंबन्धिनि लक्षणया राजसंबन्ध्यभिन्नः पुरुष इति बोधाभ्युपगमे तु राज्ञीदासी इत्यत्र समानाधिकरणलक्षणपुंवद्भावापत्तिः । वृत्तेः प्राक् यत्र सामानाधिकरण्यं तत्रैव पुंवद्भावः इत्युक्तौ तु मृगीव चपला मृगचपलेत्यादावपि पुंवद्भावानापत्तेः । अत्र हि सदृशलक्षणया सामानाधिकरण्यम् । एवं चित्रगुरित्यादावपि चित्राऽभिन्ना गौरिति बोधवारणाय

गोपदस्य चित्रगवीस्वामिनि लक्षणा, चित्रपदं तात्पर्यग्राहकमिति सिद्धान्तः सोऽप्यसंगतः; समानाधिकरणलक्षणपुंवद्भावानापत्तेः, अनेकपदस्यैकस्मिन्नर्थे वर्तमानत्वाभावात् । देवदत्तं पण्डितं जानीहीत्यादाविव देवदत्तपण्डितं जानीहीत्यादावपि पाण्डित्यस्य विधेयत्वापत्तेश्च । अत एव पटुरहं ब्रवीमीत्यत्रास्मदो द्वयोश्चेत्यनेन प्राप्तस्य बहुवचनस्य सविशेषणानामित्यनेन प्रतिषेधो भवति । वयं ब्राह्मणा इत्यत्र तु ब्राह्मणत्वस्य विधेयत्वेन विशेषणत्वाभावान्न निषेधः ।

किंचावयवानामर्थवत्त्वे ऋद्धस्य राज्ञः पुरुष इत्यादाविव ऋद्धस्य राजपुरुष इत्यपि विशेषणयोगापत्तिः । नच यत्र समासघटकीभूतपदबहिर्भूतपदसापेक्षत्वमभेदेन तत्र समासोऽसाधुः । अत एव 'शरैः शातितपत्रोऽयम्' इत्यादौ न दोष इति वाच्यं, एतद्वचनारम्भस्यैव गुरुत्वात् । मम तु सापेक्षमसमर्थवदिति न वाचनिकं किंतु पदार्थैकदेशत्वान्न ऋद्धादीनामन्वय इत्यभिप्रायकम् । देवदत्तस्य गुरुकुलमित्यादौ तु लोके बोधोदयेन व्युत्पत्तिवैचित्र्यादेकदेशेऽप्यन्वयः स्वीक्रियते । एतदभिप्रायेणैवोच्यते भवति वै नित्यसापेक्षस्य वृत्तिरित्यसमर्थमित्यस्य हि लोके बोधाजनक इत्यर्थः ।

अथ तार्किकमतेऽपि राजपदस्य राजसंबन्धिनि लक्षणाभ्युपगमेनैकदेशत्वादेव न ऋद्धादीनामन्वय इति चेन्न । कण्ठेकालो दास्याःपुत्र इत्यादौ लक्षणायां मानाभावेन तत्र विशेषणान्वयापत्तेः । किंच यस्य राजपुरुष इत्यत्र लुप्तषष्ठ्यनुसंधानाच्छाब्दबोधस्तस्य पुरुषस्य तादृशप्रयोगापत्तेर्दुरत्वात् । नहि तत्र षष्ठी नानुसंधेयेति राजशासनमस्ति । अपि च वृत्तेरर्थवत्त्वाभावे पुरुषो व्याघ्र इव शूर इत्यादाविव पुरुषव्याघ्रः शूर इत्यस्य तुल्यार्थत्वापत्तौ उपमितं व्याघ्रादिभिरित्यत्र सामान्याप्रयोगे इति निषेधात्समासानापत्तेः । सिद्धान्ते तूपात्तधर्मातिरिक्तधर्मेण सादृश्यग्रहणे समासो भवत्येव अत एव 'भाष्याब्धिः क्वातिगम्भीरः' इत्यत्रापि तत्तदुरवगाहत्वादिना सादृश्यम् । अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्षणमुद्दिश्य न प्राथम्यविधिरिति मीमांसकसिद्धान्तः । अत एव चेदृशविशेषयोः समासे सति अविमृष्टविधेयतादोषापत्तिरित्यालङ्कारिकाः

एवं राज्ञः पुरुषः शूरश्च भवतीति वाक्ये राजसंबन्धशूरत्वोभयस्य पुरुषे बोधवद्राजपुरुषः शूरश्चेत्यपि प्रयोगापत्तिः । किंच राजपुरुष इत्यादौ षष्ठ्यादिलोपे पाणिपादमित्यादौ चादिलोपे च गौरवात् । तस्मात्पङ्कजादि-

पदवत्समासेऽपि शक्तिकल्पनमुचितम् । अथ राजपुरुषादेः समुदायस्य शक्तत्वे निषादस्थपतिं याजयेदित्यत्र निषादानां स्थपतिरिति न तत्पुरुषः पूर्वपदे संबन्धिनि लक्षणाप्रसङ्गात्, किंतु कर्मधारयो लाघवादिति सिद्धान्तासङ्गतिरिति चेन्न । तत्पुरुषे संबन्ध्यादिरूपाधिकपदार्थान्तर्भावेणैकार्थीभावकल्पनमित्यत एव गुरुत्वात् । अत एव बहुव्रीहावन्यपदार्थान्तर्भावेणैकार्थीभावः कल्पनीय इति तत्पुरुषापेक्षया तस्य जघन्यत्वम् । नञ्समासे त्वारोपितत्वस्य नञा द्योतितत्वादब्राह्मण इत्यस्यारोपितब्राह्मण इत्यर्थः । ब्राह्मणभिन्न इत्यादिस्त्वार्थिकोऽर्थः । अत एवौत्सर्गिकं तत्पुरुषस्योत्तरपदार्थप्राधान्यमपि सिध्यतीत्यसर्वस्मै इत्यादौ सर्वनामत्वात्स्मायादयः ।

ननु शाब्दिकमते नञो द्योतकत्वादब्राह्मण इत्यादावेकार्थीभावासंभवः भिन्नार्थशब्दानामेकार्थवृत्तित्वस्यैवैकार्थीभावपदार्थत्वादिति चेन्न । ब्राह्मणत्वमारोपश्च ब्राह्मणशब्दार्थः । तयोश्च परस्परं विषयविषयिभावेनान्वयः । आरोपविषयब्राह्मण्यवानित्यर्थः । इदमेव नञो द्योतकत्वम् । एवं च तादृशपदार्थयोः परस्परमन्वयमात्रेणैकार्थीभावव्यवहारात् । भाष्यानुसारिणस्तु नञोऽभाव एवार्थः । सच प्रतियोगिनि विशेषणं विशेष्यो वेति पक्षद्वयम् । आद्ये घटो नास्तीत्यत्राभावप्रतियोगिघटकर्तृकासत्तेति बोधः । अत्वं भवसीत्यत्र भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेति बोध इति युष्मदर्थसामानाधिकरण्यसत्त्वान्मध्यमत्वादिव्यवस्था सिध्यति। त्वत्प्रतियोगिकभेदवानित्यर्थे तु तदसिद्धेः । एवं न घटा वर्तन्ते इत्यत्र बहुवचनमपि सिध्यति। अभावपरत्वे तु तस्यैकत्वात्तदनापत्तेः । एवं सेव्यतेऽनेकया सन्नतापाङ्गया, अनेकमन्यपदार्थे इत्यत्रोत्तरपदार्थप्रधानत्वादेकवचनं सिध्यति । 'तपन्त्यनेके जलधेरिवोर्मयः' इत्यत्र त्वनेकशब्दस्यैकशेषेण बोधः । द्वितीये त्वभावविशेष्यक एव बोधः । उत्तरपदकार्यं तु अनञ्समास इति ज्ञापकादित्यन्यत्र विस्तरः ॥

इति समासार्थनिर्णयः ।

---

उपसर्गाणां द्योतकत्वमेव न वाचकत्वम् । अनुभूयते सुखमित्यत्र धात्वर्थतावच्छेदकफलशालित्वाभावेन कर्मणि लकारानापत्तेः । एवं चादीनामपि द्योतकत्वम् । अत एव साक्षात्क्रियते हरिरित्यादौ हरेः साक्षात्कारकर्मता । एतेन प्रादीनां द्योतकत्वं चादीनां वाचकत्वमित्यर्धजरतीयमपास्तम् ।

ननु चादीनां वाचकत्वाभावे स्वीकारार्थादोमितिपदाच्छाब्दबोधा-

नापत्तिरिति चेन्न, निपातानामेव द्योतकत्वेनाव्ययान्तरस्य द्योतकत्वाभावात्। ननु लौकिकविषयत्वं निपातार्थः। करोतेश्च तदनुकूलो व्यापारोऽर्थः। तथा च ग्रामं गच्छतीत्यत्र द्वितीयार्थफलाश्रयत्वेन, साक्षात्क्रियते हरिरित्यत्रापि करोत्यर्थजन्यनिपातार्थफलाश्रयत्वादेव कर्मत्वमस्त्विति वाच्यम्। केवलव्यापारवाचकत्वस्य पूर्वत्रैव निराकृतत्वात्।

किंच निपातानां वाचकत्वे शोभनः समुच्चयो द्रष्टव्य इतिवच्छोभनश्च द्रष्टव्य इत्यपि प्रयोगापत्तिः। घटस्य समुच्चय इति वद्घटस्य च इति प्रयोगापत्तिश्च। ननु शोभनः समुच्चय इत्यादौ नामार्थत्वादभेद एव शोभनश्चेत्यादौ तु निपातार्थत्वाच्छोभनवृत्तिः समुच्चय इति भेदान्वय एव निपातातिरिक्तनामार्थयोरेवाभेदस्वीकारादिति चेन्न। निपातातिरिक्तत्वविशेषणप्रवेशस्यैव गुरुत्वात्। अपि च—

शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव।

इत्यादावनन्वयः। अत्रोस्रसदृशैः शरै रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः। स चोस्रादिपदानां तत्सदृशपरत्वे इवशब्दस्य द्योतकत्वे च संगच्छते। तथाहि—उस्रैरिति करणे तृतीया। नचोस्रोऽत्र करणमिवशब्दार्थसदृशस्य करणत्वेन तु तत्र क्रियाया आवृत्योऽस्रकरणकसकर्मकोद्धरणसदृशशरकरणकोदीच्यकर्मकोद्धरणमित्यर्थान्न दोष इति वाच्यम्। वारद्वयमिवशब्दप्रयोगासंगतेः। उपसर्गत्वापेक्षया निपातत्वस्याधिकवृत्तितया तदवच्छेदेन द्योतकतायाः कल्पयितुमुचितत्वाच्च। सामान्ये प्रमाणानां पक्षपातात्। निपातत्वं चाखण्डोपाधिरूपं जातिरूपं वोभयथापि प्रादिचादिसाधारणमेव। नञ्तत्पुरुषे उत्तरपदार्थप्राधान्यमिति प्रवादस्य पूर्वपदद्योत्यं प्रति प्राधान्यमित्याशयः। द्योत्यार्थेन चार्थवत्त्वात्प्रातिपदिकत्वमपि।

इतिचाद्यर्थनिरूपणम्।

जातिरेव शब्दार्थ इति मीमांसकाः। तथाहि—व्यक्तीनामानन्त्यादेकव्यक्तौ शक्तिग्रहे व्यक्त्यन्तरबोधाच्च न व्यक्तौ शक्तिसंभवः। जातिविशिष्टायां व्यक्तौ शक्तिरित्युक्तौ तु 'नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामति' इति न्यायादावश्यकत्वाच्च जातावेव शक्तिरस्तु व्यक्तिबोधस्त्वाक्षेपात्। नचाक्षेपितव्यक्तेः पदार्थत्वाभावाद्ग्रामानयेत्यादौ कथं व्यक्तौ कर्मत्वाद्यन्वयः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादिति

वाच्यम्, लक्षणया तस्या अपि प्रकृत्यर्थत्वात् । लक्षणैव ह्यत्राक्षेपशब्दार्थः। ( नचानुपपत्तिप्रतिसंधानं विना कथं लक्षणेति वाच्यं, निरूढलक्षणायां-तदनपेक्षणात् । ? )

ननु 'स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा' इति नियमात्कथं घटत्वेनोपस्थिते लक्षणेति चेन्न, एतन्नियमे मानाभावात् । अत एव नीलं घटमानयेत्यादौ नीलरूपवति लक्षणेत्याहुः ।

नैयायिकास्तु जात्याकृतिव्यक्तयः पदार्था इत्याहुः । अत्र यद्यपि एकं द्विकं त्रिकं चाथेत्यादिना वहवः पक्षाः शास्त्रसंमतास्तथापि केवलव्यक्तिरेव शव्दार्थ इति पक्षो ज्यायान्, शक्तिग्राहकशिरोमणेस्तत्रैव पक्षपातात् । ननु व्यक्तीनामेव शव्दार्थत्वे आनन्त्याव्यभिचाराच्चेति प्रागुक्तो दोष इति चेन्न । जातेरुपलक्षणत्वस्वीकारात् । तदुक्तं भट्टपादेन—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शव्दः सुकरसंवन्धो नच व्यभिचरिष्यति । इति

अत्र वदन्ति—व्यक्तीनामानन्त्याद्गोत्वादिविशिष्टव्यक्तौ शक्तिकल्पने गोत्वादौ शक्यतावच्छेदकत्वकल्पनस्यावश्यकतया व्यक्तिशक्तिकल्पने प्रयोजनविरहः । यथाहि गोत्वांशे शक्यतावच्छेदकता निरवच्छिन्ना तथाऽस्मन्मते शक्तिरपि निरवच्छिन्नेति न गोत्वत्वप्रवेशाद्गौरवम् । अथ जातिशक्तिवादिमतेऽपि गौर्नष्टा इत्यादौ व्यक्तिभानस्यावश्यकतया शक्तिर्दुर्वारैवेति चेन्न, व्यक्तिशक्तिज्ञानत्वेन शाव्दवोधे हेतुता न स्वीक्रियत इत्येतावतैव व्यक्तेरवाच्यत्वव्यवहारात् । अत एव व्यक्त्यंशे कुब्जाशक्तिरिति व्यवहारः । अत एव संसर्गाणां शाव्दवोधविषयत्वेऽपि न वाच्यता । एवं च गौर्गोपदशक्य इति व्यवहारोऽपि न विरुध्यते ।

अत्र केचित्—घटपदाद्घटत्वेन रूपेणोपस्थितिर्न द्रव्यत्वादिरूपेणेति वैषम्यानुपपत्तिः । घटे घटत्वस्येव द्रव्यत्वादेरपि वैशिष्ट्ये विशेषाभावात् । तस्माद्घटत्वविशिष्ट एव शक्तिरुपेया, घटत्वविशिष्ट इत्यस्य च घटघटत्वयोरित्येवार्थः । घटत्वस्योपलक्षणत्वे उक्तदोषानुद्धारात् । अत्रेदं तत्त्वम्—अलक्ष्यस्य लक्ष्यतावछेदकत्ववदकारणस्य च कारणतावच्छेदकत्ववदशक्यस्य शक्यतावच्छेदकत्वे वाधकाभावाद्घटत्वादिकमुपलक्षणम् । अत एव दीधितौ शक्यतावच्छेदके शक्तिर्दूषितैवेत्यलम् ।

विशेषणविभक्तेरभेदार्थत्वमित्येके । साधुत्वार्थकत्वमित्यन्ये । अत्रेदं बोध्यं—नीलं घटं करोतीत्यादौ घटपदोत्तरद्वितीयया कर्मत्वस्याभिहित-

इत्यनयोर्वैलक्षण्यानापत्तेश्च । नह्येकस्मरणविषयाणां वर्णानां पौर्वापर्यसंभवः । अथ येन क्रमेणानुभूतास्तेनैव क्रमेण स्मृत्यारूढाः शाब्दबोधं जनयन्तीति चेन्न । क्रमेणानुभूतानामपि व्युत्क्रमेण श्लोकादौ स्मरणदर्शनात् ।

यत्तु वर्णानां प्रत्येकं स्फोटव्यञ्जकत्वं मिलितानां वेति शाब्दिकमतेऽपि प्रागुक्तविकल्पाद्दोष इति तन्न । घकारादिभिर्वर्णैरवयवव्यञ्जनद्वारा समुदायाभिव्यक्तेः ।

यदपि गृहीतसंकेतानां वर्णानां स्फोटव्यञ्जकत्वमगृहीतसंकेतानां वा । आद्ये तैरेव सिद्धौ किं तेन, द्वितीये तु सर्वस्यापि तद्बोधापत्तिरिति तन्न । अगृहीतसंकेतैरपि व्यञ्जनात् । अत एवागृहीतार्थकेष्वेकं पदमिति व्यवहारः । तस्मात्समूहालम्बनव्यावृत्त एकं पदमित्यनुभवसाक्षिक आनुपूर्वीविशेषविशिष्टः कश्चिदवश्यं शब्दपदार्थः स्वीकार्यः । स एव शाब्दिकानां स्फोटः । अत एव घटादीनामतिरिक्तत्वं नतु त्रसरेणुपुञ्जात्मकत्वं विशकलितेषु तेष्वपि घट इति बुद्ध्यापत्तेरिति वैशेषिकाः ।

यत्तु एकं पदमित्यनुभवोऽर्थैकत्वनिबन्धन इति तन्न । अर्थबोधाभावेऽपि पदत्वग्रहात् । तदेव पदमिति बुद्धेस्तज्जातीयविषयत्वे तज्जातीयं पदमिति व्यवहारापत्तेश्च । किंच हरेऽव विष्णोऽवेत्यादावेकादेशे कृते पदविभागासंभवेन समुदायशक्तिरावश्यकी । किं चोच्चारणभेदाद्भिन्नेषु व्यक्तिवाद इव शक्त्यनापत्तेः। आनन्त्यादिदोषात्। अपि चानुपूर्वीविशिष्टस्यैव पदत्वेन समूहालम्बने पदत्वानुभवो दुर्घटः। यत्तु पूर्ववर्णध्वंसविशिष्टचरमवर्णानुभव एवानुपूर्वीति तन्न। यत्र घकारमुच्चार्य प्रहरानन्तरं टकार उच्चारितस्तत्रापि पूर्ववर्णध्वंससत्त्वेनातिव्याप्तेः। किंच श्लोकादौ पदविभागे क्रियमाणे शाब्दबोधस्यानुभवसिद्धस्यापलापापत्तिः। वर्णानां पौर्वापर्यस्य पदविभागात्प्रागिवोत्तरत्रापि समत्वात्। अपि च घटमानय देवदत्तेत्यादौ यदि प्रथमक्षणे घटपदस्मरणं द्वितीयादिक्षणे आनयनादिस्मरणं तदा तृतीयादिक्षणे पूर्वस्मरणस्य नाशाच्छाब्दबोधानुपपत्तिस्तदवस्थैव। अतो युगपत्तेषां स्मरणमित्यभ्युपेयम्। तदुक्तम्—

वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥ इति ।

एवं च गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादावपि समूहालम्बने पदार्थानां विशेषविषयत्वाविशेषात् अत्राऽऽसत्त्यभावाच्छाब्दबोधाभाव इति तार्किकप्रवादविरोध इत्यलम् ।

ते च स्फोटा अष्टौ । यूपः सूप इत्यादौ वर्णभेदेनार्थभेदाद्वर्णा अपि वाचका इति वर्णस्फोटः । पदवाक्यस्फोटौ तूक्तावेव । पदादौ वर्णादयो न संतीति अखण्डः पदवाक्यस्फोटः । वर्णपदवाक्यानां च जातिरेव वाचिकेति वर्णपदवाक्यजातिस्फोटः । अत्रेदं तत्वम्—परा पश्यंती मध्यमा वैखरीति चतुर्विधा वाक् । तथाहि—भगवतो जगत्सिसृक्षया मायापुरुषावाविर्भवतः । तत्र त्रिगुणं यदव्यक्तं तस्माद्बिन्दुरूपाच्छब्दाद्ब्रह्मनामधेयं वर्णादिविशेषरहितं नादमात्रमुत्पद्यते तदेव जगदुपादानं परा वागित्युच्यते बिन्दुरवस्य (?) जगतो व्यञ्जनात् । तदुक्तं भारते—

क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
प्रकृते बिन्दुरूपिण्याः शब्दब्रह्माभवत्परा ॥
स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तत इति ॥

श्रोत्रविषया वैखरी, हृदयदेशस्था मध्यमा, पश्यंती तु लोकव्यवहारातीता । योगिनां त्वस्ति तत्रापि प्रकृतिप्रत्ययविभागः । तदुक्तं भारते—

प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्तते ।

प्राणवृत्तिमनुक्रम्य प्राणव्यापारमाश्रित्य ।

अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ॥
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धनी ।

प्राणवृत्तिनिबन्धनीति प्राण एव स्थानाभिघातद्वारा तद्रूपेणापि वर्तत इत्यर्थः ।

हरिरप्याह—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायाः त्रय्या वाचः परं पदम् ॥ इति ॥

अनेकतीर्थभेदायाः नामाख्यातादिभेदभिन्नायाः पराया योगिनामपि प्रकृतिप्रत्ययविभागो नास्तीति त्रय्या इत्युक्तम् । तथाच श्रुतिः—

'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेंगयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥' इति ।

तथा च हरिवंशेऽपि—

'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः' इति ।

स्फुटत्यर्थोऽस्मादिति स्फोटो नित्यशब्दः। अत एवाक्षरशब्दस्य ब्रह्मवाच-

कस्य सादृश्याद्वर्णेषु प्रयोगः । सादृश्यं च नित्यत्वेनैव । तत्र नित्यत्वं व्यवहारनित्यापेक्षमित्येके । आकाशवत्तन्निष्ठशब्दस्यापि नित्यत्वं व्यञ्जकविरहाच्च न सर्वदोपलम्भ इत्यन्ये । ध्वनिशब्देन वैखरी वागुच्यते । स्फोटशब्देन मध्यमा वागुच्यते । अत एव सर्वे सर्वार्थवाचका इति प्रवादः। शब्दमात्रस्यार्थमात्रस्य च ब्रह्मोपादानकत्वेन ततो भेदाभावात् । अत एव नित्यः शब्दार्थसंबन्ध इति प्रवादः । अत एवोक्तं योगवाचस्पत्ये 'सर्वे च शब्दाः सर्वार्थाभिधाने समर्था ईश्वरसंकेतस्तु प्रकाशकः' इति । अत एवोक्तं न्यायवाचस्पत्ये 'सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षात्कृतः संकेतस्तद्व्यवहारादस्मदादीनामपि सुग्रहः संकेत इति सर्वेषामर्थानां सर्वशब्दैः संबन्धश्च योगिप्रत्ययगम्य एव तेषामुभयरूपता पराप्रत्ययान्तात्(?)अत एवोक्तं हरिणा—

'व्यवहाराय नियमः संज्ञायाः संज्ञिनि कचित्' इति ।

कचित्संज्ञिनि संज्ञाया नियमो व्यवहारायेत्यर्थः । यथास्मदीयशास्त्रे वृद्धिशब्देनादैच एव ग्राह्या इति । पुरुषव्यापारात्प्रागवाचकस्य पुरुषव्यापारेण वाचकता कर्तुं न शक्यते शब्दार्थसंबन्धस्य नित्यत्वादिति तदाशयः । अत एव घटपदस्य घटे संकेते सति तदर्थबोधो भवत्येव । ननु व्यवहाराय नियम इत्ययुक्तं वृद्धिरादैजित्यादिसूत्राणां संकेतप्रकाशकत्वेन विधित्वस्यैव न्याय्यत्वादिति चेत्सत्यं, यथा विद्यमाने एव घटे नीलो घट इति नीलसंबन्धः पुरुषेण बोध्यते न तु तत्र नीलादियोगः क्रियते ततश्च नील एव न पीत इति नियमः फलति । तदुक्तं हरिणा—

'वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसंबन्धो विशेषणविशेष्यवत् ॥' इति ॥

शक्त्यवच्छेदः शक्तिसंकोचः । विशेषणविशेष्यवदित्यस्यार्थ उक्त एव । अत एव तत्र वाचकताबोधनेऽपि तदनुत्पादनान्न शब्दार्थसंबन्धस्यानित्यत्वं पाणिन्यादिसंकेतग्राह्यत्वात्संज्ञानामनित्यत्वप्रवादः । वृद्धिशब्दस्यादैक्ष्वेव प्रयोग इत्यत्र पाणिनीच्छाया एव नियामकत्वाच्च यदृच्छाशब्दत्वव्यवहारः। अत एव स्वेच्छया संज्ञाः क्रियन्ते इत्यपि प्रवादः । गौणमुख्यव्यवहारस्तु प्रसिद्ध्यप्रसिद्धिनिबन्धन एव । अत एवोक्तं हरिणा—

सर्वशक्तेस्तु तस्यैवं शब्दस्यानेकधर्मणः ।
प्रसिद्धिभेदाद्गौणत्वं मुख्यत्वं चोपचर्यते ॥ इति ॥

गौणमुख्यार्थबोधकः शब्द एव प्रकरणादिरूपनिमित्ताभावाच्च न सर्वस्य

युगपत्प्रकाशनम् । सर्वशक्तेरित्यस्य व्याख्यानमनेकधर्मण इति । गोशब्दस्य गोत्वजातौ प्रसिद्ध्या मुख्यत्वं वाहीके त्वप्रसिद्ध्या गौणत्वमित्यर्थः ।

शक्तिर्नाम शब्दार्थयोस्तादात्म्यमेव । अत एव पुरोवर्तिपदार्थं दृष्ट्वा वाचकजिज्ञासया कोऽयमिति प्रश्ने देवदत्तोऽयमित्युत्तरम् । अत एवोक्तं पातञ्जलभाष्ये 'संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः' इति इतरेतराध्यासः परस्परात्मकतारोपः अन्यस्मिन्नन्यधर्मावभासोऽध्यासः। स्मृत्यात्मक इत्यनेन ज्ञात एव संकेतः शक्तिर्बोधक इति सूचितम् । कः शब्दः कोऽर्थः इति प्रश्ने घट इत्ययं शब्दो घट इत्ययमर्थ इति समानाधिकरणोत्तरदर्शनाच्छब्दार्थयोरध्याससिद्धिः । अत एव 'रामेति द्व्यक्षरं नाम मानभङ्गं पिनाकिनः' इत्यादौ शब्दार्थयोरप्यभेदेन व्यवहारः । ओमित्येकाक्षरं ब्रह्मेत्यादिश्रुत्यादावपि अभेदेनैव निर्देशः । अभेदस्याध्यस्तत्वाच्च भेदव्यवहारोऽपि अस्यार्थस्यायं वाचक इति । अत एवोक्तं हरिणा—'तादात्म्यमुपन्यस्येव शब्दार्थस्य प्रकाशकाः' इति । अत्रेवशब्देन तादात्म्यस्यातात्विकत्वं सूचितम् ।

यत्तु शब्दशब्दार्थयोरभेदे अग्न्यादिशब्दैर्मुखदाहापत्तिरिति तन्न । उक्तयुक्त्या तादात्म्यस्यारोपितत्वेन दाहकत्वादिशक्तेरभावात् । लक्षणाया वृत्त्यन्तरत्वमयुक्तं बोधकतारूपाया भगवदिच्छाया वा शक्तेर्लाक्षणिकेप्यविशिष्टत्वात् । शाब्दबोधे वृत्त्या पदजन्यपदार्थोपस्थितिः कारणं तत्र वृत्तित्वस्य शक्तिलक्षणावच्छेदकत्वे गौरवाच्च ।

ननु गङ्गापदस्य गङ्गातीरे शक्तिस्वीकारे स्वारसिकप्रयोगापत्तिरिति चेन्न, तत्र गङ्गापदस्याप्रसिद्धत्वात् । अत एव हरिपदस्य क्लीवादिवाचकत्वाविशेषेऽपि न झटिति तेषां प्रत्ययः । अत एव हनधातोर्गतौ शक्तितौल्येऽपि न स्वारसिकः प्रयोग इति दिक् ।

घटः कर्मत्वमानयनं कृतिरित्यादौ पदार्थोपस्थित्यादिसत्त्वादन्वयबोधापत्तिवारणायाकाङ्क्षा हेतुः । यस्य पदस्य यत्पदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वं तत्पदे तत्पदवत्त्वमाकाङ्क्षा । ननु नीलपदं विनापि घटमानयेत्यादावन्वयदर्शनान्नीलघटयोराकाङ्क्षासिद्धयेऽभेदबोधाभावे समानविभक्तिकपदान्तराभाव एव प्रयोजको वाच्यः । तथाच घटः कर्मत्वमिति निराकाङ्क्षेऽतिव्याप्तिरिति चेन्न, तत्राकाङ्क्षासत्वेऽपि योग्यताविरहेण शाब्दबोधाभावात् । एकपदार्थेऽपरपदाऽर्थसंबन्धो योग्यता । वह्निना सिञ्चतीत्यादावयोग्यत्वान्न दोषः ।

ननु एकेत्यादि पदविशेषणं वा पदार्थविशेषणं वा। आद्ये एकधातुपदोपस्थाप्ययोः फलव्यापारयोः परस्परमन्वयबोधानापत्तिः। द्वितीये तु प्रमेयत्व प्रमेयत्वमित्यादौ पदार्थभेदाभावादव्याप्तिरिति चेन्न। पदार्थे पदार्थसंसर्गस्य विवक्षितत्वात्। अव्यवधानेनोपस्थितिरासत्तिः। तेन गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ न बोधः। ननु पदजन्यसमूहालम्बने सकलपदार्थोपस्थितिसत्त्वादासत्तिरस्त्येव अन्यथा काव्यादावन्वयवाक्याच्छाब्दबोधानापत्तिरिति चेत्सत्यम्। अव्यवहितपदार्थोपस्थित्यनुकूलव्यापार एवासत्तिः। एकपदानन्तरमपरपदे क्वचिदुच्चारणं क्वचित्प्रतीतीच्छैव व्यापारः। श्लोकादौ पदतात्पर्यप्रदर्शनायैव योजनावाक्यम्। शुकवाक्येऽपि शिक्षकस्यैव व्यापारः।

कारकत्वं नाम क्रियान्वितकर्तृत्वकर्मत्वादिषट्कान्यतमान्वयित्वम्। दुह धातोर्विभागानुकूलव्यापारानुकूलव्यापारोऽर्थ इति विभागरूपफलाश्रयत्वाद्गोः कर्मेति तार्किकास्तन्न। फलद्वयार्थत्वे गोः पयो दुग्धे इति पञ्चम्यनापत्तेः। नचापादानत्वविवक्षया सेति वाच्यम्। तथा सति ग्रामात् त्यजतीत्यस्याप्यापत्तेः। क्रियान्वितेति विशेषणस्याप्यर्थत्वाविषयादपि(?)क्रियान्वितविभक्त्यर्थान्वयित्वं कारकत्वमिति तदपि न, वर्षासु भवति वर्षाभूरित्यत्र विभक्त्यभावेन कारकत्वानापत्तौ यणनापत्तेः। तन्मते लक्षणाभ्युपगमेन विभक्त्यनुसंधानस्याप्यभावात्। अनुसंधाने वा नटश्रुतमित्यादौ कारकत्वापत्तौ कारकाद्दत्तश्रुतयोरित्युदात्तत्वापत्तिः। एतेन फलाश्रयत्वं कर्मत्वमित्यपास्तं गां दोग्धीत्यत्राऽव्याप्तेरित्यलम्।

अनादित्वमनपभ्रष्टत्वमभ्युदययोग्यत्वं वा साधुत्वम्। बोधकत्वं तत्त्वमित्युक्तौ गाव्यादावतिव्याप्तेः। शक्तत्वं तत्त्वमित्युक्तौ विकरणानामसाधुतापत्तेः। टिघुभादिसंज्ञासु अभ्युदययोग्यत्वाभावेऽपि अनपभ्रष्टत्वादेव साधुत्वम्। देशभाषया क्रियमाणानां कूर्चीमंचीत्यादीनामसाधुत्वमेव। आधुनिकनाम्नां संकल्पादौ प्रयोगस्तु भ्रान्त्यैव। कृतं कुर्यादित्यादिनियमात्। असाधुशब्दानां त्वानन्त्यान्न शक्तत्वम्, अर्थबोधस्तु साधुस्मरणद्वारा। अव्युत्पन्नानां तु शक्तिभ्रमाद्बोधः। अन्ये त्वाहुः बोधकतारूपा शक्तिरपभ्रंशेष्वपि दुर्वारैवेति ॥

इति श्रीमद्देवीदत्तात्मजरामसेवकतनूद्भवकृष्णाचार्यकृतो वादसुधाकरः समाप्तिमियात् ॥

---

मौनिश्रीकृष्णभट्टविरचितः

# लघुविभक्त्यर्थनिर्णयः ११

कारुण्यवर्षजलदं फलदं तपसां सताम् ।
नीलोत्पलदलच्छायं निर्मायं धाम कामये ॥ १ ॥
तर्कव्याकृतिमीमांसापरिशीलनशालिना ।
मौनिश्रीकृष्णभट्टेन विभक्त्यर्थौ विविच्यते ॥ २ ॥

अथ सुब्विभक्तीनामर्थो विविच्यते । तत्र सुप्त्वं—

**स्वौजसमौडित्याद्यनुशासनानुशासितप्रत्ययत्वम् ।**

तार्किकास्तु—

**प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधकविभक्तित्वं सुप्त्वम् ।**

तिङस्तु स्वार्थभावनान्वयिन्येव स्वार्थसंख्यान्वयमवबोधयन्ति नतु स्वप्रकृत्यर्थ इति तेषां व्युदास इति वदन्ति । तन्न । पचतिकल्पं देवदत्त इत्यादौ प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधकत्वाभावेनाऽव्याप्तेः । उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते, इत्यादावुष्ट्रासनानीव देवदत्तकर्तृकान्यासनानि हतशयनानीव देवदत्तकर्तृकानि शयनानीति बोधाद्भाष्ये धात्वर्थे संख्यान्वयस्य स्वीकृतत्वात् स्वप्रकृत्यर्थभावनाधर्मिकस्वार्थबहुत्वसंख्यान्वयबोधकतिङ्विभक्तिषु अतिव्याप्तेश्च ।

विभक्तित्वं तु—

**विभक्तिश्च प्राग्दिशो विभक्तिरित्यनुशासनाभ्यामनुशासितसंज्ञावत्त्वम् ।**

तार्किकास्तु—

**संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान्यः प्रत्ययः सा विभक्तिः ।**

एकत्वत्वाद्यवच्छिन्नशक्तिमानपि तद्धादिर्न प्रत्ययः । प्रत्ययश्च तृजादिर्नसंख्याशक्त इति तयोर्व्युदास इत्याहुः । तन्न । त्रलादीनां संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमत्त्वाभावेनाव्याप्त्यापत्तेः । न च त्रलादीनां सप्त-

न्याद्यादेशत्वान्न दोष इति वाच्यम् । सप्तम्यादेशत्वे स्थानिवद्भावेन ङित्वात् बहुतः बहुत्रेत्यादौ गुणापत्तेः ।

तत्र सुब्विभक्तिः कारकाकारकभेदेन द्विधा । तत्र*कारकाधिकारपठितकर्तृकर्मादिसंज्ञामुपजीव्य विधीयमाना विभक्तिः कारकविभक्तिः* द्वितीयादिः । प्रथमा शेषषष्ठी चाकारकविभक्तिः । उपपदविभक्तीनामत्रैवान्तर्भावः । यद्यपि शाब्दिकमते सर्वत्र क्रियापदाध्याहारः तिङ्समानाधिकरणे प्रथमेति न्यासे वा प्रथमायाः क्रियान्वयित्वरूपकारकत्वसंभवेऽपि, तथा षष्ठ्या अपि क्वचित्तथात्वसंभवेऽपि, न तत्कारकं व्याकरणव्यवहारप्रयोजकं प्रत्युतानिष्टावहम् । उपपदविभक्तित्वं तु पदविशेषसंबन्धेन विधीयमानविभक्तित्वम् । कारकत्वं तु संकेतविशेषसंबन्धेन कारकपदवत्त्वम् । भाष्ये कारके इत्यस्य संज्ञापरत्वेन व्यवस्थापनात् । तथा ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र ब्राह्मणस्य संज्ञा कुतो न भवतीत्याशङ्क्याकथितशब्दोऽसंकीर्तिते वर्तते । केनासंकीर्तितं अपादानादिविशेषकथाभिः । तथा च विप्रयोगस्यापि विशेषावगतिहेतुत्वादन्वर्थसंज्ञाविज्ञानाद्वा ब्राह्मणस्य न भवति संज्ञेत्युक्तम् ।

यद्यपि अथवेत्यनेन क्रियायामित्यर्थकत्वेनापि कारके इति सूत्रं व्याख्यातम् । एवं च सप्तम्यप्युपपन्ना, तथाप्यकथितशब्दस्याप्रधानपरत्वे तद्व्याख्यानम् । न चाप्रधानत्वं सिद्धान्ते स्थितम् । तेन क्रियायामित्यर्थकत्वेन व्याख्यानं भाष्यासंमतमिति निश्चीयते । यत्तु * क्रियान्वितविभक्त्यर्थान्वितत्वं कारकत्वम् । ‘सा लक्ष्मीरुपकुरुते यया परेषाम्’ इत्यादौ विपत्तौ चेत्यादिनामाध्याहारेणैव बोधात्षष्ठ्यर्थस्य क्रियाकाङ्क्षाभावान्न षष्ठ्यर्थान्वयिनः कारकत्वम् । जलस्योपस्कुरुते इतिवद्विशेषक्रियायोगे वा षष्ठीति शब्दशक्तिप्रकाशिकायामुक्तम् । तन्न । क्रियान्वितत्वं किं साक्षादुत परंपरासंबन्धेनापि । नाद्यः । सप्तम्या अकारकत्वापत्तेः । नान्त्यः । षष्ठ्या अपि कारकत्वापत्तेः । सप्तम्याः कर्तृकर्मद्वारा क्रियायामन्वयः षष्ठ्याश्च नेति शपथैकगम्यत्वात् । न चेष्टापत्तिः, कारकाकारकविभागोच्छेदापत्तेः । षष्ठीप्रथमयोरपि कारकत्वात्तत्पूर्वयोरेरनेकाचोऽसंयोगपूर्वस्येत्यादिना यणाद्यापत्त्या सर्वोपप्लवापत्तेः । तत्र तत्र स्वरितत्वाश्रयणेन (?) दोषोद्धारे तु गौरवमेव । ननु ‘सहयुक्तेऽप्रधाने’ इति सूत्रे भाष्ये अप्रधानग्रहणं शक्य-

१ ‘घेर्ङिति’ इति शास्त्रेणेति शेषः ।

मकर्तु तत्र प्रधानादपि तृतीयापत्तिमाशङ्क्योपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा भविष्यतीति प्रथमायाः कारकत्वं स्पष्टमेवोक्तमिति चेन्न । तत्र कारकशब्दस्यान्तरङ्गपरत्वेनैव हरदत्तादिभिर्व्याख्यातत्वात् । अन्यथा शिष्येण सहोपाध्यायस्य गौरित्यादौ कारकविभक्त्यभावेन उपपदविभक्तेरुपपदार्थेऽन्वयनिमित्तकषष्ठीवाधकत्वेऽपि बहिर्भूतसंवन्धनिमित्तकषष्ठीवाधकत्वे मानाभाव इति कश्चित् । नापत्तेः (?) एवं च भाष्याक्षरस्वारस्याद्दुराग्रहेण यदि प्रथमायाः कारकत्वं स्वीक्रियते तर्हि तुल्यन्यायेन विसर्जनीयसूत्रे भाष्यकारेण द्वयोः परिभाषयोरित्यादिना पूर्वत्रासिद्धमित्यस्यापि स्पष्टं परिभाषात्वकथनेन तस्यापि परिभाषात्वं स्वीक्रियतां, यदि तत्र परिभाषात्वसाधर्म्यात्परिभाषापदवाच्यत्वम्, इहाप्यन्तरङ्गत्वसाधर्म्यात् कारकत्वमिति तुल्यम् । यदपि जलस्येति दृष्टान्तकथनं "कृञः प्रतियत्ने' इत्यनुशासनसंभवेऽपि प्रकृते तदभावात् । नहि तत्र गुणाधानं संभवति । तत्त्वे वा सुद्प्रसङ्गात् । यदपि *क्रियान्वितकर्तृकर्मादिषट्कान्यतमत्वम्* इत्याहुः, तत्र क्रियान्वितविशेषणव्यावर्त्यं त एव प्रष्टव्याः । केचित्तु *क्रियाजनकत्वयोग्यताबुद्धिविषयत्वमेव कारकत्वमाहुः । तत्र योग्यता षष्ठ्यादिव्यावृत्ता दुर्वचा ।

प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमाविधायकात् 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यनुशासनादुच्चैर्नीचैः कृष्णः श्रीः ज्ञानमित्यादौ प्रातिपदिकार्थमात्रे, तट तटी तटमित्यादौ लिङ्गमात्राद्याधिक्ये, द्रोणो व्रीहिरित्यादौ परिमाणमात्रे, एकः द्वौ बहव इत्यादौ वचनमात्रे प्रथमा । तत्र प्रातिपदिकार्थत्वं प्रातिपदिकेन नियमेन वृत्त्या बोध्यत्वम् । तच्चासत्त्वभूतेषु सत्तामात्रस्य । अन्यत्र तु सत्ताद्रव्यलिङ्गानाम् । अत एव 'जात्याकृतिव्यक्तयः पदार्थः' इति न्यायसूत्रम् । तटः तटी तटमित्यादौ तु प्रातिपदिकमात्रेण नियमेनाबोधनात्प्रत्ययान्तसमभिव्याहारेणैव बोधनान्न लिङ्गस्य प्रातिपदिकार्थत्वम् । तत्र कृष्णादिनियतलिङ्गेषु त्रिकं प्रातिपदिकार्थः । तटादौ तु जातिव्यक्तीति द्विकमिति विवेकः । अत एव नियतोपस्थितिकः प्रातिपादिकार्थ इति ग्रन्थकृतां व्यवहारः । एवं च कौस्तुभादिसकलग्रन्थानां सौष्ठवे तद्विरोधेन लिङ्गाद्याधिक्ये इत्यस्य कृष्णः श्रीः ज्ञानमित्युदाहरणमनुचितमिति दिक् ।

ननु मृडानीहिमानीत्यादौ पुंयोगमहत्त्वादेरधिकस्य भानात्प्रथमा न स्यादिति चेत् न, तत्र पुंयोगमहत्त्वादिकं प्रातिपदिकस्यार्थः उत प्रत्ययस्य। उभयथापि प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया तत्सिद्धेः। संबोधने चेत्यनेनाधिकार्थपरिच्छेदे तु सजातीयविभक्त्यर्थस्यैव परिच्छेदेन दोषाभावात्। ननु परिमाणग्रहणं व्यर्थं तस्य प्रातिपदिकार्थत्वादेव सिद्धेरिति चेन्न। एवं हि नामार्थयोरिति अभेदेन द्रोणपदार्थस्य व्रीहिपदार्थेन संबन्धः स्यात्। तद्व्यावृत्त्यर्थं परिमाणग्रहणात्। तथा च द्रोणपदार्थस्य प्रत्ययार्थपरिमाणे अभेदसंबन्धेनान्वयः। तस्य च व्रीहिपदार्थे परिच्छेद्यपरिच्छेदकभावेनान्वयः। नन्वेवमभेदातिरिक्तसंबन्धेनान्वये समानविभक्तित्वनियमाभावाद्द्रोणो व्रीहिमानयेति प्रयोगापत्तिरिति चेत् न। अभेदसंबन्धेन बोधव्यावृत्त्यर्थेन परिमाणग्रहणेन यत्राभेदबोधे उत्थिताकाङ्क्षा तत्रैव प्रथमाविधानात्। नन्वेवमपि द्रोणं व्रीहिमानयेत्यत्रापि नामार्थयोरभेदसंबन्धेनान्वय इति अभेदसंबन्धेनान्वयः स्यात्तदर्थं लक्षणायाः आवश्यकत्वे तयैव प्रकृतेऽपि निर्वाहे व्यर्थं परिमाणग्रहणमिति चेन्न। नामार्थयोरित्यस्य किं नामार्थयोरेवाभेदान्वयः उत नामार्थयोरभेदसंबन्धेनान्वय एव। नाद्यः वैश्वदेव्यामिक्षा, स्तोकं पचतीत्यादीनामनन्वयापत्तेः। नान्त्यः। घटपटावित्यादावन्वयापत्तेः। एवं च संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वमिति भेदापेक्षयाऽभेदस्यान्तरङ्गत्वात् परिभाषामूलोपन्यासः। तथा च द्रोणं व्रीहिमानयेत्यादौ लक्षणां विनैव परिच्छेद्यपरिच्छेदकभावेनान्वयोपपत्तिः। एवं च न सूत्रकारमतभेदोऽपि। अन्यथा त्वन्मतेऽभेदः सूत्रकारमते तु भेद इति स्फुटं भेदः। मदुक्तरीत्या तु न मतभेदः न वा लक्षणा, न च परिमाणग्रहणमिति महल्लाघवम्।

यत्तु द्रोणो व्रीहिरित्यादौ पदद्वयोपस्थाप्यव्यक्त्योरेकत्वेन संबन्धाभावेऽपि विशेषणविशेष्यभावो बोध्यः। यत्तु अभेदसंबन्धेनान्वय इति तत्र तस्य संबन्धत्वे मानाभावात्। संबन्धिभेदनियतत्वात् संबन्धस्य, तस्य संबन्धत्वे नीलो घट इत्यादौ षष्ठ्यापत्तिरिति कैश्चिदुक्तं तन्न्यायविरुद्धं, युक्तिविरुद्धं, शास्त्रविरुद्धं च।

तथाहि सामानाधिकरण्ये सति स्वविशेष्यविरुद्धविभक्तिरहितनामार्थस्य प्रकारतासंबन्धेनान्वय एवाभेदसंबन्धः। सत्यन्तनिवेशात् द्रोणो व्रीहिरित्यादौ स्वविशेष्यविरुद्धविभक्तिरहितत्वेऽपि नातिव्याप्तिः। न तु अभे-

दसंबन्धो नाम पदार्थान्तरमस्ति येनाभेदसंबन्धाभावेऽपि विशेषणविशेष्यभावो बोध्य इति भवदुक्तं संगच्छेत । किंचैकत्वे यथाऽभेदस्य संबन्धत्वं नास्ति भेदघटितत्वाद्धि संबन्धस्य, तथा विशेषणविशेष्यभावसंबन्धोऽपि नास्ति घटो घट इत्यादौ निरूपकभेदाभावे एकत्र प्रकारताविशेष्यतयोरभावात् । यदि तु विरुद्धार्थकविभक्तिरहितनामार्थयोर्विशेष्यैक्येऽपि प्रकारभेदे विशेषणविशेष्यभावं ब्रूषे तर्हि स एवास्माकमभेदसंबन्धः । एतेनाभेदस्य संबन्धत्वे मानाभावः संबन्धिभेदनियतत्वात्संबन्धस्येति न्यायविरुद्धम् । विरोधस्योभयत्र तुल्यत्वात् । व्यक्त्यैक्येनिरूपकभेदाभावेऽप्यवच्छेदकभेदे विरुद्धयोः प्रकारताविशेष्यतयोः स्वीकारेऽभेदस्य संबन्धत्वाभावे विनिगमकाभावेन युक्तिविरुद्धम् । यदि तु युक्तिन्याययोरभेदं ब्रूषे तर्ह्यन्यतरन्मास्तु ।

यदपि नीलो घट इत्यादौ नीलपदोत्तरं षष्ठ्यापादनं तदपि शास्त्रविरुद्धम् । तथाहि—यदि अभेदसंबन्धे षष्ठ्येव स्यात्तदा अनेकमन्यपदार्थे इत्यनेनानेकसमानाधिकरणप्रथमान्ताभावात्समासविधानं व्यर्थं स्यात् । न च कण्ठेकालादिरवकाशः, तस्य सप्तमीविशेषणे इति पूर्वत्वविधानेनापि साधयितुं शक्यत्वात् । अतस्तदेव ज्ञापयति नाभेदसंबन्धे षष्ठीति । किंचात्र पदसंस्कारपक्षे भेदसंबन्धाभावेन प्रातिपदिकार्थत्वात्प्रथमोत्पत्तौ पश्चात्पदान्तरेणान्वये नामार्थयोरिति व्युत्पत्त्याऽभेदबोधः । तथा च तस्यामवस्थायां कारकप्रातिपदिकार्थव्यतिरिक्तरूपशेषत्वाभावात्संबन्धबोधाभावाच्च षष्ठ्याः प्राप्तेरेवाभावात् । किंच संबन्धः यत्र प्रकारतया भासते तत्र षष्ठी, प्रकृते संसर्गतया भानान्न सा । किंच वीरः पुरुष इत्यादौ यदि षष्ठी तदा समानाधिकरणविशेषणस्य विशेष्यसमानविभक्तित्वमिति नियमभङ्गापत्तिः । किंच षष्ठ्या शब्दशक्तिस्वाभाव्याद्भेद एव प्रतीयते न त्वभेदः, तस्य तद्विरुद्धत्वात् । वीरः पुरुष इत्यादौ वीरपदोत्तरं षष्ठीसत्त्वे समानविभक्त्यभावान्नामार्थयोरभेदान्वय इति व्युत्पत्त्यभावेनाभेदबोध एव न स्यात् । एवं चाद्यन्तवत्सूत्रस्थम् 'राहोः शिरः' इति व्यपदेशिवद्भावेन समर्थनभाष्यमभेदस्य संबन्धत्वाभावसाधकं भवदुक्तं नास्माकं प्रतिकूलम् । अभेदस्य संबन्धत्वेऽपि तस्य षष्ठ्यर्थत्वाभावेनभेदप्रतीत्यर्थं व्यपदेशाश्रयणस्य ( पार्थगदाधरप्रभृतयः स्यात् ? आवश्यकत्वात् ) । नतु षष्ठ्यर्थ एव संबन्ध इति नियमः, येन षष्ठ्यभावादभेदस्य संबन्धत्वं न स्यात् । सामीप्यस्य संबन्धत्वेऽपि भवद्भिस्तस्य षष्ठ्यर्थत्वास्वी-

कारात् । तस्माद्विशेषयुक्त्यभावेन सर्वशास्त्रकारविरुद्धमभेदस्य संबन्धत्वाभाववचनमयुक्तमिति दिक् ।

संबोधने प्रथमाविधायकात्संबोधने चेत्यनुशासनाद्राम मां पाहीत्यादौ प्रथमा । तच्च—

**वक्तुरिच्छाविषयप्रकृत्यर्थसमवेतं प्रकृतशब्दजन्यं ज्ञानम् ।**

तथा च वक्तुरिच्छाविषयरामसमवेतज्ञानविषयो मत्कर्मकं रक्षणमिति बोधः । अन्ये गदाधरप्रभृतयस्तु * वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा प्रथमार्थः । तादृशेच्छायाः विषयतासंबन्धेन प्रकृत्यर्थविशेषणतया भानम् । तथा वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छाविषयो राम इति बोध इत्याहुः । संबोध्यत्वं च समवायसंबन्धेन वक्तुरिच्छाविषयप्रकृत्यर्थसमवेतप्रकृतशब्दजन्यज्ञानाश्रयत्वं, तादृशेच्छाविषयत्वं वा ।

केचित्तु संबोधनम् * अभिमुखीकृत्याज्ञातार्थज्ञानानुकूलव्यापारानुकूलो व्यापारः * तद्व्यापारजन्यज्ञानानुकूलव्यापाराश्रयत्वं संबोध्यत्वम् । राम त्रायस्वेत्यादौ रामसंबोधनविषयत्राणमिति बोधः । अभिमुखीकरणं च स्ववचनार्थग्रहणे सादरत्वकरणं, तद्व्यञ्जकं च मुखपरावृत्त्यादीत्याहुः । तन्न, हा देवि धीरा भवेत्यसन्निकृष्टे तदसंभवात् । न च बुद्ध्या संभवः, संबोधनसंबोध्याभिमुखीकरणादीनां सर्वेषां बुद्धिविषयत्वस्यानुचितत्वात् । ननु राम मां पाहीत्यादौ मध्यमपुरुषानुपपत्तिः । न च युष्मत्समानार्थसंबोधनस्य विद्यमानत्वात्तत्सिद्धिः । तत्समानार्थभवच्छब्दयोगेऽपि तदापत्तेः । एतेन 'त्वामस्मि वच्मि विदुषाम्' इत्यादावहमर्थकास्मीत्यव्यययोगे उत्तम इति प्रदीपोक्तमपास्तम् । तत्समर्थने आग्रहश्चेदित्थं समर्थ्यताम्—अहमर्थकमहंशब्दार्थकं, तथा चाहंशब्देनैवास्मदर्थप्रतिपादनादस्मत्सामानाधिकरण्यादुत्तम इति । अत एव अहमर्थकमित्येवोक्तं, न तु अहमर्थार्थकमिति । न च प्रतीतस्य प्रत्यायकत्वं नास्ति, अन्यथा ऋचं वेत्तीत्यादौ ऋगर्थं वेत्तीति प्रत्ययापत्तिः । लिप्या प्रतीतस्य शब्दस्य, तथा ध्वनिभिः प्रतीतस्य स्फोटस्य, प्रतीतानां च वाच्यलक्ष्यव्यङ्ग्यानां व्यङ्ग्यार्थप्रतिपादकत्वेन, तार्किकरीत्या असाधुभिः प्रतीतस्य साधुशब्दस्य, आदेशेन प्रतीतस्य स्थानिनोऽपि प्रत्यायकत्वदर्शनेन तादृशनियमे प्रमाणाभावात् । न चाणुदित्सूत्रस्थभाष्यविरोधः ।

तस्याधुनिकशब्दसंज्ञया प्रतीतस्य तात्पर्यानुपपत्तिग्रहं विना प्रत्यायकत्वाभावपरत्वात् । यद्वा वृत्तिं विना प्रकृत्या प्रतीतस्य प्रत्ययानुपयोग्यत्वाभावात् (?) प्रत्यायकत्वं शाब्दबोधजनकत्वं नास्तीति भाष्यार्थः । ऋचं वेत्तीत्यादौ सति तात्पर्येऽर्थबोधे इष्टापत्तिः । शक्त्या लक्षणया वेत्यन्यदेतत् । अन्यथा शब्दप्रतीतस्य स्फोटस्यार्थप्रत्यायकत्वं भाष्याद्युक्तमसंगतं स्यात् । परंतु ऋगादिशब्दानामर्थपरत्वे तावद्भक्तिः स्वीकार्या द्विरेफादिवत्, अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमात्तत्र प्रत्ययार्थान्वयो न स्यात् । अत एवेको यणचीत्यत्र तद्वाच्यवाच्ये निरूढलक्षणेत्युक्तम् । तत्र निरूढं लक्षणं अणुदिदिति सूत्रं यस्याः बोधकमिति तदर्थः । एतेनाणुदित्सूत्रस्थ—' प्रतीतस्य प्रत्यायकत्वं नास्तीति '—भाष्याद्रहसि पुस्तकमीक्षमाणस्य स्वीयसूक्ष्मोच्चारणमस्त्येवेति वैयाकरणनव्योक्तमपास्तम् । भाष्यस्यान्यथैवोपपत्तेः । तस्मात्त्वंपदाध्याहारेणैव मध्यमः । न च—भो ब्राह्मणास्त्वं पचेत्यापत्तिः, न च संबोध्याख्यातकारकयोः समानवचनत्वनियमः भो ब्राह्मणाः चैत्रो गच्छतीत्यनापत्तेरिति—वाच्यम् । त्यदादीनां परामृश्यमानसमानवचनत्वनियमात् ।

ननु (अनवसरः ?रक्षसः) शक्तिनिर्भिन्ने वत्से जहति चेतनाम् । हताश राम कस्यार्थे दग्धं जीवितमिच्छसीत्यादौ वक्तृसंबोध्ययोरेकत्वेन प्रकृतवाक्यार्थज्ञानसत्त्वात्सिद्धे वक्तुरिच्छाविरहात् रामस्य संबोध्यत्वानुपपत्तिरिति चेन्न । आत्मानमात्मना वेत्सीत्यादाविव लक्ष्मणविशिष्टराममूर्च्छितलक्ष्मणविशिष्टरामयोर्भेदाभ्युपगमेन संबोध्यत्वसंभवात् । एवं च प्रथमाया अप्यर्थसंभवे—

आश्रयोऽवधिरुद्देश्यः संबन्धः शक्तिरेव वा ।

इत्यादौ षण्णामेव कथने प्रथमायास्तदनुक्तौ भूषणकारस्य बीजाभावान्न्यूनतेति बोध्यम् । ननु ' तिङ्समानाधिकरणे प्रथमा ' इतिन्यासे यथावस्थितन्यासे वा प्रथमान्तस्य क्रियान्वयाकाङ्क्षाया नियतत्वात्, आख्यातसंख्ययैवाख्येयगतसंख्याबोधोपपत्तौ प्रथमायाः संख्यावाचकत्वं किमर्थमिति चेत् न, चैत्रो मैत्रश्च गच्छत इत्यादावाख्यातोपात्तद्वित्वसंख्याविरुद्धैकत्वसंख्याबोधाय तदावश्यकत्वात् ।

इति प्रथमा ।

---

## द्वितीयार्थनिर्णयः ।

कृत्तद्धितसमासनिपातादिभिरनभिहिते कर्मणि द्वितीयाविधायक-कर्मसंज्ञकेद्वितीयेत्यर्थक 'कर्मणि द्वितीया' इत्याद्यनुशासनानुशासितद्वितीयायाः कर्मसंज्ञका अन्ये च वाच्याः । ते चानेके नत्वाश्रयत्वमात्रम् । अक्षान्दीव्यति उभयतः कृष्णमित्यादौ तदभावात् । एतेनाश्रयोऽवधिरुधिदेश्य इत्यत्राश्रयोऽर्थ इति भूषणोक्तमपास्तम् । न चार्थान्तरे लक्षणा शक्तिग्राहकानुशासनतुल्यत्वे विनिगमकाभावेनैकत्र लक्षणान्यत्र शक्तिरिति वक्तुमशक्यत्वात् । नानार्थोच्छेदापत्तेः । अत एव कर्मत्वमपि न *क्रियाजन्यफलशालित्वमात्रं, किंतु—

**कर्त्रा स्वनिष्ठव्यापारजन्यफलेनात्यन्तं संबद्धुमिष्यमाणं कर्मेत्याद्यर्थककर्तुरीप्सिततमं कर्मेत्याद्यनुशासितसंज्ञावत्त्वम् ।**

एवं चौदनं पचतीत्यादावेकाश्रयक ओदननिष्ठविक्लृत्यनुकूलो व्यापारः । पच्यते ओदन इत्यत्राप्येवमेव ।

तार्किकास्तु—देवदत्ताश्रितव्यापारजन्यविक्लृत्याश्रय ओदन इति बोधमाहुः ।

केचित्तु—देवदत्तनिष्ठव्यापारजन्यौदननिष्ठा विक्लृत्तिरिति बोधः । तत्र च सुप आत्मनः क्यजिति सूत्रस्थं भाष्यं मानम् । तथाहि—इष्यते पुत्र इत्यर्थे पुत्रीयतीति न प्रयोगः भिन्नार्थत्वात् । किंतु पुत्रमिच्छतीत्यर्थे एव । एतच्च कर्मलकारे एकाश्रयिका पुत्रकर्मिकेच्छेति बोधे फलविशेष्यक एव संगच्छते । अन्यथोभयत्रापि एकाश्रयकपुत्रकर्मकेच्छानुकूलो व्यापार इति बोधस्य तुल्यत्वात् 'भिन्नार्थत्वात्' इति भाष्यमसंगतं स्यादित्याहुः। तन्न, भाष्यकैयटयोरन्याभिप्रायकत्वात् । तथाहि—वृत्तिवाक्ययोः समानार्थत्वमित्यस्य वृत्ति(विशेष्य?प्रकृतिक)पदेन समानार्थत्वमित्यर्थो वाच्यः । अन्यथा कुम्भकारादावपि समानार्थत्वं न स्यात्तत्र हि वाक्ये एकत्वप्रतीतिः न तु कुम्भकारेत्यणन्तवृत्तौ । विभक्त्यन्तेन तु समानार्थत्वसद्भावात्पूर्वोक्त एवार्थो न्याय्यः । तथा च पुत्रीयतीत्यादौ एककर्तृकपुत्रकर्मकेच्छानुकूलो व्यापार इति बोधः । इष्यते पुत्र इत्यादौ तु एकपुत्रकर्मकेच्छानुकूलो व्यापार इति बोधः । एवं च भिन्नार्थता स्पष्टैव । एतादृश्येव भिन्नार्थता भाष्यसंमता । भवदुक्तप्रकारता—विशेष्यताकृत एव भेदो वृत्त्यभावनियामकः भाष्यसंमतः स्यात्तर्हि पचतीति पाचक इत्यादौ वाक्ये क्रियाविशेष्यत्वेन, वृत्तौ

तदाश्रयविशेष्यत्वेन भिन्नार्थत्वात्कर्मकर्तृकृत्प्रत्ययादौ कापि वृत्तिर्न स्यात् । नच तत्र देवदत्तपदाध्याहारेण समानार्थत्वमिति वाच्यम् । लाघवात्पदद्वयघटितसमानविग्रहे चरितार्थो विधिः पदत्रयघटितविग्रहे न प्रवर्तते । अत एव भाष्ये इष्यते पुत्र इत्येवोक्तं, न तु देवदत्तेनेति । किंच पच्यतेकल्पं देवदत्तेन इत्यादौ कल्पवादीनां धात्वर्थविशेष्येऽन्वयस्य क्लृप्तत्वेन फलेऽन्वयापत्तेः । न चेष्टापत्तिरपसिद्धान्तादनुभवविरोधाच्च । किंच क्रियाप्रधानमाख्यातमिति निरुक्तविरोधः । न च फलेऽपि क्वचित्क्रियापदप्रयोगः । तस्य लाक्षणिकत्वेन तमादाय निरुक्तसमर्थनस्यानुचितत्वात् । किंच देवदत्तेन किं क्रियते पचतीत्युत्तरस्य संगतिश्च । इत्यभिप्रेत्यैव मनोरमा–भूषण–कौस्तुभादिसकलग्रन्थेषु ओदनं पचति, पच्यते ओदनः, इत्यादौ समानो वोध इत्युक्तम् । एवं च सर्वग्रन्थानुकूलभाष्यनिर्वाहे तद्विरुद्धं स्वातन्त्र्येण भाष्यसमर्थनमनुचितमिति दिक् ।

घटं जानातीत्यादौ घटविषयकज्ञानानुकूलो व्यापार इति बोधः । ज्ञानजनकव्यापारश्च मनश्चक्षुःसंयोगादिः । अत एव मनो जानातीत्यादयः प्रयोगाः । तत्र ज्ञानरूपफलाश्रयत्वाद्घटादेः कर्मत्वम् । न च फलव्यापारयोः सामानाधिकरण्यादकर्मकतापत्तिः । कालिकादिसंबन्धेन सर्वेषां फलसामानाधिकरण्यसत्त्वादकर्मकत्वापत्त्या फलतावच्छेदकसंबन्धेन सामानाधिकरण्यवैयधिकरण्ययोः सकर्मकाकर्मकलक्षणेऽवश्यं निवेशनीयत्वात् । प्रकृते च फलतावच्छेदकः संबन्धो विषयता, व्यापारतावच्छेदकः समवायादिरिति वैयधिकरण्यं स्पष्टमेव । अत एव ज्ञानस्य घटात्मोभयवृत्तित्वेऽपि कर्मप्रत्ययेन विषयतासंबन्धेन ज्ञानाश्रयघटस्यैवाभिधानाद्घटो ज्ञायत इति प्रयोगः, न तु आत्मा ज्ञायत इति । तथा कर्तृप्रत्ययेन समवायसंबन्धेन ज्ञानाश्रयस्याभिधानादात्मा जानातीति प्रयोगः, न तु घटो जानातीति । यद्वा ज्ञानेच्छादिरेव व्यापारः । ज्ञातो घट इति प्रतीत्या तज्जन्या ज्ञाततादि फलं तदाश्रयत्वाद्घटादेः कर्मत्वम् । यत्तु केचिदाहुः—भावकार्यस्य समवायिकारणकत्वनियमात् भूतं भाविनं घटं जानामीति प्रयोगानापत्तिरित्यादि तत्तुच्छं, ध्वंसस्य प्रामाणिकत्वेन भावत्वस्य कार्यतावच्छेदककोटिप्रवेशवद्विज्ञानविषयताया अपि प्रामाणिकत्वेन समवेतत्वेनैव लघुना कार्यत्वस्यविशेषितत्वात् । अत एव ध्वंसवदेव ज्ञातताया अपि निमित्तकारणमात्रजन्यत्वमित्यन्यत्र विस्तरः ।

केचित्तु घटं जानातीत्यादौ कर्मत्वव्यवहारो भाक्त इत्याहुः ।

अन्ये तु द्वितीयायाः विषयतायां लक्षणेत्याहुः । तदुभयमप्यसत् व्यवहारस्य भाक्तत्वेऽपि द्वितीयानुत्पत्तिप्रसङ्गात् । न च कर्मणि द्वितीयेत्यादौ मुख्यभाक्तसाधारणकर्मत्वग्रहणात्तत्सिद्धिरिति वाच्यम् । अनुशासनानुशासितसंज्ञाव्यतिरिक्ते द्वितीयायाः असाधुत्वबोधनात्, संज्ञाया एव तदुत्पत्तौ प्रयोजकत्वात् । अन्यथा देवदत्ताय क्रुध्यति, पाचयत्योदनं देवदत्तेन विष्णुमित्र इत्यादौ द्वितीयोत्पत्तेर्दुर्वारत्वात् । द्वितीयायाः लक्षणेत्यपि न, भवद्रीत्या घटं जानातीत्यादौ द्वितीयोत्पत्त्यभावेन तल्लक्षणायाः वक्तुमशक्यत्वात् । स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जमहे इति न्यायेनास्ति लक्षणायां बीजाकाङ्क्षा । तच्च रूढिः प्रयोजनं वा । प्रकृतेऽनुशासनविरोधेन द्वयस्याप्यभावेन लक्षणायाः अभावाच्च, द्वितीयायाः लक्षणा अन्यासां नेत्यत्र विनिगमकाभावाच्च, विभक्तौ न लक्षणेति सिद्धान्तव्याघातश्च । न च विभक्त्यर्थातिरिक्तार्थे सा नेति वाच्यम् । संकोचे मानाभावात् ।

यत्तु मीमांसकैः सक्त्वधिकरणे उक्तं—साध्यत्वं द्वितीयार्थः, सक्तून् जुहोतीत्यादौ सक्तूनां भूतभाव्यनुपयुक्तत्वेन सक्तूनां साध्यसक्तुकरणकहोमानुकूलव्यापारप्रतीतये करणत्वं लक्ष्यते, एवमग्निहोत्रं जुहुयादित्यत्र द्वितीयया साधनत्वं लक्ष्यते इति तन्न, सुपां सुलुगिति व्यत्ययानुशासनेनैव सिद्धे लक्षणाश्रयणस्यानुचितत्वात् ।

यत्तु व्युत्पत्तिवादे—'चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिपदसमभिव्याहृतद्वितीयायाश्च लौकिकविषयिता, तादृशकर्माख्यातस्य लौकिकविषयत्वमर्थः । उपनीतसौरभादिविषयकसुरभिचन्दनमित्याकारकचाक्षुषादिदशायां सौरभं पश्यति सौरभो दृश्यते इत्याद्यप्रयोगात्' इत्युक्तम् । तच्चिन्त्यम् । 'पश्यार्थैश्चानालोचने' इति सूत्रे 'तस्मिन्दृष्टे परावरे' इत्यादौ च दृशधातोरप्यलौकिकविषयकतार्थकत्वदर्शनेन सौरभं पश्यतीत्यादीनामपि साधुत्वस्वीकारे बाधकाभावः । अन्यथा सुरभि चन्दनं पश्यतीत्यादौ सुरभिपदोत्तरं कटोऽपि कर्म भीष्मादयोऽपीति मुख्यभाष्यमते द्वितीया न स्यात् । तव मतेऽपि लक्षणया तादृशप्रयोगस्य साधुत्वस्वीकाराच्च ।

पुष्पं जिघ्रतीत्यादौ पुष्पपदस्य पुष्पवृत्तिगन्धे लक्षणा । धात्वर्थस्तु गन्धोपलक्षितप्रत्यक्षानुकूल आत्ममनःसंयोगादिरूपो व्यापारः । तथा चैकदेवदत्ताश्रयकपुष्पवृत्तिगन्धविषयकप्रत्यक्षानुकूलो व्यापार

इति बोधः । वृत्तित्वं संसर्गः । व्युत्पत्तिवादे तु घ्राधातुसमभिव्याहृतद्वितीयायाः आधेयत्वमर्थः । तस्य व्युत्पत्तिवैचित्र्येण धात्वर्थैकदेशे गन्धेऽन्वयः । एवं च पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रय इति बोधः इति । तन्न । गन्धस्य धातुवाच्यत्वे धात्वर्थसंगृहीतकर्मत्वेन नृत्यादिवदकर्मकत्वापत्तेः । पुष्पपदोत्तरं द्वितीयानापत्तेश्च । आमोदमुपजिघ्रतीत्यत्रोपसर्गवशेन धातोर्ज्ञानमात्रमर्थः । तथा चामोदविषयकज्ञानानुकूलो व्यापार इति बोधः । अथवाऽऽमोदग्रहणानुकूलो व्यापार इति बोधः ।

**कर्म सप्तविधं–निर्वर्त्यं, विकार्यं, प्राप्यम्, औदासीन्यप्राप्यं, कर्तुरनीप्सितं, संज्ञान्तरैरनाख्यातं, अन्यपूर्वकमिति ।**

तत्र निर्वर्त्यं घटभस्मादिरूपं, विकार्यं मृत्काष्ठादिरूपं, प्राप्यं रूपं पश्यतीत्यादि, औदासीन्यप्राप्यं तृणं स्पृशतीति, कर्तुरनीप्सितं विषं भुङ्क्ते, संज्ञान्तरैरनाख्यातं गां दोग्धि पय इत्यत्र गोरूपं, अन्यपूर्वकमधितिष्ठति वैकुण्ठमित्यादि ।

ननु मृत्काष्ठयोर्विकार्यकर्मत्वमयुक्तं क्रियाजन्यफलाश्रयत्वाभावादिति चेत् न । प्रकृतिविकृत्योर्निरूढयाऽभेदविवक्षयोत्पत्त्याश्रयत्वात् । भूषणे काष्ठानि विकुर्वन्भस्म करोतीत्यर्थः । तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीतिवत् । एतच्च व्यर्थः पचिरिति प्रक्रम्य भाष्ये व्युत्पादितमित्युक्तम् । वैयाकरणनव्यैरपि तदेवानुसृत्य-अत्र प्रधानकर्मणि लादयः 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्' इति भाष्योक्तेः । प्रधानकर्मत्वं चात्र कर्तृप्रत्ययसमभिव्याहारे प्रधानभूतव्यापारविशेषणफलाश्रयत्वम् । एतद्विषये ईदृशप्राधान्यस्यैव ग्राह्यत्वात् । तच्चोक्तोदाहरणयोर्निर्वर्त्यमानौदनभस्मनोरेव । तन्निष्ठविशेषणकव्यापारस्यैव तत्सूत्रस्थभाष्येण शाब्दप्राधान्यप्रतीतेः, तण्डुलरूपे कर्मणि लादय इति नव्यानां प्रमाद एव । दुहादिषु भाष्ये गणनाभावाच्च–इत्युक्तं तन्न । दुहादिपरिगणितधातुव्यतिरिक्तानां णिजन्तभिन्नानां करोत्यादिषु पाठस्वीकारात् ।

ननु कटं भीष्मं करोतीति कटोऽपि कर्म भीष्मादयोऽपीति भाष्यरीत्या प्रयोगस्तुल्य इति चेत् किं चातः । नहि सः अन्यतरकर्मणि लकारसाधकः अन्यथा भीष्मं कटः क्रियते इति प्रयोगापत्तेः । एवं चात्र प्रधानकर्मणि लादय इत्यविचारताभिधानं, प्रधानकर्मण्याख्येय इति भाष्यं

नीह्वकृष्वहविषयकमिति कैयटादिसकलग्रन्थकारैर्व्याख्यातत्वात् । तदुपमर्देनान्यथाव्याख्याने दृढतरप्रमाणाभावात् । एवं च तण्डुलरूपे कर्मणि लादय इति नव्यानां प्रमाद एवेति वदतामेव प्रमादः ।

ननु भाष्यकारेण दुहादिषु अपाठात्कथं तण्डुलरूपे कर्मणि लादय इति चेत् भाष्यपाठस्योपलक्षणत्वात् । अत एव चकारेण संग्रह इति कैयटादयः । ननु तर्हि 'द्व्यर्थः पचिः' इति भाष्यं व्यर्थं, पाठेनैव द्विकर्मकतायाः सिद्धत्वादिति चेन्न । पचिरेव द्व्यर्थः नान्य- इत्यभिप्रायपरत्वात् । तेन पयःकर्मकं गोसंबन्धि दोहनमिति बोधे एव गां दोग्धि पय इत्यस्य साधुत्वं न तु गोकर्मकपयःकर्मकमिति बोधेऽपीति विशेषसद्भावात् । ननु दुहादीनां द्व्यर्थत्वाभावे 'अपादानमुत्तराणि गां दोग्धि' इति विप्रतिषेधसूत्रस्थभाष्यम् 'अवधित्वफलाश्रयत्वयोर्युगपद्विवक्षायां चेदम्' इति कैयटश्च विरुध्येतेति चेन्न । पयोरूपकर्मणोऽविवक्षायां गौरेव कर्तुरीप्सिततमं कर्मेति कर्मत्वप्राप्तौ तत्संभवात् । अत एव भाष्ये गां दोग्धीत्येवोक्तं न तु पय इति । एतेन दुहेरपि अन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारार्थत्वे गां दोग्धि पय इत्यादौ गोपयसोरुभयोरप्यनेन कर्मत्वं, गोः कर्तृव्यापारजन्यफलाश्रयत्वात्, पयसस्तु प्रयोज्यफलाश्रयत्वात् । गोर्विभागाश्रयत्वेन तु न कर्मत्वं पयोनिष्ठविभागीयसंबन्धस्यैव फलतावच्छेदकत्वात् । तत्त्वेनानुदेश्यत्वान्न(?)उक्तप्राधान्यं गोरिति तत्र लादयः । एवमन्येषामपि दुहादीनां जिदण्ड्यादीनां च द्विकर्मत्वं बोध्यम् । गर्गाः शतं दण्ड्यन्तामित्यत्रोक्तप्राधान्यं गर्गाणामिति तत्र लादयः । उद्देश्यत्वरूपमार्थं प्राधान्यं शतस्येति अनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधोऽपीति नव्योक्तमपास्तम् । एवंविधस्वेच्छयानेकविधप्रयोज्यव्यापारस्वीकारे तृतीयचतुर्थप्रयोज्यव्यापारेण गां दोग्धि पयः यज्ञदत्तं विष्णुमित्रं देवदत्त इत्यादिप्रयोगापत्तेः । व्यापारद्वयार्थत्वमेवेत्यत्र नियामकाभावात् । न च गत्यादिसूत्रेण निस्तारः, तस्य ण्यन्तविषयत्वात् । अन्यथा त्वद्रीत्या गोरपि कर्मत्वं न स्यात् । किं च पचतीतिवद्दुहादीनामपि द्व्यर्थत्वेऽभिप्रेते द्व्यर्थः पचिरितिवद्द्व्यर्थानामिति वदेन्न तु द्विकर्मणामिति । तथाकथनेन दुहादीनां फलद्वयानुकूलव्यापारार्थत्वं न किंतु अकथितकर्मणा द्विकर्मकत्व-

मिति स्पष्टं प्रतीयते । अस्तु वा द्विकर्मकत्वं तथापि गोः प्रधानकर्मत्वाभिधानमनुचितमेव । तथात्वे हि 'प्रधाने नियता षष्ठी गुणे तूभयथा भवेत्' इति भाष्याद्गोरूपे कर्मणि नित्यं षष्ठी स्यात् । तथा च गां पयसो दोग्धेति प्रयोगो न स्यात् । न चात्रानुद्देश्यत्वरूपगौणकर्मत्वमादाय प्रयोगोपपत्तिरिति वाच्यम् । पयसः शाब्दमप्राधान्यमादाय षष्ठीविकल्पापत्तौ गोः पयो दोग्धेत्यस्याप्यापत्तेः । प्रकृते च शाब्दाप्राधान्यस्यैवोचितत्वाच्च । एतेन—

दुहादिभ्यः प्रत्ययेन मुख्यं कर्मत्वमुच्यते ।
णिजन्तेभ्यः कर्तृताख्यं तदसत्त्वेऽन्यकर्मता ॥

दुहाद्युत्तरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनानुभाव्यते । तेन गौः पयो दुह्यते दुग्धा वेत्यत्र पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येव बोधः । तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वादित्यादिव्युत्पत्त्यैव संपत्तौ दुहादेर्गौणं कर्म, नीवहादेः प्रधानं कर्मेत्याद्युक्तिभेदेन विधिद्वयं शाब्दिकानामनादेयमिति शब्दशक्तिप्रकाशिकायां जगदीशोक्तमनादेयं, गोः प्रधानकर्मत्वे षष्ठीविकल्पो न स्यात् । किंच पचतिवत्करोतेर्द्व्यर्थत्वे तण्डुलान्पचतीतिवद्विकाररूपकरोत्यर्थमादाय काष्ठं करोतीति प्रयोगापत्तिः । तस्मात्प्रकृतिविकृतिस्थलेऽभेद एव शरणम् । (उभयगतैकैव कर्तृकर्मादिकारकशक्तिः प्रकृतिविकृत्योरभेदत्वादित्यर्थः ।) अन्यथा विकृतिगतकर्तृत्वस्योक्तत्वेऽपि प्रकृतिगतस्यानुक्तत्वात्तृतीयाप्रसङ्गः । अत एव सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति भाष्यम् । कारकशक्तिभेदे तु अन्यतरकारके लकारापत्तिः । तथा च प्रयोगासंगतिः स्पष्टैव । एवं च काष्ठानि भस्मराशिः क्रियते इति प्रयोगः । नच 'गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्नहि' इति वचनविरोधः । तस्य चान्तमात्रविषयत्वात् (?) । तत्र मानं तूक्तभाष्यमेव ।

एतेनैको वृक्षः पञ्च नौका भवतीति भूधातूत्तरमेकवचनं प्रयुञ्जानाः परास्ताः । प्रकृतिविकृतिभावव्यतिरिक्तोद्देश्यविधेयभावस्थले तूद्देश्यसंख्यासमानवचनत्वमाख्यातस्य । अत एव शास्त्राणि चेत्प्रमाणं स्युरित्यादयः प्रयोगाः ।

यत्तु प्रकृतिविकृतिभावस्थले कर्माख्यातेन प्रकृतेः कर्मत्वमेव प्रत्या-

च्यते । अतः काष्ठानि भस्मराशिः क्रियन्ते इत्यादावाख्यातार्थविशेष्यकाष्ठादिवाचकपदसमानवचनत्वमाख्यातस्य न तु निर्वर्त्यभस्मादिरूपविकारवाचकपदसमानवचनता । अथैवं निर्वर्त्यवाचकपदात्प्रथमा न स्यात् । तत्कर्मतायाः लकारेणानभिधानादिति चेत्सत्यं, काष्ठं भस्म क्रियत इत्यादौ भस्मादिनिर्वर्त्यकर्मताया लकारेणानभिधानेऽपि तत्कर्मतायाः धात्वर्थसंसर्गतया भानोपगमेन तादृशकर्मोत्तरं प्रथमायाः साधुता, प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयादिविभक्तेः साधुत्वात् । न च धात्वर्थे नामार्थस्य साक्षादन्वयोऽव्युत्पन्न इति प्रकृते संसर्गतया भानं न संभवतीति वाच्यम् । घटो नीलो भवतीत्यादौ भवनादिक्रियायां नीलादेः कर्तृतासंबन्धेन साक्षादन्वयवदत्रापि व्युत्पत्तिवैचित्र्येण कर्मान्तरविशेषणतापन्नक्रियायामपरकर्मणः कर्मतासंबन्धेनान्वयोपगमात् । न चैवमपि कर्मत्वस्य प्रकृत्यर्थविशेष्यत्वेन विवक्षायां काष्ठं भस्मराशिं क्रियते इति प्रयोगापत्तिः । कर्मान्तरविशेषणतानापन्नक्रियायामेव द्वितीयया कर्मत्वं बोध्यत इति व्युत्पत्तिकल्पने गौर्दुह्यते क्षीरमजा नीयते ग्राममित्यादिदोहननयनादिक्रियायां क्षीरग्रामादिकर्मत्वानन्वयप्रसङ्ग इति वाच्यम् । प्रकृतिविकृत्युभयकर्मस्थले तथा व्युत्पत्तेः । यथोक्तातिप्रसङ्गवारणाय दर्शिता व्युत्पत्तिः कल्प्यते । तथा कर्तृविशेषणतानापन्नक्रियायामेव कर्तृत्वान्वय इत्यपि व्युत्पत्तिः कल्प्यते । अन्यथा प्रकृत्यर्थविशेष्यतया कर्तृत्वविवक्षया काष्ठं भस्मना भवतीति प्रयोगस्य दुर्वारत्वात् '—इति व्युत्पत्तिवादे उक्तम् । तत्र प्रकृतेः कर्मत्वमेव बोध्यते इत्यत्र मानाभावात् । प्रत्युत 'सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवतः' इति भाष्योदाहरणविरोधश्च । यदपि नीलो घटो भवतीत्यादौ व्युत्पत्तिवैचित्र्येण नीलस्य कर्तृतासंबन्धेन भवने तस्याश्रयतासंबन्धेन घटेऽन्वयः । तथा च नीलकर्तृकभवनाश्रयो घट इत्युक्तम् । तदपि न, विना प्रमाणं व्युत्पत्तेर्बाधायोगात् । न चान्वयानुपपत्तिर्मानम्, नीलघटयोरभेदबोधोत्तरं भवनस्याश्रयतासंबन्धेन विशिष्टेऽन्वयेपि 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायेन विशेषणे एवान्वयो भविष्यति स्वर्गी ध्वस्त इत्यादौ यथा ।

वस्तुतस्तु तादृशव्युत्पत्तौ मानाभावः । ओदनः पचतीत्यादौ तार्किकरीत्या पाके ओदनस्य कर्मतासंबन्धेनान्वये विवक्षिते प्रातिपदिकार्थत्वाभावेन प्रथमाया अनुत्पत्तौ तादृशप्रयोगस्यासाधुत्वाच्छाब्दबोधजनकं-

त्वाभावेनादोषात् । शक्तिभ्रमात्साधुशब्दस्मरणाद्वा बोधे इष्टापत्तिरेव त्वया वाच्या । शाब्दिकमते तु तादृशप्रयोगाभावादेवादोषात् ।

यत्तु मासं व्याप्यौदनं पचतीत्यर्थे मासमोदनं पचतीति भवत्येवेति हेलाराजमतानुसारेण नव्यैरुक्तं तन्न । भाष्येऽकर्मकेति प्रत्याख्यानायाकर्मकधातूनां व्याप्त्यादिफलवाचकत्वस्वीकारेऽपि पचत्यादीनां तथा स्वीकारे मानाभावः । वार्तिककारमते व्याप्त्यादिफलस्य धात्वर्थत्वाभावेन तादृशप्रयोगाभावे निश्चिते, फलभेदे प्रत्याख्यानायोगे भाष्यस्यापि अकर्मकविषयतैवेति निश्चितत्वात् । मासं तण्डुलानोदनं पचतीति त्रिकर्मकप्रयोगे इष्टापत्तिश्चेदास्तां तावत् ।

प्रकृतमनुसरामः । प्राप्यं रूपं पश्यतीत्यादि । अत्र वेदान्तिनये आवरणभङ्गानुकूलो व्यापारश्चाक्षुषज्ञानरूपो दृशधातोरर्थः । तथा चावरणभङ्गाश्रयत्वाद्रूपादेः कर्मत्वम् । न चैवमीश्वरो रूपं पश्यतीति प्रयोगो न स्यात् । ईश्वरे आवरणभावेन तद्भङ्गानुकूलव्यापाराभावादिति चेन्न । विषयगुण्ठनपटवद्विषयगतमेवाज्ञानं तदावारकं न तु पुरुषाश्रितमित्यज्ञानभेदस्वीकारेणेश्वरेऽज्ञानाभावेऽपि विषये तत्सत्त्वात्प्रयोगोपपत्तिः । न च नयनपटलवत्पुरुषाश्रितमेवाज्ञानं, न तदतिरेकेण विषयगताज्ञाने प्रमाणमस्तीति मते दोष एवेति वाच्यम् । तत्राज्ञानारोपेण प्रयोगोपपत्तिः । दृश्यते हि पुराणादौ रामकृष्णादीनामीश्वराणामप्यज्ञानवर्णनम् ।

ईप्सिततमवत्क्रियया युक्तानीप्सितस्यापि कर्मसंज्ञाविधायकात् 'तथा युक्तं चानीप्सितम्' इतिसूत्राद्ग्रामं गच्छंस्तृणं स्पृशति, विषं भुङ्क्ते इत्यादौ कर्मसंज्ञा । उभयत्राप्यनुद्देश्यत्वरूपानीप्सितत्वसत्त्वात् ।

संज्ञान्तरैरनाख्यातं तु—

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथमुषाम् ।
कर्म युक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ।

इत्यादि षोडशधातूनां कर्मणा युक्तस्यापादानादिविशेषैरविवक्षितस्य कर्मसंज्ञाविधायकाऽकथितं चेत्यनुशासनानुशासितसंज्ञावद्गां दोग्धि पय इत्यादौ गवादिरूपं, तदपि पयःकर्मकं गोसंबन्धि दोहनमिति बोधे । गोसंबन्धि यत्पयस्तत्कर्मकं दोहनमिति बोधे तु षष्ठ्येव । दुहादिषु फलद्वयाभिधानेन गवादीनां कर्मत्वात् 'कर्तुरीप्सिततमं कर्म' इत्यनेन कर्मत्वप्रतिपादनमनुचितमेवेति प्रतिपादितं प्राक् । ननु गां दोग्धि पयः स्थाल्यामित्यादौ अधिकरणत्वाविवक्षायां स्थाल्या अप्यनेन कर्मत्वापत्ति-

रिति चेन्न। अन्तरङ्गत्वात्समवायसंबन्धवति चरितार्थो विधिः संयोगसंबन्धवति न प्रवर्तते। तथा युक्तमित्येकवचनादेकस्मिंल्लक्ष्ये उ(क्तमु?)भयत्रापादयितुमशक्यम्। अन्यथा देवदत्ताय स्थाल्यां हस्तेन गां दोग्धि पय इत्यादौ सर्वत्र द्वितीयापत्तिः, अधिकरणसंज्ञाकरणसंज्ञयोरपि पूर्वत्वात्। यत्र तु न समवायसंबन्धवदुपस्थितं तत्र संयोगादिसंबन्धग्रहणम्। स्थालीं दोग्धि पय इत्यादौ व्रजमवरुणद्धि गामितिवदिष्टापत्तिः।

वैयाकरणनव्यास्तु—स्वामिनः सत्त्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलो व्यापारो दीयतामित्यभिलापादिरूपो दिदापयिषाव्यञ्जको याचेरर्थः। अविनीतं विनयं याचते इत्यत्र तु स्वीकारानुकूलो व्यापारो याचेरर्थः। स्वीकारश्चेदमवश्यं करिष्यामीति अभिला(षा?पा)दिजनको ज्ञानविशेषः। फलतावच्छेदकसंबन्धो विषयता। अत्रापादानादिविषयाभावादनेन कर्मत्वमित्याहुः। तन्न, पुत्रार्थं कन्यां याचते इत्यनापत्तेः, स्वधनं याचते इत्याद्यनापत्तेश्च। उभयत्र यथाक्रमं स्वस्वत्वोत्पत्तिस्वामिस्वत्वनिवृत्त्यभावात्।

यत्तु पौरवं गां याचते इत्यादौ स्वोद्देश्यकदानेच्छा याचेरर्थः। प्रधानकर्मगवाद्यन्वितद्वितीयार्थविषयत्वं धात्वर्थतावच्छेदकदानेऽन्वेति। स्वविषयकज्ञानादिरूपविषयोपंहितेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम्। अत एव घटो जिज्ञास्यते इत्यादौ घटादेः सन्नन्तकर्मतेत्यादि व्युत्पत्तिवादे उक्तम्। तन्न। पुत्रार्थं कन्यां याचते इत्यनापत्तेः स्वसंप्रदानकदानेच्छां प्रति फलालाभशङ्कया देहीत्यवदत्यपि तथाप्रयोगापत्तेश्च।

मम तु प्रतिभाति—बुद्धया निश्चितलाभानुकूलो व्यापारो याचेरर्थः। अनिश्चितस्तु भिक्षतेः। तस्माद्भिक्षतेर्याचतिसमानार्थकत्वं वदन्तो उपेक्ष्याः। अत एव स्वधनं याचत इति प्रयोगो नतु भिक्षते इति। इदं च भाष्येऽपि दुहियाचिभिक्षीति उभयोः पृथग्ग्रहणाद्ध्वनितम्। यदपि याचनमात्रादपायाभावेन बलेर्गां याचते इति नेष्टमिति स्पष्टं भाष्ये इत्युक्तम्। तदपि न। पूर्वपक्षभाष्ये तथोक्तेऽपि तदुत्तरसिद्धान्तभाष्ये कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेदिति पौरवाद्याच्यते कम्बल इति भवत्येवेति वदतो भाष्यकारस्य बलेर्गां याचत इत्यादिप्रयोगस्यापीष्टत्वात्। व्रजमवरुणद्धि गामित्यादौ निर्गमप्रतिबन्धानुकूलो व्यापारो धात्वर्थः।

एवं चैकाश्रयकः गोवृत्तिनिर्गमप्रतिवन्धानुकूलो व्यापारो व्रजसंवन्धीति बोधः । अत्राधिकरणत्वाविवक्षायामनेन कर्मत्वम् ।

गुरुं धर्मं पृच्छतीत्यादौ जिज्ञासाबोधकव्यापारो धात्वर्थः । बोधे गुरुवृत्तित्वस्य जिज्ञासायां धर्मविषयकत्वस्य चान्वयः । तथा च धर्मविषयकजिज्ञासाविषयकगुरुवृत्तिज्ञानानुकूलः देवदत्तकर्तृको व्यापार इति बोधः।

वृक्षमवचिनोति फलानीत्यादौ ग्रहणानुकूलो व्यापारो धात्वर्थः । अन्ये विभागपूर्वकमादानं चेरर्थ इति वदन्ति तन्न, विभागस्यार्थसिद्धत्वाद्वाच्यताकोटौ निवेशे गौरवात् । तथा चैकदेवदत्ताश्रयकः फलवृत्तिग्रहणानुकूलो व्यापारो वृक्षसंबन्धीति बोधः ।

शिष्यं धर्मं ब्रूत इत्यादौ ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापारो धात्वर्थः । एकदेवदत्ताश्रयकः शिष्यसंबन्धी धर्मविषयकज्ञानानुकूलो व्यापार इति बोधः। अन्ये तु प्रतिपत्त्यवच्छिन्नव्यापारो वदिवचिब्रुविउपदिशियाचतीनामर्थः। तन्निष्ठायां प्रतिपत्तौ शिष्यस्याधेयत्वेन धर्मस्य विषयत्वेनान्वयः । धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलो व्यापारो देवदत्तनिष्ठ इति बोधमाहुः ।

[ केचित्तु ज्ञानोद्देश्यकशब्दजनककृतावित्यर्थः। शब्दस्य सविषयकत्वाभावात् धर्मविषयककृत्यधीनः शब्द इति बोधमाहुः । कृत्यधीनःशब्दोऽर्थः। ज्ञानेशिष्यवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयः । तथा च शिष्यवृत्तिज्ञानोद्देश्य अपरे तु विषयतया ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापार इति वदन्ति ? ]। तत्राद्ये क्रियावाचित्वाभावाद्धातुत्वाभावः । द्वितीये गौरवम् । तृतीये शब्दं ब्रूते इत्यादावनन्वयः। तस्मादुच्चारणानुकूलव्यापारोऽर्थः । धर्मपदस्य तत्प्रतिपादकशब्दे लक्षणा । तथा च गुर्वाश्रितः धर्मप्रतिपादकशब्दकर्मकोच्चारणानुकूलो व्यापारः शिष्यसंबन्धीति बोधः। संवन्धस्तूद्देशरूपः । एवं च धर्मोपदेशकाले प्रसङ्गाच्छूद्रेण श्रुतेऽपि शूद्रं धर्मं ब्रूते इति न प्रयोगः ।

शिष्यं धर्ममनुशास्तीत्यादौ प्रवृत्तिपर्यवसायी ब्रूत्यर्थ एव शासेरर्थः । तथा च गुर्वाश्रितः प्रवृत्तिपर्यवसायी धर्मप्रतिपादकशब्दकर्मकोच्चारणानुकूलो व्यापारः शिष्यसंबन्धीति बोधः।

अजां ग्रामं नयति भारं वहति हरति कर्षतीत्यादावुत्तरदेशसंयोगानुकूलव्यापारो नयत्यादेरर्थः । तथा च देवदत्ताश्रितः ग्रामसंबन्धी अजा-

वृत्युत्तरदेशसंयोगानुकूलो व्यापार इति बोधः । संयोगस्य द्विष्ठत्वेऽप्यजा ग्रामसंबद्धा भवत्वितीच्छा न तु ग्रामः अजासंबद्धो भवत्वित्युद्देशः । तेनाजायाः कर्तुरिति कर्मत्वं ग्रामस्य त्वकथितं चेत्यनेन ।

अकर्मकधातुभिर्योगे देशभावकालगन्तव्याध्वानां कर्मसंज्ञाविधायकात् 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति वार्तिकान्मासं जीवति, क्रोशं स्वपिति, गोदोहं तिष्ठति कुरून्क्रीडतीत्यादौ कर्मसंज्ञा । माससंबन्धिप्राणधारणानुकूलव्यापारो देवदत्तकर्तृकः इत्यादि बोधः । अधिकरणत्वविवक्षायां तु सप्तम्येव, समायां विजायत इति यथा । अत्र च [ननु देशपदेन कुरुपञ्चालादिग्रहणात्कथमिदमपि चेन्न । विनिगमकाभावेनोभ (यप ? यार्थ) कत्वसंभवात् ।] समानोदरे शयित इति निर्देशोऽपि लिङ्गम् । एतेन मासं जीवतीत्यादावधिकरणरूपं गौणमेव कर्मत्वं सुपाऽनुभाव्यते । मासाधिकरणकजीवनवानिति बोध इति जयरामाद्युक्तमपास्तम् ।

अभिनीत्येतत्संघातपूर्वकाद्विशतेराधारस्य कर्मसंज्ञाविधायकात् 'अभिनिविशश्च' इत्यनुशासनादभिनिविशते सन्मार्गमित्यादौ कर्मसंज्ञा । सन्मार्गविषयकाग्रहवानिति बोधः । एष्वर्थेष्वभिनिविष्टानामिति भाष्यप्रयोगात्क्वचिन्न । तेन पापेऽभिनिवेश इत्यादिसिद्धिः ।

उप–अनु–अधि-आङ्-पूर्वस्य वसतेराधारस्य कर्मसंज्ञाविधायकात् 'उपान्वध्याङ्वसः' इत्यनुशासनादुपवसति अनुवसति अधिवसति आवसति वा ग्रामं सेनेत्यादावधिकरणत्वं द्वितीयार्थः । तथा च सेनाकर्तृको ग्रामाधिकरणको निवास इति बोधः । अत्र तु लुग्विकरणपरिभाषया वस निवास इत्यस्यैव ग्रहणं, न तु वस आच्छादन इत्यस्य । तेन गृहेऽनुवस्ते इत्यादिसिद्धिः । भोजननिवृत्तिवाचकस्य वसेः प्रतिषेधबोधकात् 'वसेरश्यर्थस्य प्रतिषेधः' इत्यनुशासनाद्वन उपवसतीत्यादौ तु न । 'उपोष्य रजनीमेकाम्' इत्यादौ तु कालाध्वनोरित्यनेन द्वितीया ।

अधिपूर्वकशीङ्स्थासामाधारस्य कर्मसंज्ञाविधायकादधिशीङ्स्थासां कर्मेत्यनुशासनादधितिष्ठति अधिशेते अध्यास्ते वा वैकुण्ठं हरिरित्यादौ कर्मसंज्ञा, तेन हर्याश्रिता वैकुण्ठाधिकरणिका शयनक्रियेति बोधः ।

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणां धातूनामण्यन्तावस्थायां

---

१ अर्थशब्दो निवृत्तिवाचीति कैयटः । अश्यर्थस्य वाचको यो वसिस्तस्येत्यर्थः ।

कर्तुर्ण्यन्तावस्थायां कर्मसंज्ञाविधायकात् 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम्' इत्यनुशासनात्—

शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत्।
आशयच्चामृतं देवान्वेदमध्यापयद्विधिम् ॥
आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥

इत्यादावण्यन्तकर्तृभूतानां शत्रु–स्व–देव–विधि-पृथ्वीत्यादीनामनेन कर्मसंज्ञा। तथा च स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो व्यापारो हरिकर्तृक इत्यादिबोधः। अत्र कर्मत्वं द्वितीयार्थः। यत्तु शब्दशक्तिव्युत्पत्तिवादानुरोधेन प्रकृत्यर्थनिरूपितं कर्तृत्वमेव द्वितीयार्थ इत्युक्तं वैयाकरणनव्यैः तन्न, प्रधानणिजर्थकर्मत्व एव द्वितीयाविधानेन गत्यादिसूत्रस्य विध्यर्थत्वे नियमार्थत्वे वा कर्मत्वस्यैव तदर्थत्वात्। अन्तर्भूतगत्यर्थकेऽपीदं प्रवर्तते। तेन तारयति कपीनित्यादि सिद्धम्। न चैवं नाययति वाहयति वा भारं भृत्येनेत्यादावन्तर्भूतगतित्वात्कर्मत्वापत्तिः। नीवह्योर्नेति निषेधात्। इदमेवात्र गौणगत्यर्थग्रहणे लिङ्गम्। देवदत्तकर्तृका भृत्यकर्तृकग्रामभारकर्मकनयनवहनानुकूला क्रियेति बोधः। वाहयति बलीवर्दान्यवानित्यादि तु 'नियन्तृकर्तृकस्य वहेरनिषेधः' इति स्मरणात्। देवदत्तकर्तृका बलीवर्दाश्रितयवकर्मकवहनानुकूला क्रियेति बोधः। अस्मादेव भाष्योदाहरणाद्रूढियोंगमपहरतीति न्यायं बाधित्वा पशुप्रेरकसामान्यस्य ग्रहणम्। हिंसायामेव प्रत्यवसानार्थभक्षेः कर्मत्वं, भक्षयति बलीवर्दान् सस्यम्, एककर्तृका बलीवर्दनिष्ठा सस्यकर्मकभक्षणानुकूला क्रियेति बोधः। भक्षयत्यन्नं बटुनेत्यादौ तु बटुकर्तृकान्नकर्मकभक्षणानुकूला क्रिया देवदत्तकर्तृकेति बोधः।

'जल्पतिप्रभृतीनामुपसंख्यानम्' इत्यनुशासनाज्जल्पयति पुत्रं धर्मं देवदत्त इत्यादौ कर्मसंज्ञा। अत्र पुत्रनिष्ठधर्मकर्मकजल्पनानुकूला क्रिया देवदत्तकर्तृकेति बोधः। अत्र ब्रूञ्समानार्थकत्वाज्जल्पतियोगेऽकथितं चेति कर्मसंज्ञायां यज्ञदत्तः जल्पयति धर्मं पुत्रं देवदत्तमिति प्रयोगोऽपीष्ट एव। देवदत्तनिष्ठपुत्रनिष्ठधर्मकर्मकजल्पनानुकूला क्रिया यज्ञदत्तकर्तृकेति बोधः। दृशेश्चेत्यनुशासनाद्दर्शयति हरिं भक्तानित्यत्र कर्मसंज्ञा, भक्तवृत्तिहरिकर्मकदर्शनानुकूला क्रिया देवदत्तकर्तृकेति बोधः। स्मारयति हरिं भक्तैरित्यत्र स्मरतेर्बुद्ध्यर्थत्वेऽपि न गतिबुद्धीत्यनेन कर्मत्वम्। तत्र

ज्ञानसामान्यार्थस्यैव ग्रहणात । अत्र दृशेश्चेत्येव लिङ्गम्, अन्यथा दर्शनस्यापि बुद्धिविशेषत्वात्तेनैव सिद्धे किं तेन।

हृक्रोरणौ कर्तुर्णौ कर्मत्वविधायकात् 'हृक्रोरन्यतरस्याम्' इत्यनुशासनात् हारयति कारयति भृत्येन भृत्यं वा कटमित्यादौ विकल्पेन कर्मसंज्ञा। भृत्यकर्तृकं तत्कर्मकं वा कटकर्मकं हरणं करणं वा तदनुकूला देवदत्तकर्तृका प्रवर्तनेति बोधः।

आत्मनेपदिनोरभिपूर्वकवदिदृशोरण्यन्तकर्तुर्ण्यन्ते विकल्पेन कर्मसंज्ञाविधायकेनाभिवादिदृशोरात्मनेपदेवेति वाच्यमित्यनुशासनेनाभिवादयते दर्शयते देवं भक्तेन भक्तं वेत्यादौ भक्तकर्तृकं तत्कर्मकं वा देवकर्मकमभिवन्दनं दर्शनं वा तदनुकूला प्रवर्तना देवदत्तकर्तृकेति बोधः।

तसन्तोभयसर्वयोर्योगे धिक्-उपर्युपरि-अधोऽधोऽध्यधीत्येतेषां च योगे द्वितीयाविधायकात्—

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते'

इत्यनुशासनादुभयतः कृष्णं गोपा इत्यादौ द्वितीया। कृष्णसंबन्धिपार्श्वद्वयवर्तिनः इति बोधः। धिक् कृष्णाभक्तमित्यादौ कृष्णाभक्तसंबन्धिनिन्देत्यर्थः। उपर्युपरि अधोऽधोऽध्यधि वा लोकं हरिरित्यादौ सामीप्यरूपः संवन्धो द्वितीयार्थः। लोकसमीपोर्ध्वभागवृत्तिर्हरिरिति बोधः। एवं समीपाधोभागवृत्तिः समीपदेशवृत्तिरिति यथाक्रमं बोधः।

'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इत्यनुशासनादभितः परितो वा कृष्णं गोपा इत्यादौ द्वितीया। अनयोः खण्डशः शक्त्या सर्वावच्छेदेनेत्यर्थः। तदेकदेशे सर्वस्मिन् द्वितीयार्थसामीप्यसंवन्धान्वयः कृष्णसंवन्धिसर्वावच्छेदेनेत्यर्थः। अभित इति आभिमुख्ये(वा?) कृष्णसंमुख इत्यर्थः। समया ग्रामं निकषा वेत्यत्राव्यये सामीप्यार्थे। द्वितीयार्थो निरूपितत्वं ग्रामनिरूपितसामीप्यवदित्यर्थः। हा कृष्णाभक्तमित्यादौ कृष्णाभक्तसंवन्धी शोक इत्यर्थः। ननु हा पितः कासीत्यत्र तथा हा तातेत्यत्रापि पितरि द्वितीयापत्तिरिति चेन्न। पितृसंबोधकप्रश्नविषयसत्ता शोच्येत्यर्थात्पितरि हाशब्दयोगाभावात्। यद्वा हेत्यस्य मामित्यनेन संवन्धः। ईदृशपितृवियोगादहं शोच्योऽथवा मम कष्टमिति बोधः। पित्रैव हाशब्दयोग इत्याग्रहे तु अन्तरङ्गत्वात्प्रथमा।

अन्तरान्तरेणाभ्यां योगे द्वितीयाविधायकात् 'अन्तरान्तरेण युक्ते' इत्यनुशासनादन्तरान्तरेण हरिं न सुखमित्यादावत्यन्ताभाववानर्थः । द्वितीयार्थः प्रतियोगित्वमभावेऽन्वेति । तथा हरिपदं हरिभक्तिपरम् । हरिभक्तिप्रतियोगिकाभाववद्वृत्तिसुखसत्ताभाव इति बोधः । तव ममान्तरा कमण्डलुरित्यत्र त्वन्मत्संबन्धी कमण्डलुर्मध्ये इत्यर्थादन्तरायोगाभावात्कमण्डलुना योगेऽपि अन्तरङ्गत्वात्प्रथमा । किमनयोरन्तरेण गतेनेत्यादौ विशेषेण ज्ञातेनेत्यर्थात्तृतीयान्तोऽन्तरेणशब्दो न तु निपातः । प्रकृते तु परस्परसाहचर्यान्निपातस्यैव ग्रहणमिति द्वितीयाभावः ।

कालाध्वनोरत्यन्तसंयोगे कालाध्ववाचकाद् द्वितीयाविधायकात् 'कालाध्वनोरत्यन्तसंयोगे' इत्यनुशासनात् मासमधीते क्रोशं कुटिला नदीत्यादौ द्वितीया । व्यापकतासंबन्धो द्वितीयार्थः । तथा च मासं व्याप्याध्ययनमिति बोधः । अधिकरणत्वविवक्षायां तु मासेऽधीत इत्येव प्रयोगः । अन्तरान्तरेणेत्यनेन साहचर्यात्संबन्धत्वप्रकारक एवैतस्य प्रवृत्तेः । अत एवैकादश्यां न भुञ्जीतेत्यस्य साधुत्वम् । ननु त्रिंशद्दिनेषु कंचित्कालमध्ययनेऽपि मासेन सर्वव्याप्त्यभावे कथं प्रयोग इति चेन्न । यत्समुदायो मासादिपदार्थः त एव तदवयवाः । एवं च प्रत्यहं त्रिंशद्दिनेषु कंचित्कालमध्ययनेऽपि तदवयवव्याप्तिसत्त्वाद् द्वितीयोपपत्तिः । दिनं स्वपितीत्यादिप्रयोगस्तु नैकदण्डादिस्वापे दिनावयवव्याप्त्यभावात् ।

ज्ञानजनकज्ञानविषयत्वरूपलक्षणत्वद्योतकस्यानोः कर्मप्रवचनीयसंज्ञाविधायकात् 'अनुर्लक्षणे' इत्यनुशासनात्कारीरीमनु वृष्टिरित्यत्र कर्मप्रवचनीयसंज्ञायां सत्याम् 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया । अत्रानोरनुभूयत इत्यत्रेव न क्रियागतविशेषद्योतकत्वम् । षष्ठीवन्न संबन्धबोधकत्वं द्वितीययैवोक्तत्वात् । नापि विलिखतीत्यत्र विमाय लिखतीतिवत् क्रियापदाक्षेपकत्वं किंतु द्वितीयार्थसंबन्धस्य लक्ष्यलक्षणभावरूपविशेषेऽवस्थापनम् । तदुक्तम्—

क्रियाया द्योतको नायं संबन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः ॥ इति ।

संबन्धभेदकत्वाभावेऽपि क्वचिद्विधानसामर्थ्यात्संज्ञा । अत्र द्वितीयार्थः संबन्धः हेतुश्च । अत्र शब्दशक्तिप्रकाशिकायामनुशब्दस्य क्रियावाचित्वादित्युक्तं, भाट्टरहस्ये च हेतुसमानाधिकरणमनोरर्थ इत्युक्तं, तदु-

भयमप्यसत । सर्वमते उपसर्गाणामवाचकत्वात् । वृक्षमनु विद्योतते विद्युदित्यत्र वृक्षज्ञानजन्यज्ञानविषयो विद्युद्विद्योत इत्येव बोधाद्धेतुत्वाभावाच्च । एवं च कारीर्यभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः । अनन्तरोक्त ' सहयुक्तेऽप्रधाने ' इति तृतीयानिमित्तसहशब्दार्थसाहित्ये द्योत्येऽनोः कर्मप्रवचनीयसंज्ञाविधायकात् ' तृतीयार्थे ' इत्यनुशासनादनोः कर्मप्रवचनीयसंज्ञायां तद्युक्ते नदीमन्ववसिता सेनेत्यत्र द्वितीया । संबन्धो द्वितीयार्थः । तया सह संब(न्धे?द्धे)त्यर्थः । साहित्यरूपसंबन्धस्य द्विष्ठत्वेऽपि तृतीयावत्प्रतियोगिन्येव द्वितीया । हीनत्वद्योतकानोः कर्मप्रवचनीयसंज्ञाविधायकात् ' हीने ' इत्यनुशासनादनुहरिं सुरा इत्यत्रानोः कर्मप्रवचनीयत्वाद्वितीया । तथा च हरिप्रतियोगिकापकर्षवन्त इत्यर्थः ।

अधिके हीने च द्योत्ये उपेत्यस्य कर्मप्रवनीयसंज्ञाविधायकात् ' उपोऽधिके च ' इत्यनुशासनाद्धीने उप हरिं सुरा इत्यत्रोपशब्दस्य कर्मप्रवचनीयसंज्ञा । बोधः पूर्ववत् । खार्यपेक्षयाधिको द्रोण इत्यर्थे उप खार्यां द्रोण इत्यादौ यस्मादधिकमिति सप्तमी वक्ष्यते । वैयाकरणनव्यैस्तूप सुरान्हरिरित्यादौ सुरप्रतियोगिकाधिकत्ववानिति बोधादधिकेऽपि द्वितीया भवतीत्युक्तम् । तन्न । सप्तम्या बाधादुप सुरेषु हरिरित्यस्यैवेष्टत्वात् ।

लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः, इत्यनेन वृक्षं प्रति पर्यनु वा विद्योतते विद्युदित्यादौ प्रत्यादीनां कर्मप्रवचनीयत्वात्कर्मप्रवचनीययुक्ते द्वितीयेति द्वितीया । वृक्षज्ञानजन्यज्ञानविषयो विद्युद्विद्योत इत्यर्थः । भक्तो विष्णुं प्रति पर्यनु वा । अत्र विषयत्वाख्यः संबन्धो द्वितीयार्थः । तस्य पदार्थैकदेशे भक्तावन्वयः । तथा च विष्णुविषयकभक्त्याश्रय इति बोधः । इत्थंभूतः कंचित्प्रकारं प्राप्तः स आख्यायते निरूप्यतेऽनेनेतीत्थंभूताख्यानं प्रकारविशेषनिरूपकत्वम् । लक्ष्मीर्हरिं प्रति परि अनु वेत्यत्र स्वत्वाख्यः संबन्धो द्वितीयार्थः । हरिप्रतियोगिकस्वत्ववती लक्ष्मीरिति बोधः । वृक्षं वृक्षं प्रति परि अनु वा सिञ्चतीत्यत्र व्याप्यत्वविशिष्टवृक्षादिकर्मकसेचनक्रियेति बोधः । यदा तु जलनिरूपितसंयोगाश्रयत्वं वृक्षे विवक्षितं, यदा कर्मत्वस्य संबन्धत्वविवक्षा तदाप्यनेन द्वितीया । वृक्षनिष्ठव्याप्यतानिरूपितव्यापकत्ववती सेकक्रियेति बोधः । यदा तु......तदा......जलं वृक्षं वृक्षं प्रति सिञ्चतीति च प्रयोगः । जले कर्तुरिति कर्मत्वं वृक्षे तु कर्मप्रवचनीयत्वात् द्वितीया ।

भागवर्जलक्षणादावभेः कर्मप्रवचनीयसंज्ञाविधायकात् 'अभिरभागे' इत्यनुशासनाद्वृक्षमभि सिञ्चति इत्यादावभेः कर्मप्रवचनीयसंज्ञायां द्वितीया षत्वाभावश्च । बोधः पूर्ववत् । भागे तु यदत्र ममाभि स्यात्तद्दीयताम् । अत्र यच्छब्दो बुद्धिस्थत्वेन भागबोधकः । मत्संबन्धिभागकर्तृका एतदधिकरणिका सत्ता प्रेरणाविषयः(?)तत्कर्मकं दानमिति बोधः ।

अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु इत्यनुशासनादपिः कर्मप्रवचनीयः । सर्पिषोऽपि स्यात् । अपिः स्वद्योत्यबिन्दुदौर्लभ्यस्यापि द्योतकः । तथा च सर्पिरवयवबिन्दुकर्तृका तद्बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती संभावनाविषयः सत्तेति बोधः । उदकस्या(प्या)चामेदित्यादौ कर्मापेक्षः । तथा चोदकावयवबिन्दुकर्मिका तद्बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती संभावनाविषयो देवदत्तकर्तृकाचमनक्रियेति बोधः । अपि स्तुयाद्विष्णुमित्यत्र विष्णुकर्मिकैतत्कर्तृका शक्यत्वेन संभाव्यमाना स्तुतिरिति बोधः । धिग् देवदत्तमपि स्तुयाद्वृषलमित्यत्र वृषलकर्मिका गर्ह्या स्तुतिरिति बोधः । स्तुतिगर्ह्यत्वे तत्कर्तुरपि गर्ह्यत्वं फलति । एवंविधद्वितीयार्थनानात्वादाश्रयत्वं द्वितीयार्थ इति भूषणोक्तमपास्तम् । * तिबन्तधातूपस्थाप्यपाकधर्मिककर्मत्वानुभवानुकूलसुप्सजातीयत्वं द्वितीयात्वम् * । [ चोरस्य हिनस्तीत्यत्र तिबन्तधात्वर्थे कर्मत्वप्रतिघातिकादौ कर्मत्वाद्यननुभावकत्वेऽपि तदनुभावकसजातीयत्वान्नाव्याप्तिः?] । वस्तुतः * संकेतविशेषसंबन्धेन द्वितीयापदवत्त्वमेव द्वितीयात्वम् * । एवं तृतीयादावपि ।

इति द्वितीया ।

---

## तृतीयार्थनिर्णयः ।

*कर्तुरिच्छाविषयप्रधानीभूतधात्वर्थव्यापाराश्रयत्वरूपस्वातन्त्र्याश्रयस्य कर्तृसंज्ञाविधायकेन स्वतन्त्रः कर्तेत्यनुशासनेन रामेण बाणेन हतो वालीत्यादौ रामस्य कर्तृसंज्ञायां सत्यां, तथा* कर्तुरिच्छाविषयाव्यवहितफलजनकव्यापाराश्रयत्वरूपसाधकतमत्वस्य करणसंज्ञाविधायकेन 'साधकतमं करणम्' इत्यनुशासनेन बाणस्य करणसंज्ञायां सत्यामुभयत्रापि 'कर्तृकरणयोस्तृतीया' इत्यनुशासनात्तृतीया । उभयत्राप्याश्रयत्वं तृतीयार्थः । कर्मत्वकर्तृत्वाधिकरणत्वानि विशेषणविशेष्यभाववदनियतानि न तु गोत्वादिवद्वस्तुविशेषनियतानि । अतः इच्छाविषयेति विशेषणम् । रामकर्तृकबाणव्यापारसाध्यप्राणवियोगाश्रयो वालीति बोधः ।

अयं कर्ता त्रिविधः—केवलः, प्रयोजको हेतुः, कर्मकर्ता च। देवदत्तेन हरिः सेव्यत इति शुद्धः। क्रियते हरिणेति प्रयोजको हेतुः। गमयति कृष्णं गोकुलमिति कर्मकर्ता,देवदत्ताभिन्नाश्रयको हरिकर्मकः सेवनानुकूलो व्यापारः। हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः। गोकुलकर्मकगमनानुकूलकृष्णाश्रयताहशव्यापारानुकूलो व्यापार इति यथाक्रमं बोधः।

ननु विवक्षातः कारकविभक्तयो नाना भवन्तीत्युक्तत्वाद्देवदत्तः काष्ठैः पचतीतिवत्काष्ठानि देवदत्तेन पचन्तीत्यपि स्यादिति चेन्न। अर्था हि कर्ता तत्प्रयुक्तेन पदेन(?)। किं च तस्य प्रतिनिधिः दृश्यते। व्रीह्यभावे नीवारैरिज्यते। कर्तुः स नास्ति। तद्भेदे कर्मान्तरमेवेति प्रसिद्धिः। किंच कारकान्तरानुपादानेऽप्यसौ दृश्यते भवत्यादिष्विति सकलकारकचक्रप्रयोक्तुरेव मुख्यं कर्तृत्वम्। अन्येषां तु विवक्षारूपगौणकर्तृत्वेन देवदत्तप्रयोजकत्वाभावात्। ननु विवक्षावशात्काष्ठादिकरणादीनां कर्तृत्वादिवत्संप्रदानापादानयोरपि कर्तृत्वापत्तिरिति चेन्न। शब्दशक्तिस्वाभाव्यात्तन्निष्ठक्रियायाः प्राधान्यत्वस्यास्वीकारात्। ननु आत्मानमात्मना वेत्सीत्यादावेकस्य कर्तृत्वकर्मत्वकरणत्वानुपपत्तिः। न च विवक्षावशान्निर्वाहः। पर्यायेण तथा वक्तुं शक्यत्वेऽपि आकडारादेका संज्ञा इति नियमादेकस्यैव वस्तुनो युगपदेकक्रियानिरूपितकर्मत्वकरणत्वादेरसंभवादिति चेत्सत्यम्। अत एवाहंकाराद्युपाधिभेदेनात्मनोऽपि भेदं स्वीकृत्य समाहितं भाष्ये।

एतेन ननु एकस्यैव करणत्वकर्मत्वस्वीकारे कर्म करणमिति नानाविधव्यवहारोऽनुपपन्नः। व्यवहर्तव्यभेदस्यैव व्यवहारभेदनियामकत्वादिति चेन्न। उपधेयसंकरेऽपि उपाधेरिति न्यायेन व्यवहर्तव्याभेदेऽपि व्यवहर्तव्यतावच्छेदकभेदादेव घटो द्रव्यं पाचकः पाठक इत्यादाविव व्यवहारभेदस्वीकारात्। विवक्षातः कारकविभक्तयो नाना भवन्तीति शाब्दिका अप्यनुकूला इति तार्किकोक्तमपास्तम्। भवद्दृष्टान्तेन हि देवदत्तः पाचकः पाठक इतिवदात्मा कर्म करणमिति व्यवहारे सिद्धेऽपि एकस्यात्मनः कर्मकरणत्वासंभवात्। अन्यथा आत्मानमात्मना वेत्सीतिवत्काष्ठानिकाष्ठैः पचन्तीत्यपि स्यादिति सर्वोपप्लवः स्यात्। प्रकृतमनुसरामः।

तार्किकास्तु कारकविभक्तिरूपतृतीयायाः क्रियान्वयि कर्तृत्वं करणत्वं चार्थः। कर्तृत्वं च मुख्यं क्रियानुकूला कृतिरेव। सा च कर्त्राख्यातसमभिव्याहृते चैत्रः पचतीत्यादौ क्रियाविशेष्यतयाख्यातेन प्रत्याय्यते। चैत्रेण

पच्यते शय्यत इत्यादिकर्मभावाख्यातस्थले च क्रियाविशेषणतया तृतीयया प्रत्याय्यते इत्याहुः । तन्मते घटो भवतीत्यादौ घटादीनां कर्तृत्वं न स्यात् । न च तत्र भाक्तं कर्तृत्वं, भाक्तत्वे घटेन भूयते इत्यत्र तृतीया न स्यात्तदुत्पत्तौ संज्ञाया एव नियामकत्वात् । अनेककल्पनापत्तेश्च । विस्तरस्तु अस्मत्कृताख्यातवादे द्रष्टव्यः ।

केचित्तु करणत्वं * कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावे सति क्रियाहेतुत्वम् * । सत्यन्तेन कर्तृकर्मणोः करणनिष्ठव्यापारद्वाराऽधिकरणस्य कर्तृकर्मान्यतरनिष्ठव्यापारद्वारा संप्रदानस्य स्वानुमति-( प्रकाशनेने )च्छोत्पादनद्वारा, अपादानस्य पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा च क्रियाहेतुत्वादतिव्याप्तिवारणम् । कुठारेण छिनत्तीति भाक्तं करणत्वमित्युक्तं तत्र मुख्यत्वे संभवति भाक्तत्वे प्रमाणाभावात् ।

अन्ये तु *व्यापारवदसाधारणं कारणं करणम् * । घटं प्रति कपालसंयोगवारणाय व्यापारवदिति, ईश्वरज्ञानवारणायासाधारणेति । असाधारणकारणत्वं च कार्यतानवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमिति वदन्ति ।

यत्तु भूषणे उक्तम्—करणतृतीयाया अप्याश्रयो व्यापारश्चार्थ इति । तन्न । काष्ठादिकरणनिष्ठव्यापारस्य स्थाल्याद्यधिकरणनिष्ठव्यापारवद्धात्वर्थत्वावश्यकत्वेन पुनस्तृतीयार्थत्वकल्पनस्यानुचितत्वात् । न च प्रत्ययार्थत्वमेवास्तु मास्तु धात्वर्थत्वमिति वाच्यम् । प्रत्ययार्थत्वे काष्ठानि पचन्तीत्यादौ काष्ठानां धात्वर्थव्यापाराश्रयत्वाभावेन कर्तृत्वानापत्तेः ।

दिवः साधकतमस्य युगपत्कर्मसंज्ञाकरणसंज्ञाविधायकाद् दिवः कर्म चेत्यनुशासनादक्षैरक्षान्वा देविता दीव्यतीत्यादौ द्वितीया तृतीया च । अक्षकरणकदेवनकर्तेति बोधः । नन्वत्र परत्वात्कर्तृकर्मणोः कृतीति षष्ठ्याऽक्षाणां देवितेत्यस्यैवोचितत्वमिति चेन्न । कर्तृसाहचर्येण धात्वर्थाश्रयकर्मण्येव तत्प्रवृत्तेः । न चात्र परत्वात्तृतीयैव स्यादिति वाच्यम् । कार्यकालपक्षे कर्मणि द्वितीयेत्यत्र यदस्योपस्थानं तस्यानवकाशत्वाद्द्वितीयोपपत्तेः ।

प्रकृत्यादिशब्देभ्यः सर्वविभक्त्यर्थे तृतीयाविधायकात् 'प्रकृत्यादिभ्य उपसंख्यानम्' इत्यनुशासनात्प्रकृत्या चारुरित्यादौ तृतीया । स्वाश्रयाधिकरणयावत्कालवृत्तिचारुत्ववानिति बोधः । प्रकृतिर्धर्मविशेषः । प्रायेण याज्ञिक इत्यादौ प्रायशब्दस्यावच्छेदकावच्छिन्नत्वराहित्यविशिष्टबाहुल्य-

मर्थः। तृतीयायाः अवच्छिन्नत्वम्। तथा च किंचिन्न्यूनबाहुल्यावच्छिन्न-यज्ञविद्यावानिति बोधः। नाम्ना सुतीक्ष्ण इत्यादौ नामज्ञाप्यतीक्ष्णत्व-वानिति बोधः। सुरथो नाम राजेत्यत्र नामेति लुप्ततृतीयाकं प्रसिद्धार्थ-कमव्ययम्। तथा च सुरथ इति प्रसिद्धो राजेत्यर्थः। नाम्ना चन्द्रकले-त्यादौ नामभूतचन्द्रकलाशब्दाभिन्नेत्यर्थः। ननु सर्वत्राक्षिप्तक्रियाकरण-त्वात्तृतीयासिद्धौ व्यर्थमि(दमि)ति चेन्न। संवन्धत्वेन विवक्षायां षष्ठीवाधनार्थत्वेन सार्थक्यात्। अस्मिन्पक्षे प्रकृत्यादिभ्यः तृतीयायाः संवन्धोऽर्थः।

द्वयोर्गुणप्रधानभावेन गुणक्रियाद्रव्यैरन्वयबोधकसहशब्दप्रयोगे कचि-दप्रयोगे वाऽप्रधाने तृतीयाविधायकात् 'सहयुक्तेऽप्रधाने' इत्यनुशासना-त्पुत्रेण सहागतः पिता, पुत्रेण सह पिता स्थूलः, पुत्रेण सह पितुर्गौरि-त्यादावार्थान्वयरूपाप्रधानात्तृतीया। तत्प्रयोगं विनाऽपि वृद्धो यूनेत्यादौ बोध्यम्। सहार्थश्च समभिव्याहृतपदार्थसमानकालिकसमानदेशरूपं सा-हित्यं संवन्धस्तृतीयार्थः। तथा च पुत्रसंवन्ध्यागमनसमानकालिकागमन-वान्पितेति बोधः। पुत्रसंवन्धिस्थौल्यसमानकालिकस्थौल्यवान्पिता पुत्रसं-बन्धिगोस्वामित्वसमानकालिकगोस्वामित्ववान्पितेति यथाक्रमं बोधः।

वैयाकरणनव्यास्तु व्युत्पत्तिवादानुसारेण तृतीयार्थश्च क्रियासमभि-व्याहारे सहार्थबलात्प्रतीयमानतत्तक्रियाकर्तृत्वादिकमेव। तथा च पुत्र-कर्तृकागमनसमानकालिकागमनवान्पितेति बोधः। द्रव्यगुणसमभि-व्याहारे तत्तत्पदार्थसंवन्ध एव। एवं च पुत्रात्कर्तरि तृतीया सिद्धा। न च क्तेनाभिधानम्। इतरसमभिव्याहारं विनाऽपि प्रतीयमानस्वप्रकृत्यर्थ-क्रियाकर्तुरेव तेनाभिधानात्। एवं पुत्रेण सहागमनं देवदत्तस्येत्यादौ प्रतीयमानक्त्वप्रकृत्यर्थान्वयिनोः कर्तृकर्मणोरेव षष्ठी, न तत्प्रतीयमानतद-न्वयिनोरिति न दोषः। तथापि पुत्रेण स्थूल इत्याद्यर्थं सूत्रमित्याहुः। तन्मन्दम्। कर्तृत्वस्य संवन्धत्वेन विवक्षायां क्रियान्वयेऽपि सूत्रस्यावश्य-कत्वात्। संबन्धत्वेनाविवक्षायामप्यागत इति क्तप्रत्ययेन कर्तुरुक्तत्वात्तृ-तीयाऽप्राप्तौ क्रियायोगेऽपि तस्यावश्यकत्वात्। न चेतरसमभिव्याहारं विनेति पूर्वोक्तरीतिः साध्वी, संकोचे मानाभावात्। विनिगमनाविरहेण इतरसमभिव्याहारं विना प्रतीयमानस्वप्रकृत्यर्थक्रियाकर्तुरेव क्तेनाभिधा-नवत्, इतरसमभिव्याहारं विना प्रतीयमानक्रियाकर्तुरेव तृतीयेति वक्तुं शक्यम्। न च 'प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेन'

इत्यादौ समानकालिकत्वरूपसहार्थत्वाभावात्तृतीयानुपपत्तिरिति वाच्यम् । लक्ष्यानुरोधेन क्वचित् स्थूलकालघटितसमानकालीनत्वस्वीकारात् । नन्वेवं पूर्वमागतोऽयं न पुत्रेण सहेति निषेधानुपपत्तिः । पुत्रगमनाधिकरणस्थूलकालवृत्त्यागमनसंबन्धत्वेन साहित्याभावबाधादिति चेन्न । तत्र क्षणत्वेनैव कालस्य सहशब्दार्थेऽन्तर्भावनीयत्वात् । एवं यत्रैककालेऽपि विभिन्नस्थले भुञ्जानमधिकृत्य न पुत्रेण सह भुङ्क्ते इति प्रयोगः, तत्रैकशालारूपभोजनाधारोऽपि सहशब्दार्थान्तर्भूतः । किंचोक्तरीत्या पिता गतः पुत्रोऽपीत्यादौ पुत्रे तृतीयापत्तिः । पितुरागमनं पुत्रस्यापीत्यादौ षष्ठ्यनापत्तिः । अनेकक्लिष्टकल्पनायां फलाभावश्च । न च भाष्यानुरोधात्तथा कल्प्यते । भाष्यस्य पित्रा सह पुत्रेणौदनः पच्यते इत्येवंपरत्वात् ।

यदप्यप्रधानप्रत्याख्यानपरभाष्यमुपपदविभक्तेः कारकविभक्तिर्बलीयसीति यत्र कारकशब्दस्यान्तरङ्गपरतया व्याख्यानं हरदत्तादीनामन्तरङ्गमपि बाधित्वापवादत्वात्तृतीया स्यादित्यनेन दूषयाञ्चक्रुर्नव्याः तदपि न, अपवादो हि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते । अन्यथा तातङ्सर्वादेशो न स्यात् । क्रियान्वयित्वरूपकारकत्वमादाय शास्त्रव्यवहारादर्शनाच्च ।

'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यादौ 'पुत्रसंबन्धिभारवहनसमानकालिकगर्दभीकर्तृकभारवहनम्' इति बोधात्साहित्यबोधक एव सहशब्दः । केचित्तु विद्यमानतावाचिसहशब्दमाश्रित्य दशपुत्राणां विद्यमानत्वेऽपीति बोधमाहुः । तन्न । पुत्रेण सहेत्यत्रापि तथापत्तेः । विवरणे सप्तम्यर्थस्याशाब्दत्वापत्तेश्च ।

विकृतेनाङ्गेन यत्राङ्गिनो विकारो लक्ष्यते तत्र विकृताङ्गवाचकात्तृतीयाविधायकात् 'येनाङ्गविकारः' इत्यनुशासनादक्ष्णा काण इत्यादौ तृतीया । अक्षिसंबन्धिनाशवान्सचक्षुष्क इति बोधः । अक्षि काणमस्येत्यादौ तु अङ्गविकारो न त्वङ्गिविकार इति तृतीयाभावः ।

कंचित्प्रकारं प्राप्तस्य लक्ष्यस्य लक्षणवाचकात्तृतीयाविधायकात् 'इत्थंभूतलक्षणे' इत्यनुशासनाज्जटाभिस्तापस इत्यादौ तृतीया । लक्ष्यलक्षणभावः संबन्धस्तृतीयार्थः । जटाज्ञाप्यतापसत्वविशिष्ट इति बोधः ।

संपूर्वस्य जानातेः कर्मणि तृतीयाविधायकात्संज्ञोऽन्यतरस्यां कर्मणी-

त्यनुशासनात्पित्रा पितरं वा संजानीत इत्यादौ पाक्षिकी तृतीया। कर्मत्वं तृतीयार्थः। तथा च पितृकर्मकं ज्ञानमिति बोधः।

द्रव्यगुणक्रियासाधारणकारणरूपहेतौ निर्व्यापारकारणरूपे कालरूपे च हेतौ तृतीयाविधायकाद्धेताविंत्यनुशासनाद्दण्डेन घटः पुण्येन दृष्टो हरिः अध्ययनेन वसतीत्यादौ तृतीया। दण्डहेतुको घटः, पुण्यहेतुकं हरिदर्शनम्, अध्ययनहेतुको वास इति यथाक्रमं बोधः।

इति तृतीया।

## चतुर्थ्यर्थनिर्णयः।

कर्त्रा धात्वर्थक्रियाजन्यफलाश्रयेण संवद्धुमिष्यमाणस्य कारकस्य संप्रदानसंज्ञाविधायकात् 'कर्मणा यमभिप्रैति स संप्रदानम्' इत्यनुशासनाद्विप्राय गां ददातीत्यादौ विप्रादीनां संप्रदानसंज्ञायां सत्याम् 'संप्रदाने चतुर्थी' इति चतुर्थी।

**संप्रदानत्वं च-धात्वर्थक्रियाजन्यफलाश्रयसंबन्धित्वेन कर्त्रभिप्रेतत्वम् *। अखण्डोपाधिर्वा* संकेतविशेषसंबन्धेन तत्पदवत्त्वं वा*।**

धात्वर्थश्चान्योद्देशेन त्यागानुकूलो व्यापारः। एवं च विप्रोद्देश्यकः गोनिष्ठत्यागानुकूलो व्यापारो देवदत्तकर्तृक इति बोधः। एवं वृक्षायोदकं सिञ्चति, शत्रवेऽस्त्रं मुञ्चति, मित्राय दूतं प्रेषयतीत्यादौ वृक्षोद्देश्यकोदकनिष्ठक्रियानुकूला देवदत्तनिष्ठा क्रियेत्यादिबोधः। [ यदि तु दाधातुयोगे एवानेन संप्रदानत्वमित्याग्रहः, तदा युद्धाय संनह्यत इतिवत् 'तुमर्थाच्च भाववचनात्' इत्यनेन चतुर्थी।? ]

यत्तु शब्देन्दुशेखरे दाधात्वर्थश्च स्वत्वस्वस्वत्वनिवृत्त्युभयानुकूलो व्यापारः। तदेकदेशे स्वत्वे चतुर्थ्यर्थस्योद्देश्यस्य निरूपकतयान्वयः। एवं च विप्राभिन्नेच्छाविषयनिरूपितस्वत्वस्वस्वत्वनिवृत्त्युभयानुकूला क्रिया देवदत्तकर्तृकेति बोधः इत्युक्तं वैयाकरणनव्यैः। परस्वत्वे हेतुश्च त्याग एव वा। अत एव विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रमरणे पिण्डोद्देश्यपुत्रादिभिरेव तद्धनं गृह्यते नान्यैरिति व्यवहार इत्याद्युक्तम्। तन्न। अन्योद्देश्यकत्वविशिष्टत्यागस्य गुरुत्वेन प्रतिग्रहीतृनिष्ठप्रतिग्रहादेरेव तत्र स्वत्वजनकत्वात्। त्यागस्यैव स्वत्वजनकत्वे तु देवदत्तकर्तृकत्यागोत्तरं स्वत्वोत्पत्त्या प्रतिग्रहाभावेऽपि तत्पुत्रैर्ग्राह्यतापत्तिः।

न चेष्टापत्तिः अरण्यस्थदण्डादेरिव कस्यापि स्वत्वाभावेन सर्वेषां विनियुज्यत्वमिति सिद्धान्तभङ्गापत्तिः । भवद्भिरपि स्वत्वं च दानादिनाश्यं प्रतिग्रहादिजन्यमतिरिक्तपदार्थरूपमिति वदद्भिः प्रतिग्रहादेरेव स्वत्वजनकत्वस्योक्तत्वेन पूर्वापरविरोधस्य स्पष्टत्वाच्च ।

तत्संप्रदानं त्रिविधम्—अनिराकरणप्रेरणानुमतिभेदात् । यथाक्रमं देवतायाचकोपाध्यायरूपाणि । ननु यदग्नये च प्रजापतये च सायं जुहोति, सर्वैर्भूतैरुत्सृष्टजलमूर्जित(?)मित्यादाविव पशुना रुद्रं यजते इत्यादावपि त्यागविशेषरूपक्रियाया रुद्रादेरनिराकर्तृसंप्रदानतया चतुर्थी स्यादिति चेन्न । 'कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा' इति वार्तिकेन कर्मत्वार्थकतृतीयया संप्रदानार्थकद्वितीयया च पशुं रुद्राय ददातीत्यर्थेऽपि तस्य साधुत्वबोधनात् । एतेन गौरवितप्रीतिहेतुक्रिया यज्यर्थः । तदर्थतावच्छेदकं फलं प्रीतिः । तदाश्रयतया रुद्रस्य विवक्षितत्वात्कर्मसंज्ञैव नतु चतुर्थी त्यागात्मकतादृशक्रियायां निरुक्तानिराकर्तृसंप्रदानत्वे सत्यपि तदविवक्षणात् । प्रीतिभागितयोद्देश्यत्वरूपसंप्रदानत्वविवक्षायां च रुद्राय यजनमित्यपि प्रयोग इत्यादि तार्किकोक्तमपास्तम् । पशुकरणकरुद्रवृत्तिप्रीतिजनकक्रियेति बोधे तस्य साधुत्वोपपत्तावपि रुद्रोद्देश्यकं पशुकर्मकं दानमिति बोधे साधुत्वं न स्यात् । अनुशासनेनार्थविशेषपुरस्कारेण साधुत्वबोधनात् । अन्यथा गोण्यां व्युत्पादितस्य गोणीशब्दस्य गव्यपि साधुतापत्तेः । तस्मात्संप्रदानत्वविवक्षायां रुद्राय यजनमित्यस्य साधुत्वाभिधानमयुक्तमेव ।

यत्तु ननु कर्मग्रहणं किमर्थं यमभिप्रैतीत्येतावताप्युद्देश्यत्वलाभात् । 'क्रियाग्रहणं च कर्तव्यम्' इति वार्तिकं च न कार्यमित्यपरं च लाघवमिति चेन्न । दानक्रियाभिप्रेतगवा उपाध्याय अभिप्रेयत इति अन्तरङ्गत्वम् । गोरप्युद्देश्यतयान्तरङ्गत्वात्तस्यैव संज्ञा मा भूदित्येतदर्थं तत्सत्वात् । न च कर्मसंज्ञाऽनवकाशा, सामर्थ्यात्पर्यायापत्तेरित्यूचुर्वैयाकरणनव्याः । तन्न । पत्ये शेते इत्यकर्मकस्थले संप्रदानसंज्ञायाः सावकाशत्वेन निरवकाशया कर्मसंज्ञया बाधेन पर्यायाभावात् । यद्वा कर्मसंज्ञायाः क्रियाजन्यधात्वर्थफलाश्रयस्यैवेप्सिततमत्वात्तस्यैव कर्मसंज्ञायां तत्संबन्धितयोपस्थितस्य संप्रदानसंज्ञेति व्यवस्थोपपत्तिः । तस्मात्कर्मग्रहणं कर्मणश्चतुर्थीनिमित्तत्वप्रदर्शनेन कर्मश्रुत्यपेक्षया चतुर्थीश्रुतेर्बल-

वत्त्वबोधनार्थम्। तेन विक्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति दण्डप्रदानं न प्रतिपत्तिः। किं तु द्वितीयापेक्षया बलीयस्या चतुर्थीश्रुत्या मैत्रावरुणसंस्कारकमिति मीमांसकोद्घोषः संगच्छते।

धात्वर्थक्रियानवच्छेदकधात्वर्थक्रियाजन्यफलभागित्वेनोद्देश्यः संप्रदानमित्यर्थकात् 'क्रियया यमभिप्रैति स संप्रदानम्' इति वार्तिकात् 'पत्ये शेते' इत्यादौ संप्रदानत्वे संप्रदाने चतुर्थीति पतिसंप्रदानकं पत्नीकर्तृकं शयनमिति बोधः। भाष्यमतेऽध्याहृतारम्भणक्रियाकर्मत्वं शयनस्येति वार्तिकप्रत्याख्यानात्कर्मणा यमभिप्रैति स संप्रदानमित्यनेनैव संप्रदानत्वम्। एवं च संप्रदानस्य चरितार्थत्वात्सामर्थ्यात्पर्यायापत्तिरिति पूर्वोक्तमपास्तम्। तथा च पतिसंप्रदानकपत्नीकर्तृकशयनकर्मकं पत्नीकर्तृकमारम्भणमिति बोधः। तथा च हरिः—

संदर्शनं प्रार्थनायां व्यवसाये त्वनन्तरा।
व्यवसायस्तथाऽऽरम्भे साधनत्वाय कल्पते॥
पूर्वस्मिन्या क्रिया सैव परस्मिन्साधनं मता।

अस्यार्थः—

संदर्शनं फलविषयः संकल्पः। तत्प्रार्थनायां फलोपायविषयेऽभिलाषे साधनं व्यवसायः क्रियाविशेषस्य फलसाधनत्वेन निश्चयः। तत्रानन्तरा प्रार्थना साधनम्, अभिलाषे सति निश्चयकरणात्। व्यवसायश्चारम्भे मानस्यां प्रवृत्तौ साधनं तेनाप्यमानत्वेन शयनस्य प्रकृतक्रियाकर्मत्वं, पिण्डीमित्यादौ आक्षिप्तक्रियाकर्मत्ववत्। क्रियार्थोपपदस्येति सूत्रस्वरसाच्च। कटं करोतीत्यादौ तु संदर्शनादयो धात्वर्थाद्भेदेन विवक्ष्यन्ते इति न दोषः।

रुच्यर्थानां धातूनां योगे रुचिविषयीभूतद्रव्यजन्यप्रीतिमानर्थोऽपि संप्रदानमित्यर्थकात् 'रुच्यर्थानां प्रीयमाणः' इत्यनुशासनात्, हरये रोचते भक्तिरित्यादौ संप्रदानसंज्ञा। समवायसंबन्धेन हर्याश्रिता भक्तिविषया प्रीतिस्तदनुकूलो भक्तिनिष्ठो व्यापार इति बोधः। षष्ठ्यपवादत्वादाश्रितत्वरूपः संबन्धः चतुर्थ्यर्थः। विषयतारूपफलतावच्छेदकसंबन्धेन प्रीतिसमानाधिकरणो व्यापारो रुचेरर्थः। तथा चाकर्मकोऽयम्। एवं च 'प्रीञ् तर्पणे' इति क्र्यादेश्चुरादेर्वाभिलषतेश्चयोगे न, तयोः सकर्मकत्वेन रुच्यर्थत्वाभावात्। तथा च भक्तिः हरिं प्रीणयति। हरिः भक्तिं अभिलषतीत्यादयः प्रयोगाः। अत एवान्यकर्तृकोऽभिलाषो रुचिः

रिति वृद्धाः । तस्यार्थः—अभिलष्यतिकर्ता हरिः तदपेक्षयाऽन्यः भक्तिरूपस्तत्कर्तृकोऽभिलाषो प्रीत्यनुकूलव्यापारो रुचिरित्यर्थः । विषयकर्तृकोऽभिलाष इति फलितोऽर्थः । आदित्यो रोचते इत्यत्र न प्रीतिवचनम् । प्रीयमाण इति विशेषणाद्व्याख्यानाद्वा दीप्त्यर्थस्याग्रहणात् । यत्तु नारदाय रोचते कलह इति नारदादेर्न संप्रदानता किं तु रुच्यर्थानामिति सूत्रेण संबन्धमात्रे चतुर्थीति जयरामभवानन्दप्रभृतितार्किकैरुक्तं तत्तु सूत्रार्थाज्ञानात् । नह्यनेन चतुर्थी विधीयते, अपि तु संप्रदानसंज्ञेति दिक् ।

श्लाघह्नुङ्स्थाशपां धातूनां योगे बोधयितुमिष्टस्य संप्रदानसंज्ञाविधायकात् 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इत्यनुशासनादेवदत्ताय श्लाघते ह्नुते तिष्ठते शपते वेत्यत्र संप्रदानसंज्ञायां संप्रदाने चतुर्थीति चतुर्थी । तत्र ज्ञीप्स्यमानपदेन यस्मै आख्यायते स ज्ञीप्स्यमानः । अथवा यः आख्यायते स ज्ञीप्स्यमान इति व्याख्याभेदः । तत्राद्ये, शेषत्वात्षष्ठ्यां प्राप्तायां ................................................
..................... तथा चात्मगुणबलप्रतिपादनकर्तृकं परकर्मकं वा(?)देवदत्तसंबन्धिश्लाघ्यत्वकथनमिति बोधः । तथा च भट्टिः—श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिप इति । आत्मानं परस्त्रीभ्यः श्लाघ्यं कथयन्नित्यर्थः । गोपी स्मरात् कृष्णाय श्लाघते इत्यत्र गोपीकर्तृका स्मरहेतुका कृष्णवृत्तिबोधविषया स्तुतिरिति बोधः । द्वितीये कृष्णं स्तौतीत्यर्थः । एवं ह्नुतिविशिष्टं कृष्णं, स्थित्या शपथेन च कृष्णं बोधयतीति सर्वत्र बोधः ।

णिजन्तधृङवस्थान इति धातोर्योगे तदर्थावस्थित्याश्रयसंबन्धि संप्रदानमित्यर्थकेन 'धारेरुत्तमर्णः' इत्यनुशासनेन भक्ताय धारयति मोक्षं हरिरित्यादौ संप्रदानत्वे चतुर्थी । संबन्धोऽत्र विभक्त्यर्थः । हरिकर्तृको भक्तसंप्रदानको मोक्षकर्मकोऽवस्थित्यनुकूलो व्यापार इति बोधः । यदा तु भक्तस्य मोक्षेऽन्वयस्तदा भक्तस्येति षष्ठ्येव । एवं देवदत्तस्य शतं धारयतीत्यपि साध्वेव ।

इच्छानुकूलमनःसंयोगरूपव्यापारवाचक–'स्पृह ईप्सायाम्' इति चौरादिकयोगे 'स्पृहेरीप्सितः' इत्यनुशासनेनातिशयेच्छाविषयस्य तत्त्वेनाविवक्षायां संप्रदानसंज्ञाविधानात्पुष्पेभ्यः स्पृहयतीत्यत्र चतुर्थी । षष्ठ्यां

प्राप्तायां वचनम् । एकाश्रिता पुष्पसंवन्धीच्छानुकूला क्रियेति बोधः । यदा त्वीप्सिततमत्वेन विवक्षा तदा पुष्पाणि स्पृहयतीति द्वितीयैव । यदा त्वीप्सितस्येप्सिततमस्य वा शेषत्वविवक्षा तदा षष्ठ्येव । अत एव परस्परेण स्पृहणीयशोभमिति कर्मण्यनीयर्, 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इत्यादयः प्रयोगाः ।

मञ्जूषायां तु स्पृहयतिरिच्छामात्रवाची इच्छानुकूलमनःसंयोगादिव्यापारवाची च । फलावच्छिन्नेच्छावाची च वा । आद्ये स्पृहेरीप्सित इति संप्रदानत्वम् । तत्र हीप्सितत्वं धात्वर्थव्यापारजन्यफलाश्रयत्वम् । न तु धात्वर्थत्वाग्रहः फलस्य । कर्मसंज्ञा तु धात्वर्थफलाश्रयस्येत्युक्तम् । शेषे षष्ठ्यपवाद एतत्संप्रदानविभक्तिः । पुष्पसंप्रदानिकेच्छेति बोधः । अन्त्ये कर्मत्वं पुष्पाणि स्पृहयतीति । संप्रदानस्यापि तत्त्वेनाविवक्षायां षष्ठ्येवेत्यु क्तम् । तत्र सकलग्रन्थसंमतमद्युक्तरीत्यैव प्रयोगनिर्वाहे सर्वधातूनां फलावच्छिन्नव्यापारवाचित्वस्य प्रसिद्धत्वेन तद्विहाय प्रवलप्रमाणाभावे स्वातन्त्र्येण यत्किंचिदर्थकल्पनस्यानुचितत्वात् ।

यदपि शब्देन्दुशेखरे—'यत्तु ईप्सितमात्रे इयं संज्ञा प्रकर्षविवक्षायां तु परत्वात्कर्मत्वम् । एवं चेप्सितमात्रे ईप्सिततमे वा शेषत्वेन विवक्षिते षष्ठ्येव । तत्र शेषत्वेन विवक्षितत्वातिरिक्तस्येप्सितत्वमात्रस्य दुर्वचत्वात् प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्यफलाश्रयत्वस्यैवात्र सत्वेन वारयतिवैलक्षण्यात्, इत्युक्तं, तदप्यसमञ्जसम् । तथाहि पुष्पेभ्यः स्पृहयतीत्यादौ पुष्पवृत्तीच्छानुकूलैकदेवदत्ताश्रयिकात्ममनःसंयोगरूपक्रियेत्यर्थविवक्षायां संप्रदानत्वम् । यदा त्वन्त्येच्छानुकूलेति विवक्षा तदा षष्ठी । एवमेव तण्डुलं पचतीत्यादौ कर्मादीनामविवक्षा, तथा च तत्र फलतावच्छेदकसंवन्धस्य वृत्तित्वादेरेव विशेषरूपस्य सामान्यरूपेण विवक्षायां षष्ठी तण्डुलस्य पचतीति । एवं च स्पृहेरीप्सित इत्यनेन फलतावच्छेदकसंवन्धेनेप्सितस्य संप्रदानत्वं न तु तस्यैव रूपान्तरेण सामान्येन संबन्धत्वेनेत्यर्थः । एवं च शेषत्वेन विवक्षातिरिक्तस्येप्सितत्वमात्रस्य दुर्वचत्वादित्यपास्तम् । प्रकृतेत्यादिग्रन्थस्तु प्रकृतेऽनुपयोग इत्युक्त इति दिक्(?)।

विषयतया क्रुधद्रुहेर्ष्यासूयार्थधातूनां योगे तन्मूलभूतकोपसंबन्धिनः संप्रदानसंज्ञाविधायकात् 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इत्यनुशासनात् हरये क्रुध्यतीर्ष्यत्यसूयतीत्यादौ संप्रदानत्वे चतुर्थी । तत्राद्ययोर-

कर्मकत्वात्षष्ठ्यां प्राप्तायामितरयोः कर्मसंज्ञायां च वचनम्। ननु कुप क्रोधे इत्यनुशासनात्कोपस्यैव क्रोधपदार्थत्वात्कथं क्रोधस्य कोपमूलत्वमिति चेत्। वाक्चक्षुरादिविकारानुमेयप्ररूढकोपस्यैवात्र क्रोधपदार्थत्वात्। दुःखजनकक्रियारूपापकारजनकश्चित्तविकारो द्रुहेः। एवं च योऽस्मान्द्वेष्टीत्यादौ त्वनभिनन्दनं द्विषेरर्थः। तच्च बलवद्दुःखसाधनताज्ञानजन्योऽप्रीतिजनकश्चित्तवृत्तिविशेषः। एतेन क्रोधो द्वेष इति शब्दशक्तिकायां यदुक्तं तदपास्तम्। अत एव चित्तदोषार्थानामिति नोक्तम्। यदा त्वेषां न कोपमूलत्वं तदा देवदत्तस्य क्रुध्यति द्रुह्यति देवदत्तमीर्ष्यत्यसूयतीत्यपि साध्वेव। कुप्यति कस्मैचिदित्यत्र क्रियया यमभिप्रैतीत्यनेन संप्रदानत्वम्। हरिसंबन्धी क्रोधः। तत्संबन्ध्यपकारजनकेच्छेति बोधः। हरिकर्मकोत्कर्षविषयो द्वेषः। तन्निष्ठगुणविषये दोषाविष्करणमिति च बोधः।

प्रश्नविषयशुभाशुभपर्यालोचनार्थराधीक्ष्योर्योगे प्रश्नविषयसंबन्धी संप्रदानमित्यर्थकेन 'राधीक्ष्योर्यस्य विप्रश्नः' इत्यनेनानुशासनेन संप्रदानसंज्ञाविधानात्कृष्णाय राध्यतीक्षते चेत्यत्र चतुर्थी। संबन्धश्च चतुर्थ्यर्थः। कृष्णसंबन्धिप्रश्नविषयशुभाशुभपर्यालोचनानुकूला क्रियेति बोधः। शुभाशुभकर्मणो धात्वर्थेनोपसंग्रहादकर्मकावेतौ। अत एव च राधोऽकर्मकादिति गणसूत्रम्।

प्रवर्तनापूर्वकाभ्युपगमार्थकप्रत्याङ्पूर्वकश्रृणोतेर्योगे पूर्वप्रवर्तनाश्रयस्य संप्रदानसंज्ञाविधायकात् 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इत्यनुशासनाद्विप्राय गां प्रतिश्रृणोत्याश्रृणोतीत्यत्र चतुर्थी। विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वात्कर्तृत्वाद्वा तृतीयाप्राप्तौ वचनम्। चतुर्थ्यर्थः आश्रयत्वं, प्रवर्तनायाश्च जन्यतासंबन्धेनाश्रयेऽन्वयः(?)। तथा च विप्रनिष्ठप्रवर्तनाजन्यो देवदत्तनिष्ठोऽभ्युपगम इति बोधः। यत्तु विवक्षान्तरे देवदत्तो गां प्रतिश्रावयतीति भवत्येवेति हरदत्तः, तच्चिन्त्यम्। देवदत्तो रोचयति मोदकमित्यपि प्रयोगापत्तेः। नचेष्टापत्तिः। रुच्यर्थानामिति सूत्रे हेतुसंज्ञापवादिकेयमिति स्वग्रन्थेन हेलाराजग्रन्थेन च विरोधात्। तस्माद्धेतुसंज्ञायाः बाधादत्र न णिजुत्पत्तिरिति भावः।

शंसितृप्रोत्साहनार्थकानुप्रतिपूर्वकगृणातेर्योगे पूर्वशंसनरूपव्यापाराश्रयस्य 'अनुप्रतिगृणश्च' इत्यनुशासनेन संप्रदानसंज्ञाविधानाद्धोत्रेऽनुगृणाति प्रतिगृणातीत्यत्र चतुर्थी। शंसितुः प्रोत्साहने कर्मतयाऽन्वयः।

होतुश्च शंसितरि अभेदान्वयः । तथा च होत्रभिन्नशंसितृकर्मकहर्षानुकूलो व्यापारः अध्वर्युकर्तृक इति बोधः ।

नियतकालं वेतनकरणकस्वीकाररूपे परिक्रयणे साधकतमस्य पाक्षिकसंप्रदानसंज्ञाविधायकेन 'परिक्रयणे संप्रदानमन्यतरस्याम्' इत्यनुशासनेन शतेन शताय वा परिक्रीत इत्यत्र संप्रदानत्वम् । तथा च शतनिष्ठदानरूपव्यापारसाध्यदेवदत्तकर्तृकस्वीकारकर्मीभूत इति बोधः ।

क्रियाफलकक्रियोपपदकाप्रयुज्यमानतुमुनः कर्मणि चतुर्थीविधायकेन 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इत्यनुशासनेन फलेभ्यो यातीत्यादौ चतुर्थी । फलकर्मकाहरणफलकं यानमिति बोधः । प्रविश पिण्डीमित्यादौ भक्षणार्थप्रवेशनक्रियोपपदत्वेऽपि पिण्डयास्तुमुन्नन्तकर्मत्वाभावान्न चतुर्थी । यदा तु भोक्तुमिति तुमुन्नन्ताध्याहारस्तदा चतुर्थी भवत्येव । ननु मशकेभ्यो धूम इत्यत्रेवात्रापि स्वकर्मकाहरणनिष्ठजन्यतानिरूपितजनकतासंबन्धेन फलस्य यानेऽन्वयसंभवात्तादर्थ्यचतुर्थ्यैवोपपत्तौ किं सूत्रेणेति चेत् । फलनिष्ठप्रकारतानिरूपिताहरणनिष्ठविशेष्यतासमानाधिकरणप्रकारतानिरूपितविशेष्यताशालि यानमिति बोधे तस्यावश्यकत्वात् । कर्मत्वार्थिकेयम् ।

भाववचनाश्चेति सूत्रविहिततुमुन्समानार्थककृदन्तप्रातिपदिकात्प्रथमार्थे चतुर्थीविधायकेन 'तुमर्थाच्च भाववचनात्' इत्यनुशासनेन यागाय यातीत्यादौ चतुर्थी । न च तादर्थ्य इत्यनेन गतार्थता । तुमर्थघञैव तादर्थ्यस्योक्तत्वेनोक्तार्थानामप्रयोग इत्यप्राप्तौ विधानसार्थक्यात् । यष्टुं यातीति बोधः ।

उपकार्योपकारकादिरूपतादर्थ्यविवक्षायां षष्ठ्यपवादोपकार्यादिवाचकाच्चतुर्थीविधायकेन तादर्थ्ये चतुर्थी वाच्येति वार्तिकेन यूपाय दारु ब्राह्मणाय दधीत्यादौ चतुर्थी । तस्मा उपकार्यायेदं तदर्थं तस्य भावः । ब्राह्मणादित्वात्ष्यञ् । उपकार्योपकारकत्वरूपसंबन्धः ष्यञर्थः । कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तात् । यूपनिष्ठजन्यतानिरूपितजनकताश्रयं दार्विति बोधः । ब्राह्मणकर्तृकभोजनोपकारकं दधीति बोधः । एवं मशकेभ्यो धूम इत्यादावपि मशकनिवृत्त्युपकारको धूम इति बोधः ।

यत्तु व्युत्पत्तिवादे—यूपाय दार्वित्यादौ न संप्रदानचतुर्थी । अपि

तु तादर्थ्ये इतिसूत्रेण सा । तादर्थ्यं स एवार्थः प्रयोजनमस्य तत्त्वम् । समभिव्याहृतपदार्थतादर्थ्यविवक्षायां तद्वाचकाच्चतुर्थीति तदर्थः । प्रयोजनं चात्र न जन्यत्वम् । दुःखादेः पापादिजन्यतया दुःखाय पापमित्यापत्तेः । नापि जन्यतयेच्छाविषयत्वम् । स्वर्गादेः पुण्यादिजन्यत्वेनेच्छाविषयत्वात्स्वर्गाय पुण्यमित्यापत्तेः । न चेष्टापत्तिः । तथासति पक्तुं व्रजतीत्यर्थे पाकाय व्रजतीति निर्वाहाय तुमर्थेति सूत्रप्रणयनवैयर्थ्यात् । पाकादेर्निरुक्तव्रजनाद्यर्थतयैव तद्वाचकाच्चतुर्थ्युपपत्तेः । अपि तु समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वं तत्प्रयोजनत्वम् । तत्प्रयोजनकत्वरूपतादर्थ्यं च तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वम् । दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्तया यूपार्थत्वमिति तद्विवक्षया यूपपदाच्चतुर्थी । इच्छाधीनेच्छाविषयव्यापाराश्रयत्वं चतुर्थ्यर्थः । प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयतयाऽन्वयः । एवं रन्धनाय स्थालीत्यादावूह्यम् । तादृशव्यापारस्तण्डुलधारणादिः । पुण्यादेः स्वर्गेच्छाधीनेच्छाविषयव्यापारानाश्रयतया न स्वर्गाय पुण्यमित्यादयः प्रयोगाः । व्रजनादेः पाकानुकूलव्यापारानाश्रयतया न पाकाय व्रजतीत्यादावनेन चतुर्थीति तुमर्थाच्चेति सूत्रमिति—गदाधरभट्टाचार्यैरुक्तं तद्व्याकरणाज्ञानमूलकम् । तथाहि आदौ वार्तिके सूत्रत्वभ्रमः । दुःखाय पापं, स्वर्गाय पुण्यमित्यादिप्रयोगाणां सूत्रवार्तिकभाष्यसंमतानामसाधुत्वभ्रमः । तथा क्रियार्थक्रियोपपदविहिततुमर्थघञैव तादर्थ्यस्योक्तत्वेन तादर्थ्ये चतुर्थ्यप्राप्तौ तुमर्थाच्चेति सूत्रस्य सार्थक्ये स्पष्टेऽपि तद्व्यर्थताभ्रमः । चैत्राश्रिततक्षणादिरूपव्यापारजन्यफलाश्रयस्य दारुणो व्यापाराश्रयत्वभ्रमः । यदि फलेऽपि व्यापारपदवाच्यत्वं तर्हि यूपाय दारु तक्ष्णोति चैत्र इत्यादाविव स्वर्गाय पुण्यं करोति चैत्र इत्यादावपि फलरूपव्यापाराश्रयस्य सर्वसंमतत्वात्साधुत्वापत्त्या भवदुक्तमसाधुत्वं न स्यात् । किं च भवन्मतेऽध्ययनाय वसतीत्यादीनामसाधुतापत्तेः । वसनादेरध्ययनानुकूलव्यापारानाश्रयतया भवदुक्ततादर्थ्याभावेन चतुर्थ्यप्राप्तेः । अध्ययनं कर्तुं वसतीत्यर्थे क्रियार्थोपपदेति चतुर्थीति चेत्तर्हि यागाय यातीत्यत्रापि यागं कर्तुं यातीत्यर्थे चतुर्थ्युपपत्तौ सूत्रवैयर्थ्यं तदवस्थमेवेति दिक् ।

नौकाकान्नशुकशृगालभिन्ने तिरस्कारस्य स्पष्टं व्यञ्जके दैवादिकस्य मन्यतेः कर्मणि तिरस्कारे विभाषाचतुर्थीविधायकेन 'मन्यकर्मण्यनादरे

विभाषाऽप्राणिषु' इत्यनेन, न त्वां तृणं तृणाय वा मन्य इत्यादौ पाक्षिकी चतुर्थी । अत्रोत्कृष्टस्यापकृष्टेनाप्युपमानाभावरूपः तिरस्कारः । एवं च त्वद्विशेष्यकतृणसदृशप्रकारकमद्वृत्तिज्ञानाभाव इति बोधः । तृणाय मत्वा रघुनन्दनोऽपीत्यादावपकृष्टेनोपमारूपतिरस्कारः । तृणमिव मत्वेत्यर्थः ।

गन्त्राऽसंप्राप्ते चेष्टारूपगत्यर्थकर्मणि द्वितीयापवादद्वितीयाचतुर्थीविधायकेन "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इत्यनेनानुशासनेन ग्रामं ग्रामाय वा यातीत्यादौ द्वितीयाचतुर्थ्यौ । स्त्रियं गच्छतीत्यत्र न, असंप्राप्तत्वविवक्षायां त्विष्टापत्तिः । नयतेरगत्यर्थत्वादजां नयतीत्यत्रापि न । ननु कर्मणि द्वितीयाविधानं व्यर्थं मन्यकर्मण्यनादरे इत्यस्यानन्तरं गत्यर्थकर्मणीति पठित्वा चतुर्थीविकल्पविधानेनापि पक्षे द्वितीयासिद्धेः । न च ग्रामं गन्तेत्यादौ कृद्योगषष्ठीबाधनार्थं तदिति वाच्यम् । सूत्रप्रत्याख्यानपरेण भाष्येण तत्र षष्ठ्या एव साधुत्वबोधनात् । तथाहि—अध्याहृतसंदर्शनादिक्रियाभिराप्यमानत्वात्कर्मणा गमनेनाभिप्रेयमाणस्य संप्रदानत्वाच्चतुर्थी । यदा तु अनध्याहारस्तदा गमनस्याकर्मत्वात् ग्रामस्य कर्मद्वितीया भवति । एवं हि वदता कृद्योगे षष्ठ्येवेष्यते । अत एव ग्रामं गमीति अकेनोरितिसूत्रे भाष्ये उक्तम् । एवं च भाष्यमते ग्रामोद्देश्यकोत्तरदेशसंयोगानुकूलव्यापारविषयकं संदर्शनादीति बोधः । सूत्रमते तु ग्रामकर्मकं यानमिति बोधः ।

उत्पत्तिरूपक्लृप्त्यर्थवाचकधातुयोगे कार्यकारणयोर्भेदविवक्षायां कारणस्य कार्यात्मना परिणामविवक्षायां कार्यवाचकात्षष्ठ्यपवादचतुर्थीविधायकेन 'क्लृपिसंपद्यमाने च' इत्यनेन भक्तिर्ज्ञानाय कल्पते संपद्यते जायते वेत्यत्र चतुर्थी । भक्तिकर्तृका ज्ञानसंबन्धिन्युत्पत्तिरिति बोधः । अभेदे तु प्रथमैव भक्तिर्ज्ञानमिति । हेतुत्वेन विवक्षायां तु जनिकर्तुरित्यपादानत्वात्पञ्चमी । भक्तेर्ज्ञानमिति । न च तादर्थ्यचतुर्थ्या गतार्थं परिणामत्वेन बोधस्य विवक्षितत्वात् । भक्तिर्ज्ञानात्मना परिणमत इत्यत्र त्वात्मशब्दस्तद्वृत्तिधर्मपरः । ज्ञानत्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेत्यर्थः । एवं च विकारवाचकाभावान्न चतुर्थी ।

यत्तु शब्देन्दुशेखरे प्रथमापवादोऽत्र क्लृपिसंपद्यमाने चेत्यनेन विकारवाचकाच्चतुर्थी विकारे च प्रकृतिरूपारोपः भक्तिरूपज्ञानकर्तृकोत्पत्तिरित्यर्थः । प्रकृतिविकृत्योर्भेदविवक्षायां तु प्रकृतिविकृतिभावाप्रतीतेर्जनि-

कर्तुरित्यपादानत्वेन भक्तिपदात्पञ्चमी । भक्तेर्ज्ञानं कल्पते इति ज्ञानस्य कर्तृत्वेन कारकविभक्तेर्बलवत्त्वेन च ततः प्रथमेति कैयटे स्पष्टमित्याद्युक्तम् । तत्परस्परविरोधादसङ्गतमिति सुधीभिरूह्यम् ।

प्राणिनां शुभाशुभसूचकभूतविकाररूपोत्पातज्ञाप्येऽर्थे वर्तमानात्तत्संबन्धबोधकषष्ठ्यपवादचतुर्थीविधायक-' उत्पातेन ज्ञापिते च ' इत्यनुशासनेन वाताय कपिला विद्युदित्यादौ चतुर्थी । वातज्ञापिका कपिला विद्युदिति बोधः ।

इष्टसाधनरूपार्थहितशब्दयोगे 'तस्मै हितम्' 'चतुर्थी तदर्थार्थबलिहितसुख—' इत्यादिज्ञापकसिद्धेन ' हितयोगे— ' इत्यनुशासनेन ब्राह्मणाय हितमित्यादौ षष्ठ्यपवादभूता चतुर्थी । विप्रसंबन्धीष्टसाधनमिति बोधः । एवं सुखयोगेऽपि ब्राह्मणाय सुखमित्यादौ ।

' नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ' इत्यनेन षष्ठ्यपवादचतुर्थीविधानाद्धरये नम इत्यादौ चतुर्थी । हर्यवधिकस्वनिकृष्टत्वबोधनानुकूलो व्यापार इति बोधः ।

एषोऽर्घ्यः शिवाय नम इत्यादौ त्यागो नमःशब्दार्थः । शिवोद्देश्यकत्यागविषयोऽर्घ्य इति बोधः । प्रजाभ्यः स्वस्तीत्यादौ स्वस्तिशब्दो मङ्गलार्थः । प्रजासंबन्धि मङ्गलमिति बोधः । स्वस्त्यस्तु गोभ्य इत्यादौ ' चतुर्थी चाशिषि' इति परामपि पाक्षिकषष्ठीं बाधित्वा पुनर्विधानार्थकचकाराच्चतुर्थ्येव । आशंसाविषयगोसंबन्धिमङ्गलकर्तृकं भवनमिति बोधः । अग्नये स्वाहा स्वधा वषट् इत्यादावग्न्युद्देश्यकस्त्याग इति बोधः। स्वाहादीनां त्यागार्थकत्वात् । अलमितिपर्यास्यर्थग्रहणं न भूषणार्थस्य, व्याख्यानात् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । दैत्यमारणादिसंबन्धिसामर्थ्यवान् इति बोधः । ' स एषां ग्रामणीः ' इत्यादिनिर्देशात्प्रभ्वादियोगे षष्ठ्यपि साधुः । ननु नमस्करोतिदेवानितिवदुपपदविभक्तेः कारकविभक्तिर्बलीयसीत्यनेन नमस्करोति देवेभ्यः, रावणाय नमस्कुर्यादिति भट्टिप्रयोगेऽपि द्वितीया स्यादिति चेन्न, देवान्प्रसादयितुमित्यर्थविवक्षायां क्रियार्थोपपदस्येत्यादिना चतुर्थी । कर्मणः शेषत्वविवक्षायामनेन चतुर्थी । यत्तु मञ्जूषायामुद्देश्यस्य संबन्धत्वेन विवक्षायां षष्ठ्यपीत्युक्तं, तदसत् , नमःस्वस्तीत्यस्य षष्ठ्यपवादत्वात् ॥

इति चतुर्थी ।

---

पञ्चम्यर्थनिर्णयः।

स्वाभाविकबुद्धिकल्पितान्यतरसंयोगपूर्वकविभागाश्रयत्वे सति तद्विभागजनकतत्क्रियानाश्रयत्वरूपस्य तत्क्रियायां ध्रुवस्य 'ध्रुवमपायेऽपादानम्' इत्यनुशासनेनापादानसंज्ञाविधानाद्वृक्षात्पर्णं पतति, धावतोऽश्वात्पतति कुड्यात्पततोऽश्वात्पततीत्यादौ पर्णाश्वकुड्याश्वादीनां निरुक्तध्रुवत्वसत्त्वादपादानत्वे सति पञ्चमी। वृक्षापादानिका पर्णकर्तृकाधोदेशसंयोगानुकूला क्रियेति बोधः। एवं च वृक्षस्थे एव पर्णे भूमिसंलग्नेऽधोदेशसंयोगानुकूलक्रियासत्त्वेऽपि विभागानाश्रयत्वान्न वृक्षस्यापादानत्वम्। धावनकर्त्रभिन्नाश्वापादानिका देवदत्तकर्तृका पतनक्रियेति बोधः। अत्राश्वस्य धावनक्रियाश्रयत्वेऽपि विभागजनकतया तत्क्रियानाश्रयत्वादपादानत्वम्। कुड्यापादानकपातकर्त्रभिन्नाश्वापादानिका देवदत्तकर्तृका पातक्रियेति बोधः। अत्राश्रयभेदात्क्रियाभेदं परिकल्प्याश्वस्य पातक्रियाश्रयत्वेऽपि देवदत्तकर्तृकपातक्रियानाश्रयत्वादश्वस्यापादानत्वम्। परस्परस्मान्मेषावपसरतः इत्यत्रान्यतरमेषापादानिकान्यतरमेषकर्तृकापसरणक्रियेति बोधः। एवं वृक्षात्स्पन्दते राज्याच्चलित इत्यादीनामपि साधुत्वम्। स्पन्दतेरविभागार्थत्वे तु वृक्षे स्पन्दत इति प्रयोगः। वृक्षं त्यजतीत्यादौ तु कर्मसंज्ञया बाधान्नापादानत्वम्।

**अपादानत्वं चाखण्डोपाधिः, ध्रुवेत्यादिविहितसंज्ञावत्त्वं वा।**

नैयायिकास्तु—

**अपादानत्वं स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम्।**

एवं च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकतन्निष्ठविभागजनकपतनाश्रयं पर्णमित्यन्वयधीः। वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकपतनाश्रयः पर्णमित्यन्वयधीर्वा। अत्र विभागो भेदश्च पञ्चम्यर्थः। तत्र धात्वर्थतावच्छेदकत्वेन विभागो विशेष्यः। तेन वृक्षं त्यजति खग इत्यादौ वृक्षस्य नापादानत्वमिति वदन्ति। तन्मते वृक्षाद्विभजत इत्यादौ बोधा(वृ ? नुपप)त्तिप्रसङ्गः। वृक्षं त्यजतीत्यस्य परया कर्मसंज्ञया बाधादेवोपपत्तौ तदर्थं विभागे धात्वर्थतानवच्छेदकत्वरूपविशेषणवैयर्थ्यं च।

## तच्च त्रिविधं–निर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियं चेति।

साक्षाद्धातुना गतिनिर्देशे आद्यम्। यथाऽश्वात्पततीति। यत्र धात्वन्तरा (र्थाङ्गं? र्थगतिविशिष्टं) स्वार्थं धातुराह तदुपात्तविषयम्। यथा–वलाहकाद्विद्योतते विद्युत् (विस्फूरसङ्गे ? निःसरणपूर्वके) विद्योतने द्युतिर्वर्तते। अपेक्षितक्रियं तु तत् यत्र प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति कुतो भवानिति पाटलिपुत्रादिति चोत्तरयति।

जुगुप्साविरामप्रमादार्थानामुपसंख्यानमित्यनुशासनेनैतदर्थकानां धातूनां कारकस्य जुगुप्स्यमानार्थकस्यापादानसंज्ञाविधानादधर्माज्जुगुप्सते विरमति प्रमाद्यति चेत्यत्र पञ्चमी। अत्र पञ्चम्या द्वेषोऽर्थः। तत्र प्रकृत्यर्थस्य विषयत्वेन तस्य निवृत्तिरूपधात्वर्थे जन्यत्वेनान्वयः। तथा च पापगोचरद्वेषजन्यनिवृत्तिमानिति बोधः। विषयत्वं पञ्चम्यर्थः। अधर्मविषयकनिवृत्तिमानिति च। गर्हापूर्वकनिवृत्तिर्गुपधातोरर्थः। विषयत्वं सुपोऽर्थः। तच्च गर्हानिवृत्त्योः क्रमेणान्वितम्। तथा च पापविषयकगर्हाप्रयुक्तपापगोचरनिवृत्तिमानिति बोधः। अनिष्टसाधनतारूपनिन्दा वा जुगुप्सतेरर्थः। विषयत्वं सुपोऽर्थः। तथा च पापविषयकानिष्टसाधनतारूपा निन्देत्यर्थः। विषयता पञ्चम्यर्थः। करणानन्तरमकरणं विरामार्थः। आख्यातार्थ आश्रयत्वं, पञ्चम्यर्थस्य कृतिद्वारकोऽन्वयः। तथा चाधर्मविषयककृत्यनन्तरकालीनाधर्मविषयककृत्यभावाश्रयः। अनवधानं प्रमादार्थः अधर्मविषयकानवधानाश्रयः। एवं यथासंभवं बोधं वदन्ति। भाष्यरीत्या तु अधर्मापादानिका निन्दापूर्विका निवृत्तिः। एवं सर्वत्र। भाष्यमते अपादानस्य संवन्धत्वेन विवक्षायां नात्र षष्ठी अनभिधानात्।

अनिष्टचिन्तनानिष्टपरिहाररूपभीत्रार्थकधातुयोगेऽनिष्टहेतोरपादानसंज्ञाविधायकानुशासनेन 'भीत्रार्थानां भयहेतुः' इत्यनेन चोरादीनामपादानत्वाच्चोराद्बिभेति त्रायते वेत्यत्र पञ्चमी। चोरापादानकमनिष्टचिन्तनं तत्परिहारो वेति बोधः। अन्ये तु हेतुत्वं जन्यत्वं वा पञ्चम्यर्थः। तच्च भावित्वेन स्वानिष्टचिन्तनपर्यवसितस्य भयस्यैकदेशेऽनिष्टे चिन्तने वान्वितं, तथा च व्याघ्रहेतुकस्वानिष्टस्य भावित्वेन चिन्तनवान्, व्याघ्रहेतुकत्वेन भाव्यनिष्टधर्मिकचिन्तनवानिति वदन्ति। चोरहेतुकभयाभावानु-

कूलव्यापाराश्रय इति वा बोधः । भाष्यरीत्या तु बुद्धिप्राप्तचोरापादानिका तद्भयपूर्विका निवृत्तिः । तदपादानिकानिष्टपरिहारफलिका निवर्तनेति वा बोधः । एतद्विषये हेतुत्वापादानत्वाविवक्षायां षष्ठी भवत्येवेति बोध्यमिति वैयाकरणनव्याः । तत्कौस्तुभादिसकलग्रन्थविरुद्धम् । तथा हि 'कस्य विभ्यति देवाश्च जातरोषस्य संयुगे' इत्यत्र कथं षष्ठीत्याशङ्क्य संयुगेन विशेषणात्षष्ठीति समाहितम् । तस्माद्धेतुत्वेनाविवक्षायामपि वस्तुगत्या यो हेतुस्तस्यानेनापादानसंज्ञाविधानाद्धेतुतृतीयाषष्ठ्योरपवादिका पञ्चमी । अन्यथा हेतुत्वापादानत्वयोरविवक्षयैव सिद्धौ तदनुधावनं व्यर्थं स्यात् । यदपि पापस्य जुगुप्सत इत्युक्तं शब्देन्दुशेखरे तदप्यसमञ्जसमेव फलभेदे प्रत्याख्यानासंभवात् । वार्तिकरीत्या तत्र षष्ठ्यभावे निर्णीते भाष्यमतेऽप्यनभिधानस्यैव शरणीकरणीयत्वात् । फलभेदाभावेन भाष्योपपत्तावन्यथाव्याख्यानस्यानुचितत्वात् । सर्वैरपि ग्रन्थकारैस्तथा व्याख्यातत्वाच्च ।

यत्तु भवानन्दैरुक्तं पञ्चम्या हेतुत्वमर्थः । धातोर्यथायथं भयं भयाभावश्चार्थः । पञ्चम्यर्थः हेतुत्वं धात्वर्थे भये धात्वर्थतावच्छेदके चाभये ऽन्वेति आख्यातार्थाश्रयत्वं परित्राणानुकूलव्यापारश्च । इत्थं च हेतुपञ्चम्यैवोपपत्तौ पृथक्सूत्रप्रणयनं तस्यैव प्रपञ्चार्थमिति । तथा च व्याघ्रहेतुकभयाश्रयः शत्रुहेतुकभयाभावानुकूलव्यापारवानिति चाऽन्वयधीरिति । तन्न । हेतुपञ्चमीविधायकानुशासनाभावात् । विभाषा गुणेऽस्त्रियामिति गुणे सत्त्वेऽपि चोररूपे द्रव्ये तदभावात्, विभाषेति योगविभागस्यागतिकगतित्वात्, गुणातिरिक्तहेतोः पञ्चम्यनुशासनविरहादिति जनिकर्तुरिति सूत्रस्थस्वोत्तरग्रन्थविरोधाच्च ।

परापूर्वस्य जयतेः प्रयोगेऽसह्यार्थस्यापादानसंज्ञाविधायकेन 'पराजेरसोढः' इत्यनुशासनेनाध्ययनात्पराजयते इत्यादावपादानसंज्ञाविधानात्पञ्चमी । अध्ययनसंबन्धिनी ग्लानिरित्यर्थः । भाष्यरीत्या तु अध्ययनापादानिका निवृत्तिरित्यर्थः । केचित्तु कृत्यसाध्यत्वधीसमानाधिकरणस्तद्विषयकोत्साहाभावो धातोरर्थः । विषयोऽत्रापादानम् अध्ययनापादानको देवदत्तकर्तृकः उत्साहाभाव इति बोधः । तत्पूर्विका निवृत्तिरिति वा । शत्रून्पराजयत इत्यत्र तिरस्कारानुकूलो व्यापारो धात्वर्थः । रणात्पराजयत इत्यत्र युद्धनिवृत्तिर्धात्वर्थः । पञ्चम्या द्वेषोऽर्थः । तेन रणगोचरद्वेषजन्यनिवृत्तिमानिति बोध इति वदन्ति ।

प्रवृत्तिक्रियाप्रतिषेधानुकूलव्यापाररूपवारणार्थकधातुयोगे तत्तत्क्रियाजन्यफलभागितया तत्तत्क्रियाकर्तुरीप्सितोऽभिप्रेतोऽपादानमित्यर्थकात् 'वारणार्थानामीप्सितः' इत्यनुशासनाद्यवेभ्यो गां वारयतीत्यत्र यवानामपादानत्वात्पञ्चमी। तथा च यवप्रतियोगिकविनाशानुकूलो भक्षणादिरूपो व्यापारस्तस्य गोवृत्तियोऽभावस्तदनुकूलो व्यापारो देवदत्तवृत्तिरिति बोधः। एवं पुष्पेभ्यः आतपं वारयति, परस्वेभ्यः पाणिं वारयति इत्यादौ पुष्पवृत्तिशुष्कीभावानुकूलव्याराभावो यः आतपनिष्ठस्तदनुकूलेत्यादि बोधः। परस्ववृत्तिसंयोगानुकूलव्यापाराभावो यः पाणिनिष्ठस्तदनुकूलेत्यादि प्राग्वत्। कूपादन्धं वारयतीत्यत्र कूपवृत्ति यदधःप्रदेशावच्छिन्नसंयोगानुकूलक्रियारूपं पतनं तदनुकूलो योऽन्धवृत्तिव्यापारस्तस्य योऽभावस्तदनुकूलो व्यापारश्चैत्रवृत्तिरिति बोधः। एवमग्नेर्माणवकं वारयतीत्यत्राग्निजन्यदाहानुकूलव्यापाराभावानुकूलेत्यादि प्राग्वत्। इत्यननुगत एव पञ्चम्यर्थो वारयत्यर्थश्च, अनुभवानुरोधेनाननुगतस्यादोपत्वात्। इति वदन्ति। अन्ये तु सर्वत्र संयोगजनकव्यापाराभावस्य कर्मकारकवृत्तेरनुकूलो व्यापारः स एव धात्वर्थः। वृत्तित्वं पञ्चम्यर्थः इत्यादि यदूचुस्तन्न—यवेभ्यो गोसंयोगं वारयतीत्यनुपपत्तेः।

यत्तु व्युत्पत्तिवादे यत्र चैत्रादेर्नान्तरीयकतया विषभोजनं प्रसक्तं न तु स्वेच्छातस्तत्र तद्भोजनविरोधिव्यापारकर्तरि चैत्रं विषाद्वारयतीत्यादिर्न प्रयोगः, अपि तु सविषाद्वारयतीत्यादिरेव। तत्र पूर्वप्रयोगवारणाय सूत्रकृतेप्सित इत्यत्र सन्प्रत्ययेनेच्छोपादानादित्याद्युक्तं तत्तु कूपादन्धं वारयति इत्यत्रापि तुल्यम्। तथाहि यथात्र नान्तरीयकं विषभक्षणं तथा तत्र कूपपतनमपि नान्तरीयकमेव। एवं च तत्रापि सकूपादेशाद्वारयतीत्येव प्रयोगः स्यात्। ननु कूपादन्धं वारयतीति। यदि स प्रयोगः प्रामाणिकस्तर्ह्यत्रापि चैत्रं विषाद्वारयतीत्येव प्रयोगः। विषस्य विषत्वेनेच्छाविषयात्वाभावेऽपि भक्ष्यत्वेनेच्छाविषयत्ववत्कूपस्य कूपत्वेनेच्छाविषयत्वाभावेऽपि देशत्वेनेच्छाविषयत्वस्य तुल्यत्वात्। सूत्रवार्तिकभाष्यानुक्ततर्कस्यानुचितत्वात्। ननु पुष्पेभ्य आतपं वारयतीत्यादावातपस्याचेतनत्वात्कथं पुष्पमीप्सितमिति चेत्। निवार्यनिवारकान्यतरस्येप्सितमित्यर्थात्। तथा च धात्वर्थतावच्छेदकीभूतस्य विनाशाद्यनुकूलव्यापाराभावरूपस्य यत्फलं विनाशादि तत्संब-

न्वित्वेन प्रसक्तस्य यवादेस्तद्विपरीतत्वेन निवारकेच्छाविषयत्वात् न कश्चिद्दोषः।

व्यवधाने सति यत्कर्तृकात्मकर्मकदर्शनाभावमिच्छति तत्कारकमपादानमित्यर्थकेन 'अन्तर्धौ येनादर्शनमिच्छति' इत्यनुशासनेनापादानसंज्ञाविधानान्मातुर्निलीयते कृष्ण इत्यादावपादानत्वात्पञ्चमी। मात्रपादानककृष्णकर्तृकदर्शनाभावानुकूलो व्यापार इति बोधः। अन्ये तु अत्र प्रत्यक्षाभावेच्छापूर्वकप्रत्यक्षविरोधिव्यापारो धात्वर्थः। वृत्तित्वं पञ्चम्यर्थः धात्वर्थतावच्छेदकप्रत्यक्षेऽन्वेति। विरोधित्वं तज्जनकलौकिकसन्निकर्षाभावानुकूलत्वम्। कृतिराख्यातार्थः। तथा च मातृवृत्तिस्वविषयकप्रत्यक्षाभावेच्छापूर्वकः प्रत्यक्षजनकलौकिकसन्निकर्षाभावानुकूलव्यापारस्तदनुकूला कृतिः कृष्णनिष्ठेति बोधमाहुः।

नियमपूर्वकविद्यास्वीकारे वक्ताऽपादानसंज्ञ इत्यर्थकेन 'आख्यातोपयोगे' इत्यनुशासनेन पण्डितात्पुराणं शृणोति उपाध्यायादधीत इत्यादावपादानत्वात्पञ्चमी। पण्डितापादानकं पुराणकर्मकं श्रवणं चैत्रवृत्तीत्याद्यूह्यम्।

जायमानस्य हेतुर्निमित्तोपादानसाधारणोऽपादानमित्यर्थकेन 'जनिकर्तुः प्रकृतिः' इत्यनुशासनेन ब्रह्मणः प्रजाः प्रजायन्ते इत्यत्रापादानसंज्ञाविधानात्पञ्चमी। भाष्यमते तु हेतुशब्देनोपादानमेव गृह्यते। उभयथाऽपि ब्रह्मापादानिका प्रजाकर्तृकोत्पत्तिरिति बोधः। आद्ये 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ सामान्यशब्देऽपि अहमेव बहु स्यामिति सामानाधिकरण्येन, 'छागो वा मन्त्रवर्णात्' इतिवत् उपादानरूपो विशेषो बोध्यः। अर्थग्रहणाद्धात्वन्तरयोगेऽपि 'अङ्गादङ्गात्संभवसि' इति यथा।

भूकर्तुः प्रभवः आद्यबहिःसंयोगः (यत्र ?)सोऽपादानमित्यर्थकेन 'भुवः प्रभवः' इत्यनेन हिमवतो गङ्गा प्रभवतीत्यादावपादानत्वात्पञ्चमी। हिमालयसंयोगध्वंसाव्यवहितोत्तरक्षणवृत्त्याद्यपृथिवीसंयोगाश्रयतावती गङ्गेति बोधः। वैकुण्ठात्काशीतो वा गङ्गा प्रभवतीति प्रयोगवारणायाव्यवहितेति आद्येति च। वैकुण्ठसंयोगध्वंसाव्यवहितोत्तरक्षणे भूसंबन्धस्य काशीसंयोगध्वंसाव्यवहितक्षणे चाद्यस्य तस्याभावात्। 'वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य' इत्यादौ वल्मीकाग्रोर्ध्वदेशो बहिःपदार्थः। वल्मीकः सात(यो भेदः ?पो मेघः)।

केचित्तु—धातोः प्रकाशोऽर्थः, पञ्चम्या अधिकरणं, तथा च हिमवति प्रथमप्रकाश इत्यर्थः । भाष्ये तु बुद्धिपरिकल्पितमपायमाश्रित्य भीत्रार्थानामित्यादिसूत्राणि प्रत्याख्यातानि । तन्मते सर्वत्रावधिः पञ्चम्यर्थः ।

यत्तु दण्डाद्धटः इत्यत्र हेताविति सूत्रेण पञ्चमीति भवानन्दैरुक्तं तन्न । हेतावितिसूत्रेण पञ्चम्यविधानात् । प्रकृते पञ्चमी तु जनिकर्तुः प्रकृतिरिति सूत्रेण विभाषेति योगविभागेन वा । विशिष्यार्थानुक्तौ संबन्धः सर्वत्रार्थः ।

अध्याहारादिना गम्यमानल्यबन्तार्थस्य कर्मणि अधिकरणे वा पञ्चमीविधायकेन 'ल्यब्लोपे कर्मण्यधिकरणे च' इत्यनेन प्रासादात्प्रेक्षते आसनात्प्रेक्षते इत्यादौ पञ्चमी । प्रासादमारुह्यासने उपविश्येत्यर्थः । एवं स्थिते ल्यपि कर्माधिकरणं वा पञ्चम्यर्थः ।

यतश्चाध्वकालनिर्माणं तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ, कालात्सप्तमी च वक्तव्या' इत्यनुशासनेन वनाद्ग्रामो योजने योजनं वा, कार्तिक्या आग्रहायणी मासे इत्यादौ विभक्तिः । अत्रावधित्वं पञ्चम्यर्थः । वनावधिकयोजनपरिमितदेशवृत्तिर्ग्रामः इति बोधः । प्रथमार्थोऽप्यधिकरणमेवेति केचित् ।

अन्ये तु अव्यवहितोत्तरत्वं पञ्चम्यर्थः । स्वाव्यवहितोत्तरवृत्तित्वं प्रथमासप्तम्योरर्थः । एवं च वनाव्यवहितोत्तरयोजनाव्यवहितोत्तरदेशवृत्तिर्ग्राम इति बोधमाहुः । वस्तुतस्तु वनसंबन्धियोजनसंबन्धी ग्राम इति बोधः । एवं च षष्ठ्यपवादभूतेयम् । अन्ये तु योजनमित्यस्य प्रथमान्तत्वे गतं चेदिति शेषः, ततः प्रभृति गते मासे आग्रहायणीति च बोधमाहुः ।

अन्यार्थक आरादितर ऋते दिक्शब्द अञ्चूत्तरपद आच् आहि इत्येतेषां योगे पञ्चमीविधायकेन 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इत्यनुशासनेनान्यो भिन्नः इतरो विलक्षणः अर्थान्तरं वेत्यादौ पञ्चमी । अस्याः षष्ठ्यपवादत्वात्प्रतियोगित्वं पञ्चम्यर्थः । कृष्णप्रतियोगिताकभेदवानिति बोधः । नन्वत्रान्यार्थग्रहणे इतरग्रहणं व्यर्थमिति चेन्न । विशेषणीभूतभेदार्थकयोगेऽपि विधानार्थं तदावश्यकत्वात् । अन्यथान्यार्थस्य भेदवदर्थकत्वेन भेदार्थकयोगे न स्यात् । तथा च घटाद्भेदः वैलक्षण्यमर्थान्तरत्वं वा पटस्येति प्रयोगो न स्यात् । इतरग्रहणं प्रपञ्चार्थ-

मिति वदतोऽप्ययमेवाशयः । नन्वेवं घटान्न घटादेक इति च स्यादिति चेन्न । नञो द्योतकत्वेन भेदार्थकत्वाभावात् । घटादेक इत्यादौ त्वेक-शब्दस्यान्यार्थकत्वेनेष्टापत्तेः

यत्तु व्युत्पत्तिवादे अन्येतरयोः स्वरूपपरत्वमेव, अर्थपरत्वे घटादेकः घटात्स इति च स्यादिति । घटाद्भिन्नः घटाद्भिद्यते इत्यादावपादाने पञ्चमी । भिद्धातोर्नान्योन्याभावोऽर्थः । घटाद्भिनत्ति पट इति प्रयोगापत्तेः भिद्यते इति प्रयोगानापत्तेश्च कर्तरि यगात्मनेपदासंभवात्, अदैवादिकत्वाच्च न श्यन्संभवः परस्मैपदित्वाच्च अकर्मकधातुयोगे कर्मकर्तृविवक्षाया अप्यसंभवात् इत्युक्तम् । तदेवानुसृत्य वैयाकरणनव्यैरप्यन्य इत्यर्थग्रहणमिति भाष्यानुक्तत्वादितरग्रहणाच्चायुक्तमित्युक्तम् । तदसमञ्जसं भाष्यानुक्तत्वेन सकलव्याख्यातृग्रन्थविरोधेनान्यथाप्रयोगसाधनस्यानुचितत्वात् । नहि सर्वं भाष्येण कण्ठरवेणैवोच्यते किंतु तदविरोधेन सकलग्रन्थसंमतस्य भाष्याभिप्रेतत्वाभिमानात् । नचार्थपरत्वे पूर्वोक्तदोषः । घटादेक इत्यादौ त्विष्टापत्तिः । घटात्स इत्यत्र तु तच्छब्दस्यान्यार्थत्वाभावात् । घटाद्भिन्न इत्यादावपादानपञ्चमी चेत्सर्वत्र बुद्धिपरिकल्पितापादानसत्त्वात्सूत्रं च व्यर्थम् । संबन्धत्वेन विवक्षायां घटस्य भिन्न इति प्रयोगापत्तिश्च । भिदधातोः सकर्मकत्वेन भिद्यते इति प्रयोगोपपत्तिश्चेति दिक् ।

यत्तु पृथक्त्वं गुणः नान्योऽन्याभावः । अन्यथा अन्यारादित्येव सिद्धेः पृथग्विनेति पञ्चमीविधानं व्यर्थं स्यादित्युक्तं तार्किकैः । तन्न, पृथक्शब्दस्यान्योन्याभावार्थकत्वेऽपि पञ्चमी–द्वितीया–तृतीयाविधानार्थं सूत्रपाठस्य सार्थक्यात् । तस्मात्पृथक्त्वं न गुणः किंतु अन्योन्याभावः । अतः रूपं रसात्पृथगित्यादि संगच्छते । अन्यथा गुणे गुणानङ्गीकारात्तदसंगतं स्यात् ।

ऋते कृष्णान्नोत्पद्यते सुखमित्यात्रात्यन्ताभाव ऋतेशब्दार्थः । कृष्णप्रतियोगिकात्यन्ताभावप्रयोज्यः सुखकर्तृकोत्पत्त्यभाव इति बोधः । अथवा कृष्णशब्दस्तद्भक्तिपरस्तत्प्रतियोगिकेत्याद्यर्थः । एतद्योगे ततोऽन्यत्रापि दृश्यत इति द्वितीयापि । ऋते वातं वृक्षः पतितः वाताभाववान्वृक्षः पतनाश्रयः इति बोधः । एवं पुरुषाराधनमृते इत्यपि । आराद्वनादित्यत्र वनप्रतियोगिकसमीपत्वदूरत्ववान्वा ग्राम इति बोधः । दूरान्तिकार्थैरिति षष्ठ्या अनेन बाधः ।

पूर्वो ग्रामादित्यत्र ग्रामावधिकोदयाचलसन्निहितदेशत्ववानिति बोधः। चैत्रात्पूर्वः फाल्गुन इत्यादौ चैत्रावधिकपूर्वकालभवः फाल्गुन इति बोधः। नन्वत्र पूर्वादिशब्दानां देशकालवृत्तित्वेन दिग्वाचकत्वाभावात्कथमत्र पञ्चमीति चेन्न। दिशि दृष्ट इति व्युत्पत्त्या संप्रत्यदिग्वृत्तित्वेऽपि क्षतिविरहात् अत्र व्याख्यानाद्दिग्विशेषे रूढा एव गृह्यन्ते । तेनैन्द्र्यादियोगे न। केचित्तु शब्दग्रहणाद्रूढयोरेव ग्रहणमित्यूचुः।

गृहाद्गङ्गा मम परा काश्याः सैवाऽपरा ममेत्यादितो गृहावधिकमत्संबन्धिकपरत्ववती गङ्गेति बोधः। ममेत्यत्र तु न पञ्चमी, प्रत्यासत्त्या यस्य यत्रोत्थिताकाङ्क्षा तद्वाचकादेव तत्पदनिमित्ता विभक्तिरिति स्वीकारात्। अवयववाचियोगे तु न 'तस्य परमाम्रेडितम्' इति निर्देशात्। तेन पूर्वं कायस्येति सिद्धिः। प्राक्प्रत्यग्ग्रामादित्यादौ ग्रामावधिकप्राक्प्रत्यग्देशवृत्तित्ववानिति बोधः। नन्वञ्चूत्तरपदत्वात्सध्र्यङ् देवदत्त इत्यादौ दोष इति चेन्न। साहचर्येण दिग्वाचकस्यैव ग्रहणात्। न चैवं व्यर्थं तत्र 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठीबाधनार्थत्वात्। वस्तुतस्तु प्रत्ययाप्रत्ययपरिभाषयैव सिद्धौ तत्र प्रत्ययग्रहणं श्रूयमाणप्रत्यय एव यथा स्यादित्येवमर्थम्। एवं चात्र प्राध्यभावेनाञ्चूत्तरपदग्रहणं मास्तु।

दक्षिणा ग्रामात् दक्षिणाहि ग्रामादित्यादौ ग्रामावधिकदक्षिणादिशीत्यर्थः।

अपादाने पञ्चमीति सूत्रे यतश्चाध्वकालनिर्माणमिति वार्तिकप्रत्याख्यानाय भाष्ये उक्तमिदमत्रप्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मासे इति तेन प्रभृत्यर्थयोगे पञ्चमीविधायकानुमितानुशासनेन भवात्प्रभृति आरभ्य वा सेव्यो हरिरित्यत्र पञ्चमी। आद्यक्षणमारभ्येत्यत्र तु आरभ्येत्यस्य गृहीत्वेत्यर्थकत्वेन कर्मत्वाद्द्वितीया।

अपपरिबहिर्योगे समासविधानाद्बहिर्योगे पञ्चम्यनुमानाद्ग्रामाद्बहिरित्यादौ पञ्चमी। अवधित्वरूपसंबन्धः पञ्चम्यर्थः । ग्रामावधिकबहिर्देशे इति बोधः। अपपरी वर्जने आङ्मर्यादावचने इत्यनुशासनाभ्यां विहितकर्मप्रवचनीयसंज्ञकानामेषां योगे पञ्चम्यपाङ्परिभिरित्यनेन अपहरेः परिहरेः संसारः आ पाटलिपुत्राद्वृष्टो देव इत्यादौ पञ्चमी। हरिप्रतियोगिकवर्जनप्रयोज्यः संसार इति बोधः। पाटलिपुत्रावधिकवृष्टिकर्ता देव इति बोधः। अवधित्वरूपः संबन्धः पञ्चम्यर्थः।

'प्रतिः प्रतिनिधिप्रतिदानयोः' इत्यनुशासनविहितकर्मप्रवचनीयसंज्ञकप्रतियोगे 'प्रतिनिधिप्रतिदाने च यस्मात्' इत्यनेन प्रद्युम्नः कृष्णात्प्रति, तिलेभ्यः प्रतियच्छति माषानित्यादौ पञ्चमी। प्रतियोगित्वरूपः संबन्धः पञ्चम्यर्थः। कृष्णप्रतियोगिकसादृश्यवानिति बोधः। तिलग्रहणपूर्वकं माषप्रतिदानमिति बोधः। केचित्तु कर्मत्वं पञ्चम्यर्थः। तथा च तिलकर्मकभावनाजन्योपकारीभूता माषकर्मिका दानभावना चैत्रवृत्तिरिति बोधं वदन्ति।

कर्तृवर्जितं यदृणं हेतुभूतं ततः पञ्चमीत्यर्थकाद् 'अकर्तर्यृणे पञ्चमी' इत्यनुशासनाच्छताद्बद्ध इत्यादौ पञ्चमी। शतहेतुकबन्धनकर्मेति बोधः।

गुणे हेतावस्त्रीलिङ्गे पञ्चमीविधायकात् 'विभाषा गुणेऽस्त्रियाम्' इत्यनुशासनाज्जाड्यात् जाड्येन वा बद्ध इत्यादौ पञ्चमी, जाड्यहेतुकबन्धनकर्मेति बोधः। धूमादग्निमान्, नास्ति घटोऽनुपलब्धेरित्यादौ तु विभाषेतियोगविभागात्पञ्चमी। 'बाहुलकं प्रकृतेस्तनुदृष्टेः' इति वार्तिकप्रयोगोऽप्यत्र मानम्। धूमहेतुकमग्निमत्त्वज्ञानम्, अनुपलब्धिहेतुकं घटास्तित्वाभावज्ञानमिति बोधः।

'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इत्यनुशासनात्पृथग्रामेण रामाद्रामं वेत्यादौ पञ्चमी। पञ्चम्यादीनां प्रतियोगित्वरूपः संबन्धोऽर्थः। पृथक्त्वं च गुण इति तार्किकाः। तत्र चेदमेव ज्ञापकमिति वदन्ति। तत्तु प्रागेव दूषितम्। तथाच रामप्रतियोगिकभेदवान् कृष्ण इति बोधः। तत्प्रतियोगिकपृथक्त्वमिति वा। विनानानाशब्दयोरत्यन्ताभावोऽर्थः। रामप्रतियोगिकात्यन्ताभाव इति बोधः।

'स्तोकाल्पकृच्छ्रकतिपयानामसत्त्ववाचकानां करणे षष्ठीतृतीयाविविधायकात् 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इत्यनुशासनेन स्तोकेन स्तोकाद्वा मुक्त इत्यादौ तृतीयापञ्चम्यौ। स्तोकादिशब्दाः शुक्लादिशब्दवद्धर्मे धर्मिणि च वर्तन्ते। एवं चाद्ये गुणक्रियाव्यतिरिक्तजात्याश्रय(?)रूपसत्त्वभिन्नत्वात्पञ्चमीतृतीये स्तोककरणकमोचनकर्मीभूत इति बोधः। एवं कृच्छ्रादियोगेऽपि। धर्मस्य करणत्वं तु स्वाश्रयद्वारा।

दूरान्तिकार्थैर्योगे पदान्तराद्विभाषा षष्ठीविधायकात् 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इत्यनुशासनाद्ग्रामोत्तरषष्ठीपञ्चम्यौ। तथा दूरान्तिका-

र्थकशब्देभ्यो तृतीयापञ्चमीविधायकात् 'दूरान्तिकार्थेभ्यो द्वितीया च' इत्यनुशासनाद्दूराद्दूरं दूरेण वेत्यादौ द्वितीयादयः । आद्ये संबन्धः पञ्चम्यर्थः । द्वितीये तु प्रातिपदिकार्थमात्रमिति विवेकः । ग्रामसंबन्धिदूरदेशवृत्ति गमनमिति बोधः । एवं ग्रामाद्ग्रामस्य वाऽन्तिकादन्तिकमन्तिकेन वेत्यादावपि बोधः ।

इति पञ्चमी।

---

## षष्ठ्यर्थनिर्णयः ।

कारकप्रातिपदिकार्थव्यतिरिक्तस्वस्वामिभावादिरूपसंबन्धविवक्षायां 'षष्ठी शेषे' इत्यनेन संबन्धरूपे षष्ठीविधानाद्राज्ञः पुरुष इत्यादौ राजपदोत्तरं षष्ठी । राजनिरूपितसेवकत्वरूपसंबन्धवान्पुरुष इति बोधः । संबन्धत्वेन सबन्धः षष्ठ्यर्थः । विशेषरूपेण वाच्यत्वे तु नानार्थतापत्तेः । तात्पर्यवशात्तु विशेषबोधः । अत एव संयोगादिसत्त्वे स्वत्वरूपसंबन्धाभावे चैत्रस्य नेदं वास इत्युपपद्यते । एवं दण्डिनमानयेत्युक्ते दण्डस्वामी नानीयते अपि तु दण्डसंयोगवानेव । न च चित्रगुः पुरुष इत्यत्र संबन्धस्य षष्ठ्यर्थत्वे सामानाधिकरण्यं न स्यादिति वाच्यम् । संबन्धेनाक्षिप्तसंबन्धिना सामानाधिकरण्यसंभवात् । उक्तं च—

संबन्धेनैव संबन्धी प्रत्ययेनोपदिश्यते ।
पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेत् ' इति ।

संबन्धिवादिनस्तु संबन्धस्य षष्ठ्यर्थत्वे आरुण्यादीनां स्ववाक्योपात्तद्रव्याभिनिवेश इत्येतत्प्रतिपादकारुण्याधिकरणाद्युच्छेदापत्तिः तस्मात्संबन्धी अर्थः । तथा च विभक्त्यर्थसंख्याप्रकारकबोधे विभक्तिजन्योपस्थितिर्हेतुः इति लघुभूतः कार्यकारणभावः । संबन्धस्य वाच्यत्वे तु प्रकृतिजन्योपस्थितिर्हेतुरिति कल्प्यमिति गौरवम् । एकराजकीयसंबन्धद्वयाभिधाने राज्ञोरित्यापत्तेः । एवं च शेषषष्ठ्याः संबन्धी एवार्थः । भूषणादौ ' संबन्धः शक्तिरेव वा ' इत्यत्र संबन्धपदं अर्शआद्यजन्तं बोध्यम् । एवं च विशेषरूपेण षष्ठ्यर्थत्वाभावे स्वत्वं स्वामित्वं वा ...
.............................................................................................. ।

वैयाकरणनव्यैः—"षष्ठ्यर्थसंबन्धस्य सर्वत्र क्रियाकारकपूर्वकत्वमेव, सा च क्वचिच्छ्रुता क्वचिदध्याहृता । अत एव हरिणा—

संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां या क्रियायामभिधीयते ॥

इति क्रियाकारकपूर्वकत्वमेव संबन्धस्योक्तं सामीप्याद्यपि बुद्धिस्थैकदेशाधिकरणकस्थितिक्रियाकर्तृत्वनिमित्तकमित्याद्यूह्यम् । अत एव पर्वतस्य वृक्षा इति न, वृक्षपर्वतयोराधाराधेयभावमूलकसंबन्धाभावात् । संयोगो हि नाधाराधेयमूलकः विपरीतं तस्यैव तन्मूलकत्वात्—" इत्युक्तम् । तन्न, मानाभावात् गौरवाच्च । न च हरिकारिका मानम् । तस्याः भिन्नार्थत्वात् । तथाहि षष्ठ्यर्थसंबन्धः कर्म, तत्रिधा तद्बोधिका षष्ठ्यपि त्रिधा । केवलसंबन्धबाधिका, कारकाणामविवक्षापूर्वकसंबन्धबोधिका, कर्तृकर्मादिसंबन्धबोधिका च । तत्र मातुः स्मरतीत्यादौ द्वितीया, ओदनस्य पाचक इत्यादौ तृतीया, सामीप्ये सर्वे (?), चित्रा गावो यस्येत्यादावाद्या । न चात्र विवदितव्यं भाष्ये गुरोरवत (?) इति न्यासे स्पष्टमेव सामीप्यार्थे रवत् (?) पदस्याभिधानात् । भवद्भिरपि अस्तेर्भूरित्यादावस्तेः समीपेऽनन्तरे वेति भाष्यव्याख्यानावसरे षष्ठ्यन्तपदघटितवाक्ये सामीप्यार्थबोधः स्वीकृतः । स च समीपादिपदाध्याहारेण । एवं च चित्रा गावो यस्येत्यादावपि सामीप्यबोधः सति तात्पर्ये तवापीष्टः । एतावान्परो भेदः—तव गुरुभूताध्याहारेण बोध इति दुराग्रहः, मम तु षष्ठ्यर्थ इति । तत्र षष्ठ्याः सामीप्यार्थकत्वमेव युक्तम् । अन्यथाऽस्तेरिति षष्ठीश्रवणानन्तरं सामीप्यार्थशङ्कैव न स्यात् । नहि पदाध्याहारेण शङ्का युक्ता पूर्वमेव वाच्यार्थोपस्थित्या निराकाङ्क्षत्वात् । भवद्भिरपि सामीप्याद्यपीत्यादिना स्वीकृतत्वाच्चेति दिक् । एवं च हरिकारिकायां मातुः स्मरतीत्यादौ कर्मत्वाद्यविवक्षापूर्वको यः संबन्धः स उक्तः । अत एवान्यपदं सार्थकमन्यथा संबन्धः क्रियापूर्वक इत्येव ब्रूयात् । तथा चान्यपदं संबन्धेनान्वेति । एवं च कारकेभ्यः कारक(द्वारा)क्रियान्वितप्रातिपदिकेभ्यः उत्पन्नया षष्ठ्याऽन्यः संबन्धः कारकाविवक्षापूर्वकसंबन्ध उच्यते इत्येवार्थः साधुः । एवं च पर्वतस्य वृक्षा इत्यपि पर्वतसंबन्धिवृक्षा इत्यर्थे साध्वेव ।

स च संबन्धः जन्यजनकभावः । ग्रामस्य यथा साधारण्यक(?)सस्थण्डिलकत्वार्थकत्वमादाय कूपादीनां ग्रामावयवत्वमादायावयवावयविभावसंबन्धे ग्रामस्य कूप इत्यादौ षष्ठीति भवद्भिरुक्तं, तथा मयाऽपि पाषाणमृद्वृक्षादिसमुदायस्य पर्वतपदवाच्यत्वस्वीकारेणावयवावयविभावसंबन्धो-

ऽपि वक्तुं शक्यः । वृक्षपर्वतयोरित्यादिकं च यत् पर्वतस्य वृक्षा इत्यादिप्रयोगाभावसाधकोपन्यसनं तन्मुधैव आधाराधेयभावस्य संयोगमूलत्वेऽपि तदविवक्षायां षष्ठ्या दुर्वारत्वात् । अन्यथा व्रजमवरुणद्धि गामित्यादौ षष्ठ्यप्राप्तौ तदपवादकाऽकथितं चेति द्वितीया न स्यादिति सर्वोपप्लव एव स्यात् । अस्तु वा भवदुक्त एव हरिकारिकार्थः, तथापि सामीप्यादौ तु बुद्धिपरिकल्पितक्रियाकारकसंबन्धस्य स्वीकारात् तद्रीत्यात्रापि सामीप्यसंबन्धे पर्वतस्य वृक्षा इति वक्तुं शक्यत्वात् । यदपि किंच संयोगो न संबन्धः संबन्धस्य पदार्थयोजनामात्रहेतुत्वात् । संयोगस्य स्वतः पदार्थत्वात् । सांसर्गिकविषयतया तस्याभानाच्च । संबन्धश्च षष्ठ्यादिभिरेवोच्यन्ते । संबन्धपदेनापि सांसर्गिकविषयतावत्त्वेन नोच्यत इति संबन्धः सर्वदा पदागम्यः, संयोगस्तु न कदापि षष्ठ्यादिभिः तथाविषयतयोच्यते । इमौ संयुक्तावित्येव तत्र व्यवहारात् । तत्र संबन्धव्यवहारस्तूभयाश्रितत्वरूपसंबन्धधर्मवत्त्वाद्गौणः, अत एव मतुप्सूत्रे वृक्षवान्पर्वत इत्याद्यर्थे सप्तम्युपादानं, गोमान् देवदत्त इत्याद्यर्थे च षष्ठ्युपादानमिति भाष्ये उक्तम् । षष्ठ्यर्थश्च सांसर्गिकविषयतयैव भासते । अत एव 'षष्ठी शेषे' इति सूत्रे भाष्ये राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्य इत्युक्तम् । अन्यथा संबन्धे विशेष्यतया विशेषणतया वा ब्रूयात् । राज्ञः पुरुष इत्यत्र स्वस्वामिभावः षष्ठ्यर्थः । स च स्वत्वस्वामित्वसमूहरूपः । अत एव स्वस्वामिभावोऽवयवावयवविभाव आधाराधेयभावः प्रतियोग्यनुयोगिभावो विशेषणविशेष्यभावः संबन्ध इत्यादि व्यवहार इत्युक्तं तदपि न । संयोगस्य संबन्धत्वे षष्ठ्यर्थत्वे च बाधकाभावात् । न चोक्तहेतुद्वयेनोक्तं बाधकमिति वाच्यम् । तस्यासंवर्धतत्वात्(?) । तथाहि किं संयोगस्य संबन्धत्वं नास्तीति ब्रूषे उत षष्ठ्यर्थत्वं नास्तीति, यद्वा संबन्धपदाभिधेयत्वं नास्ति । नाद्यः संयोगस्य स्वतःपदार्थत्वेऽपि सांसर्गिकविषयतयाऽभानेऽपि संबन्धत्वे बाधकाभावात् । नहि संबन्धस्यापदार्थत्वं सांसर्गिकविषयतयैव वा भानं नियतं येन भवदुक्तं संगच्छेत । अन्यथा राजा स्वामी देवदत्तः स्वमित्यादावपि स्वस्वामिभावस्य पदार्थतया सांसर्गिकविषयतयाऽभानेन च स्वस्वामिभावादीनामपि उक्तरीत्या संबन्धत्वं न स्यात् । उभयोस्तुल्यत्वात् । नच—'संबन्धः षष्ठ्यादिभिरेवोच्यते संबन्धपदेनापि सांसर्गिकविषयतावत्त्वेन नोच्यते इति संबन्धः सर्वथा पदागम्यः, संयोगस्तु न कदापि

षष्ठ्यादिभिस्तथाविषयतयोच्यते, इमौ संयुक्तावित्येव तत्र व्यवहारा-त्'—इत्यादिनोक्तमेव भेदकमिति वाच्यम्। गङ्गायास्तीरे इत्यादौ संयुक्त-पदाभावेऽपि षष्ठ्या गङ्गातीरयोः संयोगसंबन्धस्य प्रतीयमानत्वेन भव-दुक्तभेदकाभावात्। रथस्याश्वाः अन्यस्वामिकपीताम्बरदण्डादिसंयुक्तेऽपि पुरुषे पीताम्बरोऽयं दण्डीत्यादिव्यवहाराच्च। संयोगाभावे तु स्वस्वामि-भावे सत्यपि न तादृशप्रयोगः। भवद्भिरपि, तत्र संबन्धव्यवहारस्तु उभयाश्रितत्वरूपसंबन्धधर्मवत्त्वाद्गौण इत्यादिना संयोगस्य संबन्ध-त्वाङ्गीकारात्। तस्य गौणत्वे प्रमाणाभावात्। न च मतुप्सूत्रे वृक्षवान्पर्वत इत्याद्यर्थे सप्तम्युपादानमिति भाष्यं मानम्। पर्वताधिकर-णको वृक्ष इति विवक्षायां तस्य सार्थक्यात्। गोमान् देवदत्त इत्याद्यर्थे षष्ठ्युपादानमित्यत्र तु आदिपदात्षष्ठ्यन्तग्रहणम्। न चात्र संयोगस्य संबन्धत्वे पर्वतस्य वृक्षा इति प्रयोगस्येष्टत्वेऽत्रैव षष्ठ्यन्तप-दसार्थक्ये गोमान् देवदत्त इति दूरमनुधावनं व्यर्थमिति वाच्यम्। अत्रा-न्यतरोपादानेनापि प्रयोगसिद्धिः, गोमान् देवदत्त इत्यत्र त्वधिकर-णत्वविवक्षायाः असंभवान्मुख्यषष्ठ्यन्तस्यैवोदाहरणमित्यभिप्रायेण तस्य सार्थक्यात्। न च भवन्ति पर्वते वृक्षा न च ते तस्य भवन्तीति स्पष्टमेव भाष्ये पर्वतस्य वृक्षा इति प्रयोगाभावः प्रतिपादित इति वाच्यम्। यदा-धिकरणत्वेन विवक्षा तदा षष्ठीप्रतिपाद्या न भवन्तीत्येवमभिप्रायक-त्वात्। एवं च संयोगस्य संबन्धत्वे षष्ठ्यर्थत्वे वा संबन्धपदाभिधेयत्वे वा भाष्यविरोधरूपदोषाभावात्तदभावे वा फलाभावाच्च दुराग्रहेण संबन्ध-त्वाभावप्रतिपादनमयुक्तमिति दिक्।

यदपि संबन्धश्च षष्ठ्यादिभिरेवोच्यते संबन्धपदेनापि सांसर्गिक-विषयतावत्त्वेन नोच्यत इति सर्वथा पदागम्य इति संयोगभेदकफ-क्किकायामुक्तं तदपि न, तत्रैवकारव्यावर्त्याभावात्। संबन्धस्य सांस-र्गिकविषयतया भानाभावाभ्युपगमे तस्य षष्ठ्यर्थत्वमेव न स्यात्। षष्ठ्यर्थश्च सांसर्गिकविषयतयैव भासत इति भवदभ्युपगमविरुद्धत्वात्। यदपि षष्ठ्यर्थः स्वत्वस्वामित्वादिसमूहरूप इत्युक्तं तदपि न गौरवात्। स्वत्वादेः पुरुषादावन्वयेन प्रत्ययानां प्रकृत्यर्थान्वितेत्यादिनियमभ-ङ्गापत्तेश्चेति दिक्।

तस्मात्संबन्धत्वेन संबन्धबोधे पर्वतस्य वृक्षा इति प्रयोगः साधुरेव।

तत्र च संबन्धत्वेन संबन्धः प्रकारत्वेन भासते प्रत्ययोपात्तत्वात् । यत्र तु षष्ठी नास्ति नीलोत्पलादौ तत्र संसर्गतयेति विवेकः । न च संबन्धस्य प्रकारत्वेन भानाभ्युपगमे षष्ठी शेष इति सूत्रस्थभाष्यविरोधः । तत्र हि राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्य इत्युक्तम् । षष्ठ्यर्थसंबन्धस्य प्रकारत्वेन भाने तु संबन्धे विशेषणतया विशेष्यतया वा ब्रूयादिति वाच्यम् । राजनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेषतासंबन्धस्य प्रकारतया भानाभ्युपगमेऽपि संबन्धे तयोर्विशेषणविशेष्यभावासंभवात् । स्वत्वस्वामित्वादिविशेषरूपेण भानं तु सांसर्गिकविषयतयैव अत एव भाष्यकारेण राजा विशेषणं पुरुषो विशेष्य इति स्पष्टीकृतमिति ग्रन्थगौरवभयादुपरम्यते । प्रकृतमनुसरामः—

हेतुशब्दप्रयोगे हेतुत्वेन हेतौ द्योत्ये 'षष्ठी हेतुप्रयोगे' इत्यनुशासनेनान्नस्य हेतोर्वसतीत्यत्र षष्ठी । एकाश्रयकोऽन्नहेतुको वास इति बोधः । अन्ननिष्ठजनकतानिरूपितजन्यताश्रयो वास इति बोधः । अन्नं हेतुं पश्येत्यत्र हेतुशब्दप्रयोगेऽपि तद्द्योत्यत्वाभावान्न षष्ठी ।

सर्वनाम्नः पूर्वोक्तविषये तृतीयाषष्ठीविधायकात् 'सर्वनाम्नस्तृतीया च' इत्यनुशासनात्केन हेतुना कस्य हेतोर्वा वसतीत्यादौ तृतीयाषष्ठ्यौ । एकाश्रयिका प्रश्नविषयहेतुका वासक्रियेति बोधः ।

'निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनम्' इत्यनुशासनात्किं निमित्तं, केन निमित्तेन, कस्मै निमित्तायेत्यादौ प्रथमादयः सर्वाः विभक्तयः । प्रायोग्रहणादसर्वनाम्नः प्रथमाद्वितीये न । पूर्वसूत्रद्वयमप्यनेन गतार्थम् ।

दिग्देशकालरूपार्थकप्रत्यययोगे अन्यारादितिपञ्चम्यपवादषष्ठीविधायकषष्ठ्यतसर्थप्रत्ययेनेइत्यनुशासनेन ग्रामस्य दक्षिणतः पुरः पुरस्तादित्यादौ षष्ठी, प्रतियोगित्वरूपः संबन्धः षष्ठ्यर्थः । एवं च विन्ध्याद्दक्षिणतः इत्यादिप्रयोगाः प्रामादिका एव ।

एनबन्तेन योगे षष्ठ्यपवादद्वितीयाविधायकेन 'एनपा द्वितीया' इत्यनेन उत्तरेण ग्राममित्यादौ द्वितीया । अत्रैनपेति योगविभागे ............................ । तत्रागारं धनपतिगृहादुत्तरेणास्मदीयमित्यत्र तूत्तरेणेति तोरणेनेत्यनेन समानाधिकरणं तृतीयान्तं नत्वेनबन्तं तथा च नास्य प्रवृत्तिः ।

दूरान्तिकार्थैर्योगे षष्ठीपञ्चमीविधायकाद्दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामित्यनुशासनाद्ग्रामस्य ग्रामाद्वा दूरमन्तिकं वेत्यत्र षष्ठीपञ्चम्यौ। प्रतियोगित्वसंबन्धो विभक्त्यर्थः।

व्यवहृपणोरितिसूत्रपरामर्शितच्छब्दबलेन द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि कर्मत्वेन विवक्षिते षष्ठीविधायकात् 'दिवस्तदर्थस्य' इत्यनुशासनाच्छतस्य दीव्यतीत्यादौ षष्ठी। शतकर्मिका क्रीडा व्यहारो वा देवदत्तकर्तृक इति बोधः। सोपसर्गे तु विभाषोपसर्गे इत्यनेन विकल्पाच्छतस्य शतं वा प्रतिदीव्यतीत्यादौ षष्ठी। बोधः पूर्ववत्।

देवतासंप्रदानकेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकात् षष्ठीविधायकात् 'प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने' इत्यनुशासनादग्नये छागस्य हविषोऽनुब्रूहि प्रेष्य वेत्यत्र कर्मत्वे षष्ठी। छागावयवीभूतवपासंबन्धिहविर्भूतमेदःकर्मकः प्रैष इति बोधः। प्रस्थितत्वेन विशेषणत्वे तु प्रस्थिते प्रतिषेध इति वार्तिकेन षष्ठीप्रतिषेधे द्वितीयैव इहाग्निभ्यां छागस्य हविषो मेदः प्रस्थितं प्रेष्येति प्रयोगः।

कृद्योगे कर्तृकर्मणोः षष्ठीविधायकात् 'कर्तृकर्मणोः कृति' इत्यनुशासनात्कृष्णस्य कृतिः, जगतः कर्ता कृष्णः, इत्यत्र षष्ठी। कृष्णकर्तृका कृतिः। जगत्कर्मककृत्याश्रयाभिन्नः कृष्ण इति बोधः। स्तोकं पाक इत्यत्र तु न, कर्तृसाहचर्येण धात्वर्थकर्मण्येव तत्प्रवृत्तेः। सूत्रे कृद्ग्रहणादाग्निको भूमिं देवदत्तः, देवदत्तेन शत्योऽश्व इत्यादौ तद्धितस्य ये कर्तृकर्मणी तत्र न। कृतपूर्वी कटमित्यत्रापि भावे क्तान्तेन पूर्वशब्दस्य समासे, इनौ, पश्चात्कटेन संबन्धे कृन्मात्रयोगाभावान्नलोकेति निषेधाद्वा षष्ठ्यभावे द्वितीया। एवमोदनं पाचकतम इत्यत्रापि। अन्ये तु ओदनस्य पाचकतम इति षष्ठी भवत्येव। कृद्ग्रहणेन तद्धितार्थे प्रति गुणीभूतक्रियायाः ये कर्तृकर्मणी तत्रैव व्यावर्तनादित्याहुः। नच धायैरामोदमिति भट्टिप्रयोगोऽनुपपन्नः। अनित्यमिदं तदर्हमिति द्वितीयान्ततच्छब्दप्रयोगात्। ननु समस्तमेवास्तु इति चेन्न। 'तत्र तस्येव' इत्यत्र योगविभागेन तत्रेव तस्य अर्हमित्येवंरूपेणैव सिद्धे तच्छब्दोपादानेन समासाभावबोधनात्। ननु भिदेर्ण्यन्ताण्ण्वुलि भेदिका देवदत्तस्य काष्ठानामित्यादौ पाचयत्योदनं देवदत्तेन यज्ञदत्त इत्यादाविव मुख्यत्वात्प्रयोजककर्तृवाचकादेव षष्ठी स्यादिति चेन्न। वैषम्यात्। तथाहि तत्रैकेन

लकारेण कर्तृद्वयबोधासंभवादुक्तन्यायः प्रवर्तते । प्रकृते तु ओदनः पाच्यते देवदत्तेन यज्ञदत्तेनेत्यादिवदुपपत्तिः । नेताश्वस्य स्रुघ्नस्य स्रुघ्नं वेत्यत्र गुणकर्मणि षष्ठीविकल्प इष्यते । स्रुघ्नसंबन्ध्यश्वकर्मकनयनकर्तेति बोधः ।

उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठीनियामकादुभयप्राप्तौ कर्मणीत्यनुशासनादाश्चर्यो गवां दोहोऽगोपेनेत्यत्र कर्मण्येव षष्ठी। अगोपकर्तृको गोकर्मको दोह आश्चर्य इति बोधः। स्त्रीप्रत्यययोरकाकारयोर्नियमाभावाद्भेदिका विभित्सा वा रुद्रस्य जगत इत्यादावुभयत्रापि षष्ठी । रुद्रकर्तृका जगत्कर्मिका भेदनक्रियेति भेदितुमिच्छा चेति बोधः । सुटा सीयुटो बाधा नेत्यत्र तु करणे तृतीया ।

अकाकारव्यतिरिक्तस्त्रीप्रत्ययकर्तरि षष्ठीविकल्पविधायकेन ‘ शेषे विभाषा ’ इत्यनुशासनेन विचित्रा जगतः कृतिर्हरेर्हरिणा वेत्यत्र कर्तरि षष्ठीविकल्पः । हरिकर्तृका जगत्कर्मिका क्रिया विचित्रेति बोधः । शब्दानामनुशासनमाचार्येणाचार्यस्य वेति प्रयोगानुरोधात्सामान्यमेव शेषशब्दार्थः । आचार्यकर्तृकं शब्दकर्मकं विविच्याऽसाधुभ्यः प्रविभज्य बोधनसाधनमिति बोधः ।

वर्तमानार्थकक्तप्रत्यययोगे षष्ठीविधायकात् ‘ क्तस्य च वर्तमाने ’ इत्यनुशासनाद्राज्ञां मतो बुद्धः पूजितो वेत्यत्र कर्तरि षष्ठी। राजकर्तृकवर्तमानेच्छाज्ञानपूजाश्रय इति बोधः । गतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तः । एवं राज्ञां मतं, ‘ नपुंसके भावे क्तः ’ इत्यत्रापि। पूजितो यः सुरासुरैरित्यादौ भूते क्तः न तु वर्तमाने, तेन तृतीया तत्रोपपद्यते । छात्रस्य हसितमित्यत्र शेषत्वविवक्षया षष्ठी, कर्तृत्वविवक्षायां तु तृतीयैव ।

‘ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ’ इत्यनेन विहितस्य क्तस्य योगे षष्ठीविधायकादधिकरणवाचिनश्चेत्यनुशासनादिदमेषामासितं गतं भुक्तं वेत्यत्र षष्ठी, एतत्कर्तृकमासनं गमनं भोजनमिति बोधः। अत्रोभयप्राप्तौ कर्मणीतिनियमाभावादिदमेषां भुक्तमोदनस्येत्युभयत्रापि षष्ठी। ओदनकर्मकमेतत्कर्तृकं भोजनमिति बोधः ।

लादेशः उः उकः अव्ययं निष्ठा खलर्थस्तृन्नैतेर्योगे कर्तृकर्मणोरित्यादिप्राप्तषष्ठीनिषेधविधायकेन ‘ न लोकाव्ययनिष्ठाखलर्थतृनामित्यनुशास-

नेन षष्ठीनिषेधात्कुर्वाणः सृष्टिं हरिरित्यादौ द्वितीया, सृष्टिकर्मकक्रियाश्रयाभिन्नो हरिरिति बोधः । हरिं दिदृक्षुरलंकरिष्णुरित्यादौ हरिकर्मकदर्शनेच्छावान् तत्कर्मकालंकरणकर्ता वेति बोधः । दैत्यान्घातुको हरिरित्यादौ दैत्यकर्मकहननकर्त्रभिन्नो हरिरिति बोधः । कमेरनिषेधः इत्यनेन निषेधाभावबोधनाल्लक्ष्म्याः कामुक इत्यत्र षष्ठी । लक्ष्मीविषयकेच्छावानिति बोधः । जगत्सृष्ट्वा सुखं कर्तुमित्यत्र जगत्सर्जनोत्तरकालिका सुख क्रियेति बोधः । दैत्यान्हतवानित्यत्र दैत्यकर्मकभूतहननाश्रय इति बोधः । विष्णुना हता दैत्या इत्यत्र विष्णुकर्तृकहननकर्माभिन्नाः दैत्या इति बोधः । ईषत्करः प्रपञ्चो हरिणेत्यत्र हरिकर्तृकं प्रपञ्चकर्मकमीषत्करणमिति बोधः । सोमं पवमानः आत्मानं मण्डयमानः कर्ता लोकान्वेदमधीयन् इत्यादौ तृन्निति प्रत्याहारग्रहणान्निषेधः, बोधः प्राग्वत् ।

शतृप्रत्ययान्तद्विषधातुयोगे विकल्पेन षष्ठीविधायकात् ‘ द्विषः शतुर्वा ’ इत्यनुशासनान्मुरस्य मुरं वा द्विषन्नित्यादौ षष्ठी । मुरकर्मकद्वेषकर्तेति बोधः ।

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थकेनश्च योगे षष्ठीनिषेधविधायकादकेनोर्भविष्यदाधमर्ण्ययोरित्यनुशासनात्सतः पालकोऽवतरति व्रजं गामी शतं दायीत्यादौ न षष्ठी, सत्कर्मकभविष्यत्पालनकर्तेति बोधः । निषेधस्तु कर्तृत्वकर्मत्वप्रकारकबोधे षष्ठ्या असाधुत्वबोधकः, संबन्धत्वेन बोधे तु साधुत्वमेव ।

कृत्यानां योगे कर्तरि षष्ठीविकल्पविधायकात् ‘ कृत्यानां कर्तरि वा ’ त्यनुशासनान्मया मम वा सेव्यो हरिरित्यादौ षष्ठीविकल्पः । मत्कर्तृकसेवनकर्माभिन्नो हरिरिति बोधः ।

तुलोपमाशब्दभिन्नैः पदान्तरनिरपेक्षैः तुल्यार्थकैर्योगे संबन्धसामान्ये षष्ठ्यां प्राप्तायां पाक्षिकतृतीयाविधायकात् ‘ तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ’ इत्यनुशासनात्तुल्यः सदृशः समो वा कृष्णस्य कृष्णेनेत्यत्र पाक्षिकी तृतीया । कृष्णप्रतियोगिकसादृश्यवानिति बोधः । गौरिव गवय इत्यत्र पदान्तरसापेक्षत्वेनेवादीनां तुल्यार्थत्वात्षष्ठी न ।

आयुष्यमद्रभद्रकुशलसुखार्थहितैः तदर्थकैर्योगे आशिषि शेषे पाक्षिकचतुर्थीविधायकात् ‘ चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ’

इत्यनुशासनादायुष्यं चिरंजीवितं मद्रं भद्रं कुशलं निरामयं सुखं शमर्थः प्रयोजनं हितं पथ्यं कृष्णस्य कृष्णाय वा भूयादित्यादौ चतुर्थी षष्ठी च। अनाशिषि हितयोगे शेषेषष्ठीं बाधित्वा चतुर्थीविधायकेन 'हितयोगेच' इत्यनेन चतुर्थ्येव भवति, देवदत्ताय हितमिति ॥

इति षष्ठी ।

---

## सप्तम्यर्थनिर्णयः ।

कर्तृकर्मद्वारा तन्निष्ठक्रियायाः औपश्लेषिकवैषयिकाभिव्यापकरूपाधारकारकस्याधारोऽधिकरणमित्यधिकरणसंज्ञायां सप्तम्यधिकरणे चेत्यनेन कटे आस्ते स्थाल्यां पचतीत्यादौ यत्किंचिदवयवावच्छेदेनाधारस्याधेयेन व्याप्तिरूपोपश्लेषाधिकरणे सप्तमी । कटाधिकरणिकैकर्तृकासनक्रियेति बोधः । स्थाल्यधिकरणिकैकर्तृका पचिक्रिया । चैत्रतण्डुलादिपदसमभिव्याहारे तु एकचैत्राभिन्नकर्तृका तण्डुलकर्मिकेति विशेषः । विषयतासंबन्धेनावच्छिन्नाधिकरणस्य तु मोक्षे इच्छास्तीति । मोक्षविषयकेच्छाकर्तृका सत्तेति बोधः । अत्र धात्वर्थं प्रति मोक्षस्य कर्मत्वेऽपि प्रत्ययोपात्तसिद्धेच्छाद्वारास्तिक्रियायामन्वयस्य विवक्षितत्वेन सप्तमी । धात्वर्थं प्रत्यन्वयविवक्षायां तु कर्मत्वात्कर्तृकर्मणोः कृतीति षष्ठ्येव । मोक्षे इच्छास्तीतिवन्मोक्षे इच्छतीति न प्रयोगः । उपमानेऽस्तिक्रियानिरूपितकर्तृद्वाराधिकरणत्ववदुपमेये तदभावेनेच्छतिनिरूपितकर्मत्वाद् द्वितीयैव ।

परे तु अधिकरणस्य कर्त्राद्यन्वय एव, कटाधिकरणकचैत्रकर्तृकमासनमित्यादिरीत्या बोधः । अत एवाक्षशौण्ड इत्यादौ सामर्थ्यात्समासः । अक्षविषयकप्रावीण्यवानिति बोधानुभवात् । यत्तु 'एवं चात्रान्तर्भूतक्रियाद्वारा सामर्थ्यमिति कैयटादयश्चिन्त्याः' इत्याहुर्वैयाकरणनव्यास्तत्रेयं चिन्ता—अन्तर्भूता या शौण्डपदार्थप्रावीण्यरूपा क्रियेति सर्वानुभूत एवार्थः कैयटेनोक्त इति न वैलक्षण्यम् । अवच्छेदकावच्छेदेन वृत्तिमद्रूपाभिव्यापकाधिकरणे तु सर्वस्मिन्नात्माऽस्तीत्यादौ । ननु खे शकुनय आतपे तिष्ठन्तीत्यादावुक्तविधाधिकरणाभावात्कथं सप्तमीति चेत् । अत्र केचित् । आतपपदस्मृततत्संबन्धिनि लक्षणया तत्संयुक्ते गृहे इत्यर्थः । आकाशशब्देन गमनप्रतिबन्धकभूप्रदेशानवच्छिन्नप्रदेशो लक्ष्यते । सप्तम्या च अवच्छेदकत्वं, धातुना निराधारगमनम् । तथा चोक्तविधभूप्रदेशानव-

च्छिन्नप्रदेशावच्छिन्ननिराधारगमनानुकूला कृतिः पक्षिनिष्ठेत्याहुः । वैयाकरणनव्या अप्राप्तिपूर्वकप्राप्तिरूपसंयोगसमवायैतद्भिन्नसंबन्धेन यदधिकरणं तद्वैषयिकं तत्रैव सप्तमीत्याहुः ।

वस्तुतस्तु मृगतृष्णाम्भसि स्नात इत्यादावारोपितोपश्लेषाधिकरणे सप्तमी। इको यणचीत्यादावौपश्लेषिकाधिकरणे सप्तमीति संहितायामितिसूत्रस्थभाष्यमेवं संगच्छते । अन्यथा द्रव्ययोरेव संयोग इति नियमाद्गुणयोर्मुख्योपश्लेषाभावाद्भाष्यमसंगतं स्यात् ।

इन्प्रकृतिक्तान्तकर्मणि सप्तमीविधायकात् 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इत्यनुशासनादधीती व्याकरणे इत्यादौ सप्तमी, व्याकरणकर्मकाध्ययनकर्तेति बोधः । अत्र कृतपूर्वीवद्भावे क्तः अधीतमनेनेतीष्टादिभ्यश्चेतीनिः । मासमधीती व्याकरणे इत्यादौ लक्ष्यानुरोधात्कालादिकर्मणि नेदं प्रवर्तते । कचित्त्विष्टापत्तिमाहुः ।

षष्ठ्यपवादसप्तमीविधायकेन ' साध्वसाधुप्रयोगे च ' इत्यनुशासनेन साधुः कृष्णो मातरि असाधुर्मातुले इत्यादौ सप्तमी, मातृसंबन्धि··· ·····································। ············ भृत्याभिन्नः शुभकर्मवानिति बोधे साधुशब्दस्य भृत्येन संबन्धाद्राजपदोत्तरं षष्ठी । भृत्यपदात्तत्तत्संबन्धी नक्रतरङ्गेन प्रथमा या वा (?) ।

धातुसमभिव्याहृतपदार्थनिष्ठफलेच्छानुकूलेच्छाविषयरूपनिमित्तस्य कर्मणा संयोगसमवायात्मकसंबन्धे तादृशनिमित्तवाचकात्सप्तमीविधायकात् ' निमित्तात्कर्मयोगे ' इत्यनुशासनात्—

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

इत्यादौ सप्तमी । द्वीपिनिष्ठप्राणवियोगेच्छानुकूलेच्छाविषयचर्महेतुका तदर्था वा क्रियेति बोधः । हेतुतृतीयायास्तादर्थ्यचतुर्थ्याश्च बाधिकेयम् ' मुक्ताफलायकरिणं रघुवीर हन्ति ' इत्यादौ क्रियार्थोपपदेति चतुर्थी । योगाभावे तु वेतनेन धान्यं लुनाति वेतनाय वेति प्रयोगः । वेतनहेतुकं तदर्थं वा धान्यकर्मकं लवनमिति बोधः ।

कर्तृकर्मणोः स्वनिष्ठक्रियाद्वारकेतरकर्तृकर्मनिष्ठक्रियालक्षकत्वे विवक्षिते लक्षककर्तृकर्मवाचकात्सप्तमीविधायकात् ' यस्य च भावेन भावल-

क्षणम् ' इत्यनुशासनाद्गोषु दुह्यमानासु गत इत्यादौ कर्मणि ब्राह्मणेष्वधीयानेषु इत्यादौ कर्तरि सप्तमी । वर्तमानदोहनकर्मीभूतगोनिष्ठज्ञापकतानिरूपितज्ञाप्यतावद्गमनाश्रय इति बोधः । वर्तमानाध्ययनकर्तृभूतब्राह्मणनिष्ठज्ञापकतेत्यादिपूर्ववत् । दुग्धास्वित्यत्र वर्तमानध्वंसप्रतियोगिदोहनकर्मीभूतेत्यादि प्राग्वत् । धोक्ष्यमाणास्वित्यत्र विद्यमानप्रागभावप्रतियोगिदोहनकर्मीभूतेत्यादिप्राग्वत् । यत्र च लक्ष्यलक्ष्यणभावो न विवक्षितस्तत्र गावो दुह्यन्ते चैत्रो गत इत्येव प्रयोगः । विवाहे नान्दीमुखं कुर्यादित्यत्र विवाहपदेन तत्प्राक्कालो लक्ष्यते इत्यधिकरणे सप्तमी । राहूपरागे स्नायादित्यादौ राहूपरागादिपदेन तदाश्रयः काल उच्यते । गवां दोहे गत इत्यादौ निमित्तसप्तमीति व्यवहारोऽपि अधिकरणसप्तमीमादायैव । ननु निमित्ते सप्तमीविधानं नास्तीति ( ? ) शयानेन चैत्रेण भुक्तमित्यत्र न, एककर्तृकत्वात् ।

यत्तु व्युत्पत्तिवादे शयनभोजनक्रिययोः समानकालीनत्वेऽपि तत्र लट्प्रत्ययेनैव समभिव्याहाराद्भोजनादिसमानकालीनत्वं शयनक्रियाया बोध्यतेऽतो न सप्तमी , अन्यतस्तदनभिधान एव सप्तमीविधानादित्युक्तं तन्न, गोषु दुह्यमानास्वित्यादिमुख्योदाहरणस्य भवद्रीत्या भेदाभावात् ।

क्रियार्हाणां क्रियाकर्तृत्वे विवक्षिते तथा क्रियानर्हाणां तदभावे विवक्षते तथा क्रियार्हाणां तदभावे क्रियानर्हाणां तस्मिन्विवक्षिते सति सप्तमीविधायकात् ' अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च ' इत्यनुशासनेन सत्सु तरत्सु असन्त आसते असत्सु तिष्ठत्सु सन्तस्तरन्ति, इत्यत्र कर्तृसमर्पकात्सप्तमी । इह प्रथमवाक्यद्वये औचित्यं व्यङ्ग्यं, सत्सु तिष्ठत्सु असन्तस्तरन्ति असत्सु तरत्सु सन्तस्तिष्ठन्ति इह तद्द्वयेऽनौचित्यं व्यङ्ग्यम् । औचित्यानौचित्यरूपव्यङ्ग्यव्यञ्जकभावसंबन्धे सप्तमी । अत एव न यस्य च भावेनेत्यनेन गतार्थता । अन्ये तु व्यर्थमिदमित्याहुः । कैयटादयस्तु लक्ष्यलक्षणभावाविवक्षायामिदमित्याहुः ।

षष्ठी चानादरे इत्यनेन अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ । रुदति रुदतो वा प्राव्राजीदित्यत्र अनादरविशिष्टं प्रव्रजनं धात्वर्थः । वैशिष्ट्यं च सामानाधिकरण्य-स्वोत्तरकालिकत्वाभ्याम् । रोदनर्तृपुत्रादिज्ञाप्यमनादरविशिष्टं व्रजनमिति बोधः ॥ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च इत्यनुशासनाद्गवां गोषु वा स्वामीत्यादौ

षष्ठीसप्तम्यौ । निरूपकतारूपः संबन्धो विभक्त्यर्थः । तथा च गोनिष्ठस्वत्वनिरूपितस्वामित्ववानिति बोधः । गवां गोषु वा प्रसूतः गा एवानुभवितुं जात इत्यर्थः । गवां गोषु वा दायाद इत्यत्र गोसंबन्धिदायकर्मकादानकर्तेति बोधः । दायमादत्तेऽसौ दायादः विभक्त्यर्थस्य समुदायसंबन्धेऽप्यवयवेन दायेनापि संबन्धः । तथा च गवाद्यात्मकस्यांशस्यादातेत्यर्थः । गवामश्वेषु च स्वामीति न प्रयोगः । उभयत्र समानविभक्तिकत्वनियमात् कृञ्चेति सूत्रे भाष्ये तथैव स्पष्टत्वात् ।

तदेकव्यापारतया सेवायामायुक्तकुशलपदयोर्योगे षष्ठीसप्तमीविधायकात् 'आयुक्तकुशलाभ्यां चासेवायाम्' इत्यनुशासनादायुक्तः कुशलोवा हरिपूजने हरिपूजनस्य वेत्यादौ षष्ठीसप्तम्यौ । हरिपूजनविषयकतात्पर्यवानिति बोधः । कौशलवानिति वा । विषयसप्तम्यां प्राप्तायां वचनम् ।

पदोपात्तजातिगुणक्रियासंज्ञाभिः पृथक्करणं निर्धारणं, प्रतियोगितावच्छेदकमनुष्यत्वगोत्वादेर्निर्धारणविषयीभूते ब्राह्मणादौ सत्त्वे प्रतियोगितावच्छेदकमनुष्यत्वादिविशिष्टवाचकात्षष्ठीसप्तमीविधायकात् 'यतश्च निर्धारणम्' इत्यनुशासनान्नृणां नृषु वा द्विजः श्रेष्ठः, गवां गोषु वा कृष्णा बहुक्षीरा, गच्छतां गच्छत्सु वा धावन् शीघ्रः, अमीषां छात्राणां देवदत्तः पटुरित्यादौ षष्ठीसप्तम्यौ । अत्र निर्धारणं विभक्त्यर्थः । तथा च श्रेष्ठाभिन्नः नरप्रतियोगिकनिर्धारणविषयो ब्राह्मणः इति बोधः । एवमन्यत्राप्यूह्यम् । नरस्य क्षत्रियः शूर इति स्यादिति चेदत्र केचित्—एकवचनभिन्नयोरेव षष्ठीसप्तम्योरुक्तनिर्धारणबोधकत्वव्युत्पत्तिस्वीकारः । अन्ये तु व्यक्तिपक्षे तादृशव्युत्पत्तिस्वीकारेऽपि जातिपक्षे तादृशप्रयोगे क्षत्यभावात् । अत एव 'द्वन्द्वः सामासिकस्य च' इति गीता संगच्छते । मिदचोऽन्त्यात्परः इति सौत्रप्रयोगश्च संगच्छते । भवदुक्तरीत्या त्वनयोरसाधुता युक्ता । ननु नराणां मध्ये क्षत्रियः शूरतम इत्यत्र मध्यशब्देनैव निर्धारणस्योक्तत्वात् षष्ठी न स्यात् इति चेत् सत्यं, नेयं निर्धारणषष्ठी किं तु मध्यशब्दयोगे संबन्धसामान्ये षष्ठी, सप्तमी त्वत्रासाधुरेवेति केचित् । अन्ये तु निर्धारणवाचिनो मध्ये इत्यव्ययस्य तदर्थकषष्ठ्या सह संभेदे हे चैत्रेत्यादाविवान्यतरवैयर्थ्यम् । एवं च नरेषु मध्ये इत्यपि साध्वेव । ननु द्रव्येषु घटो गन्धवानित्यपि स्यादिति चेन्न । प्रकृत्युपात्तद्रव्यैकदेशपृथिव्येकदेशत्वात् । इह च

साक्षात्तदेकदेशग्रहणात् । यद्वा विशेषस्येतरव्यावृत्तधर्मवत्त्वं निर्धारणं, तथा च क्षत्रियान्यनरत्वावच्छिन्नवृत्तिभेदप्रतियोगिशूरतमाभिन्नः क्षत्रिय इति बोधः ।

निर्धारणप्रतियोगितावच्छेदकमनुष्यत्वगोत्वादेर्निर्धारणविषयीभूते राक्षसादावसत्त्वरूपेऽत्यन्तभेदे पञ्चमीविधायकेन 'पञ्चमीविभक्ते' इत्यनुशासनेन माथुराः पाटलिपुत्रकेभ्यः आढ्यतरा इत्यत्र पञ्चमी, पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः । अन्ये तु पाटलिपुत्रधनाधिकधनवन्तो माथुराः । एवं वैश्यशौर्याधिकशौर्यवन्तः क्षत्रिया इत्यादि बोधमाहुः ।

प्रतिपर्यनूनां प्रयोगाभावे साधुनिपुणयोर्योगेऽर्चायां गम्यमानायां संवन्धे सप्तमीविधायकात् 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः' इत्यनुशासनान्मातरि साधुर्निपुणो वेत्यत्र सप्तमी । मातृसंवन्धिपूजनविषयककौशल्यवानिति बोधः ।

प्रकर्षेण सितः शुक्ल इति यौगिकार्थातिरिक्तरूढ्यासक्तवाचकप्रसितोत्सुकाभ्यां योगे विषयसप्तम्यर्थे पाक्षिकतृतीयाविधायकात् 'प्रसितोत्सुकाभ्यां तृतीया च' इत्यनुशासनात् प्रसित उत्सको वा हरिणा हरौ वेत्यादौ तृतीयासप्तम्यौ । हरिविषयकसक्तियावानिति बोधः ।

नक्षत्रवाचिप्रकृतेः 'नक्षत्रेण युक्तः कालः' इत्यणप्रत्यये तस्य 'लुबविशेषे' इति लुपि कृते नक्षत्रयुक्तकालप्रतिपादकादधिकरणसप्तमीतृतीयाविधायकात् 'नक्षत्रे च लुपि' इत्यनुशासनात् 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्' इत्यादावधिकरणे पाक्षिकतृतीयासप्तम्यौ । मूलनक्षत्रकालाधिकरणकं देवीकर्मकमावाहनमिति बोधः ।

शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यामधिकरणे पाक्षिकसप्तमीपञ्चमीविधायकात् 'सप्तमीपञ्चम्यौ कारकमध्ये' इत्यनुशासनादद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येदित्यादौ सप्तमीपञ्चम्यौ । स्वानन्तरदेशकालवृत्तित्वं विभक्त्यर्थः । तेनैतद्दिवसाधिकरणकभोजनोत्तरकालिकमेतद्दिवसानन्तरद्व्यहानन्तरवर्तियद्भोजनं तदाश्रय इत्यर्थः । एतद्देशाधिकरणकस्थित्याश्रयकर्तृकमेतद्देशानन्तरक्रोशानन्तरस्थितलक्ष्यकं व्यधनमिति बोधः ।

अधिकशब्दयोगेऽस्मान्मन्द इत्यादाविव 'पञ्चमी विभक्ते' इत्यनेन

पञ्चम्यामेव प्राप्तायां ‘ तदस्मिन्नधिकम् ’ इति, ‘यस्मादधिकम्’ इति च निर्देशात्सप्तमी पञ्चमी चेष्यते । लोके लोकाद्वाऽधिको हरिरित्यादौ प्रतियोगित्वरूपः संबन्धो विभक्त्यर्थः । लोकप्रतियोगिकाधिक्यवदभिन्नो हरिरिति बोधः ।

आधिक्यप्रतियोगिनि ऐश्वर्यप्रतियोगिन्यनुयोगिनि च कर्मप्रवचनीययोगे सप्तमीविधायकात् ‘ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ’ इत्यनुशासनादुपपरार्धे हरेर्गुणाः, अधि रामे भूः, अधि भुवि रामः, इत्यादौ सप्तमी । प्रतियोगित्वानुयोगित्वरूपः संबन्धो विभक्त्यर्थः । परार्धप्रतियोगिकाधिक्यवदभिन्ना हरिसंबन्धिगुणाः, रामप्रतियोगिकस्वत्वाश्रया भूः, भूवृत्तिस्वत्वप्रतियोगी राम इति बोधः ॥

इति श्रीमन्मौनिकुलतिलकायमानगोविन्दभट्टात्मजरघुनाथभट्टसुतश्रीकृष्णभट्टविरचितो लघुविभक्त्यर्थनिर्णयः समाप्तः ॥

॥ शुभं भूयात् ॥

---

# शाब्दबोधप्रकाशिका १२.

सेविता सर्वगीर्वाणैः सेवकाभीष्टदायिनी ।
भव्याय भवतां नित्यं भवताद्भवभामिनी ॥ १ ॥
नत्वा शिवपदं रामकिशोरेण विरच्यते ।
सुबोधाऽबुधबोधार्थं शाब्दबोधप्रकाशिका ॥ २ ॥

**शाब्दबोधे तु सर्वत्र क्रियामुख्यविशेष्यता ।**
**दोषग्रस्ताऽप्रमाणा च प्रथमान्तार्थमुख्यता ॥ १ ॥**

चैत्रो ग्रामं गच्छतीत्यादौ ग्रामाभिन्नाश्रयनिष्ठसंयोगानुकूलश्चैत्रकर्तृको वर्तमानकालवृत्तिर्व्यापार इत्याद्याकारकः क्रियामुख्यविशेष्यकः सर्वत्र शाब्दबोधः ।

ननु ग्रामनिष्ठसंयोगानुकूलव्यापारानुकूलवर्तमानकृतिमांश्चैत्र इत्याद्याकारको नैयायिकाभ्युपगतः प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधः कुतो नाङ्गीक्रियत, इत्याह—दोषग्रस्तेति । शाब्दबोधस्य प्रथमान्तार्थमुख्यविशेष्यकत्वे पश्य मृगो धावतीत्यत्र धावनस्य दर्शनकर्मत्वं नोपपद्यते । न च तत्र प्रथमान्तार्थस्य मृगस्यैव दृशिक्रियाकर्मत्वं, त्वमित्यध्याहृतप्रथमान्तपदार्थस्य तु मुख्यविशेष्यत्वमिति वाच्यम् । मृगकर्तृकोत्कटधावनक्रियाविशेष्यस्यैव दृशिक्रियाकर्मत्वेन प्रतिपिपादयिषितत्वात् । किंच धावनक्रियाविशिष्टमृगस्य दृशिक्रियाकर्मत्वे विवक्षितलाभेऽपि मृगपदाद्द्वितीयापत्तिर्दुर्वारा । धावनक्रियायास्तत्कर्मत्वे तु न द्वितीयापत्तिः । धातुतिङन्तयोः प्रातिपदिकत्वाभावात् । कर्मत्वं तु संसर्गतया भासते । न च शाब्दबोधस्य प्रथमान्तार्थमुख्यविशेष्यकत्वपक्षेऽपि धावनक्रियाविशिष्टस्य मृगस्य दृशिक्रियायां कर्मतासंबन्धेनान्वयान्न मृगपदाद्द्वितीयापत्तिः, प्रातिपदिकार्थविशेष्यत्वेन कर्मत्वादिविवक्षायामेव द्वितीयादिविधानात्, अत एवार्घो नम इत्यादावर्घादिपदार्थस्य नमःपदार्थत्यागे कर्मतासंबन्धेनान्वयादर्घादिपदात्प्रथमैवेति वाच्यम् । निपातातिरिक्तप्रातिपदिकार्थस्य धात्वर्थेऽभेदातिरिक्तसंबन्धेन साक्षादन्वयस्याव्युत्पन्नत्वात् । अन्यथा चैत्रो ग्रामो गच्छति, चैत्रस्तण्डुलः पचतीत्यादिरपि प्रयोग आपद्येत । अत्रापि ग्रामतण्डुलादेर्गमनपचनादौ कर्म-

तासंबन्धेनान्वयसंभवात्। नापि—धावनानुकूलकृतिविशिष्टमृगरूपवाक्यार्थस्यैव दृशिक्रियाकर्मत्वं, वाक्यस्य तु प्रातिपदिकत्वाभावान्न द्वितीयापत्तिः, कर्मत्वं तु संसर्गतया भासते—इति वाच्यम्। नीलो घटः पश्यतीत्यादिप्रयोगविरहेण वाक्यार्थस्यापि धात्वर्थे कर्मत्वादिसंसर्गेणान्वयस्याव्युत्पन्नत्वात्। "श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः" इति त्वार्षम्। नापि तमित्यध्याहाराददोष इति वाच्यम्। वाक्यभेदापत्तेः।

ननु भवन्मतेऽपि 'दृश्यन्ते मृगा धावन्ति, मृगी धावति मारय, अश्वो गच्छत्यानय' इत्यादावध्याहारस्यावश्यत्वाद्वाक्यभेदो दुष्परिहरः। किं च तिङर्थविशेष्यतापन्नातिरिक्तनिपातेतरप्रातिपदिकार्थस्यैव धात्वर्थेऽभेदातिरिक्तसंबन्धेनान्वयस्याव्युत्पन्नत्वमभ्युपगन्तव्यम्। तेन पश्य मृगो धावतीत्यादौ तिङर्थविशेष्यतापन्नस्य मृगादिपदार्थस्य कर्मतासंबन्धेन दर्शनादिक्रियायामन्वये न किमपि बाधकमिति। एवं पश्य मृगो धावति मारय, अश्वो गच्छत्यानय इत्यादौ सर्वत्रैकवाक्यत्वमभ्युपपद्यत इतिशाब्दबोधस्य प्रथमान्तार्थमुख्यविशेष्यकत्वे न कोऽपि दोष इत्यभिप्रायेणाह—अप्रमाणा चेति। शाब्दबोधस्य प्रथमान्तार्थमुख्यविशेष्यकत्वं निर्दोषमपि प्रमाणशून्यम्। तस्य क्रियामुख्यविशेष्यकत्वे तु 'भावप्रधानमाख्यातम्' इति यास्कोक्तं 'क्रियाप्रधानमाख्यातम्' इतिरूपप्सूत्रस्थभाष्यं च प्रमाणमिति। भावः क्रिया, आख्यातं तिङन्तम्। भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य, तत्र भावः प्रधानमिति निरुक्तभाष्यम्। आख्यातस्य क्रियाप्रधानत्वं शाब्दबोधस्य क्रियामुख्यविशेष्यकत्व एवोपपद्यते न तु प्रथमान्तार्थस्य मुख्यविशेष्यत्वे। नच पाचकादिकृदन्तवत् पचतीत्याद्याख्यातस्यापि साधनप्रधानत्वमेवास्तु। चैत्रो ग्रामं गच्छति, चैत्रस्तण्डुलं पचतीत्यादौ शाब्दबोधस्य च प्रथमान्तार्थमुख्यविशेष्यकत्वमेवास्तु, किमाख्यातस्य क्रियाप्रधानत्वस्वीकारेणेति वाच्यम्। तथा सति पचन् पठति, पाचको गायति, पचता पठ्यते, पाचकेन गीयते, पक्तवता भुज्यते, पचतो धनं, पाचकस्य गृहं, पक्तवतो गृहमित्यादिवत् पचति पठति, पचति गायति, पचति पठ्यते, पचति गीयते, अपाक्षीद्भुज्यते,पचति धनं, पचति गृहम् अपाक्षीद्गृहमित्यादीनामपि प्रयोगाणां तत्तदर्थे प्रामाण्यप्रसङ्गात्। तथा चोक्तम्—

यथा कृदन्तवाक्येऽस्य साधनस्य क्रियान्तरैः।
संबन्धः स्यात्तथेहापि नाख्याते स कथं भवेत्॥

पचतो धनमित्येवं तिङापि स्याद्धनान्वयः ।
क्रियायास्तु विशेष्यत्वे सर्वमेतददूषणम् ।। इति

किं च भगवद्भाष्यकारदर्शितयुक्तेरप्याख्यातस्य क्रियाप्रधानत्वमवगम्यते । तथाहि—कथं ज्ञायते क्रियाप्रधानमाख्यातं द्रव्यप्रधानं नामेति । यत् क्रियां पृष्टस्तिङाचष्टे—किं देवदत्तः करोति ? पचतीति । द्रव्यं पृष्टः कृताचष्टे । कतरो देवदत्तः यः कारको हारक इति रूपप्सूत्रे भाष्ये उक्तम् । किं देवदत्तः करोतीति द्रव्यं पृष्टः करोतिश्च क्रियासामान्यवचनः, तत्र विशेषपरिज्ञानाय किंशब्दः क्रियाविशेषणं प्रवर्तते । क्रियाविशेषणत्वाच्च किमित्येतद्द्वितीयान्तं नपुंसकं च । प्रकरणादिवशाच्च क्रियाप्रश्नावगतिः । गुणद्रव्यविशेषस्यापि प्रश्नस्य संभवात् । वायकः किं शुक्लं वस्त्रं करोत्यथ कृष्णं, तथा किं शाटकं करोत्यथ प्रावारकमिति । द्रव्यं पृष्ट इति । यद्यपि यः पचतीति तिङन्तेनाप्युत्तरं भवति तथाऽपि सर्वनाम्ना परामृश्य पाकक्रियायाः यः कर्ता स देवदत्त इत्यभिधानात् केवलेनाख्यातेनोत्तरस्यादानादाख्यातस्य साधनप्रधानत्वाप्रसङ्गः । पदान्तरेण हि द्रव्योपलक्षणाय गुणभावं क्रिया नीयते इति कैयटः । अथाख्यातस्य क्रियाप्रधानत्वे तदधीते तद्वेदेत्यादिसूत्रविहिताणादिप्रत्ययान्तवैयाकरणादिपदस्य व्याकरणकर्मकाध्ययनाद्यर्थकत्वमेव स्यान्न तु तदाश्रयार्थकत्वमिति । तथा च सति वैयाकरणः पुरुष इत्यादौ वैयाकरणादिपदार्थस्य व्याकरणकर्मकाध्ययनादेराश्रयतासंबन्धेनैव पुरुषादिपदार्थान्वयो वाच्यः । स च न संभवति निपातातिरिक्तप्रातिपदिकार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात् । अन्यथा पाकश्चैत्रो व्याकरणाध्ययनं पुरुष इत्यादिरपि प्रयोग आपद्येत । तत्राप्याश्रयतासंबन्धेन पाकव्याकरणाध्ययनादिपदार्थस्य चैत्रपुरुषादावन्वयसंभवादिति चेदुच्यते । अधीत इत्यादौ लौकिकप्रयोगे क्रियाप्रधानत्वेऽपि सौत्रे साधनमेव प्रधानत्वेन विवक्षितम् । वैयाकरणादिपदस्य व्याकरणकर्मकाध्ययनादिकर्तर्येव शिष्टैः प्रयुक्तत्वात् । फलानुरोधाच्च कल्पनाया इति । तदधीत इतिसूत्रे शब्देन्दुशेखरकारेणाप्यधीत इत्यादीनां लौकिकप्रयोगे क्रियाप्रधानत्वेऽप्यत्र कारकप्रधानतेत्युक्तम् । एतदभिप्रायेणैव तत्र सूत्रे मनोरमाकारेणापि द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यादिति व्याख्यातम् । तद्धितार्थस्य क्रियात्वाभावेऽप्यलौकिके द्वितीयान्तात्प्रत्ययवि-

धानसामर्थ्यादेव द्वितीया । एवं तत्र भव इत्यादिविषये सप्तम्याद्यपीति शेखरकारः । एवं चाख्यातस्य क्रियाप्रधानत्वे न काप्यनुपपत्तिरिति । किंच शाब्दबोधस्य क्रियामुख्यविशेष्यकत्वमङ्गीकुर्वतां भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीदित्येतद्विषयकं पचादयः क्रिया भवतिक्रियायाः कर्त्र्यो भन्वतीति भूवादिसूत्रभाष्यमप्यनुकूलम् । नह्येतद्भाष्यबोधितमुक्तस्थलेषु पचादिक्रियाणां भवतिक्रियाकर्तृत्वं शाब्दबोधस्य प्रथमान्तार्थमुखविशेष्यकत्वमूरीकुर्वतां मत उपपद्यते । न च तन्मतेऽपि भवतिपचतीत्यादिषु भवतिपदलभ्यस्य भवनकर्तृत्वस्याश्रयतासंबन्धेन, भवनकर्तुर्वाऽभेदसंबन्धेन, पचादिक्रियास्वन्वयात्पचादिक्रियाणां भवतिक्रियाकर्तृत्वमुपपद्यत इति वाच्यम् । तन्मते धात्वर्थविशेष्यतापन्नाख्यातार्थस्य प्रथमान्तपदोपस्थाप्य एवान्वयाद्भावनायाः साधनस्य वा विशेष्यत्वेनान्वययोग्यः कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्य इति तेषां सिद्धान्ताद्धात्वर्थविशेष्याख्यातार्थविशेष्यतापन्नस्य पदार्थान्तरे विशेषणत्वेनान्वयस्याव्युत्पन्नत्वाद्भवतिपदार्थविशेष्यतापन्नपचादिक्रियाणां तिङर्थेऽन्वयानुपपत्तिश्च । भवति पचतीत्यादिषु प्रतीयमानभवनं भवतेरर्थस्तेन भवति पक्ष्यति भवत्यपाक्षीदित्यत्र भविष्यदतीतपाकभवनस्य वर्तमानत्वाभावेऽपि न क्षतिस्तत्प्रतीतिविषयताया वर्तमानत्वस्य सत्त्वात् । एतद्भाष्यप्रमाणबलतः कालाविवक्षायामपि क्वचिल्लट् भवतीत्यप्याहुः । एवं च तिङन्तं तिङन्तस्य विशेषणं न भवतीत्यपास्तमुक्तभाष्येण तिङन्तस्य विशेषणताया बोधितत्वात् । वृद्धैरप्युक्तम्—

सुबन्तं हि यथानेकं तिङन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥

इति उक्तभाष्यव्याख्याने कैयटोपाध्यायेनाप्युक्तम् । नन्वन्यत्रोक्तं तिङभिहितो भावः क्रियया समवायं न गच्छति, नहि भवति पचतिपठतीति । ततश्च तेनैतद्विरुध्येत । अत्राहुः, कर्तृकर्मभावेन क्रिया आख्यातक्रियया संबध्यत एव । भवति पचति, पश्य मृगो धावतीति । करणादिभावेन तु न संबध्यते तथा प्रयोगादर्शनादिति । अन्यत्र सार्वधातुके यगित्येतत्सूत्रभाष्ये । समवायं संबन्धं न गच्छति न प्राप्नोति । आकाङ्क्षाविरहात् क्रियान्तरस्य विशेषणं न भवतीत्यर्थः। पचति पठतीति सामानाधिकरण्यसंबन्धेनान्वयाभिप्रायेण । कर्तृकर्मभावेनेति । आख्यातक्रि-

याया: कर्तृकर्मभावेन क्रियान्तरेणान्वयं प्रत्याकाङ्क्षा स्वीक्रियते, फलानुरोधेन तस्याः कल्पनीयत्वादित्याशयः । ननु क्रियायाः साध्यरूपत्वात्कथं क्रियान्तरं प्रति तस्याः कर्तृकर्मभावः सिद्धं हि कारकं भवतीति नाशङ्कनीयम्, एकं प्रति साध्यस्याप्यर्थस्यापरं प्रति साधनत्वसंभवात् ।

सार्वधातुके यगितिसूत्रे क्रिया क्रियासमवायं न गच्छति पचति पठतीत्येतद्भाष्यव्याचक्षाणेन कैयटोपाध्यायेनाप्येवमुक्ते तदर्थप्रतिपादिका हरिकारिकाऽपि दर्शिता तथाहि—क्रिया क्रिययेति । ननु भवति पचति, पश्य मृगो धावतीति कर्तृकर्मभावेन क्रिया क्रियया संबध्यत एव । एवं तर्हि करणादिरूपेण समवायं न गच्छतीति विवक्षितम् । ननु साध्यत्वात्क्रियायाः कथं क्रियान्तरं प्रति कर्तृकर्मभावः विषयभेदादेकस्याप्यर्थस्य साध्यसाधनभावसंबन्धसंभवाददोषः । तदुक्तं हरिणा—

यत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया ।
सिद्धा तु यस्मिन्साध्यत्वं न तमेव पुनः प्रति ॥
मृगो धावति पश्येति साध्यसाधनरूपता ।
तथा विषयभेदेन सरणस्योपपद्यते ॥ इति ।

भवति पचतीति एककर्तृकवर्तमानकालवृत्तिपाककर्तृकभवनमित्यन्वयबोधः । पश्य मृगो धावतीति मृगाभिन्नैककर्तृकवर्तमानकालवृत्तिधावनकर्मकं मदिच्छाविषयभूतं त्वत्कर्तृकं दर्शनमित्यन्वयबोधः । करणादीति । एतेन तिङन्तस्य तिङन्तविशेषणत्वाभ्युपगमे पुत्रजन्मना पिता हृष्यति, तन्तुसंयोगात्पटो जायते इत्यादिवत् पुत्रो जायते पिता हृष्यति, तन्तवः संयुज्यन्ते पटो जायते, इत्यादेरप्येकवाक्यत्वमापद्येत, अत्रापि करणत्वादिसंबन्धेन तिङन्तार्थस्यापरतिङन्तार्थेऽन्वयसंभवादित्यपास्तम् । तिङन्तक्रियायास्तिङर्थेऽभेदसंबन्धेन धात्वर्थे तु कर्मतासंबन्धेनैवान्वयस्य व्युत्पन्नत्वात् । एवं च—

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ।

इति वाक्यपदीयोक्तं तिङन्तक्रियाया असत्त्वभूतत्वं करणादिभावेन क्रियान्तरानन्वयित्वरूपं लिङ्गसंख्यानन्वयित्वरूपं वा बोध्यम् । किं च चैत्रो ग्रामं गच्छतीत्यादिशाब्दबोधस्य शाब्दबोधत्वेनापि क्रियामुख्यविशेष्यकत्वसिद्धिः । तथाहि—चैत्रो ग्रामं गच्छतीति शाब्दबोधः

क्रियामुख्यविशेष्यकः, शाब्दबोधत्वात्, चैत्रेण सुप्यत इति शाब्दबोधवत्। प्रथमान्तार्थमुख्यविशेष्यकत्वं प्रति तु न शाब्दबोधत्वं साधकम्, गच्छति पचति चैत्रेण सुप्यत इत्यादिप्रथमान्तासमभिव्याहारस्थलीयशाब्दबोधे व्यभिचारादिति।

ननु भवन्मतेऽपि घटोऽयमित्यादिक्रियापदासमभिव्याहारस्थलीयशाब्दबोधे व्यभिचार इत्याह–

**यत्र क्रियापदं नास्ति प्रथमान्तं च वर्तते।**
**तत्रापि लट्परस्यास्तेरध्याहाराददूषणम् ॥ २ ॥**

यत्र घटोऽयमित्यादौ क्रियापदं नास्ति प्रथमान्तपदं च वर्तते तत्रास्ति लट्परमध्याहृत्य शाब्दबोधस्य क्रियामुख्यविशेष्यकत्वमुपपादनीयम्। न च तत्र विनाऽपि क्रियापदं प्रथमान्तपदादेव शाब्दबोधोदयसंभवात् क्रियापदाध्याहारे प्रमाणाभाव इति वाच्यम्। तिङ्समानाधिकरणे प्रथमेति वार्तिकेन प्रातिपदिकस्य तिङ्सामानाधिकरण्य एव ततः प्रथमाविधानात्तत्र क्रियाध्याहारं विना प्रथमाया एवानुपपत्तेः। अत एव वार्तिककारेणाप्युक्तम्—अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति। भवन्तीपर इति। भवन्तीशब्दो "भुवो झिच्" इति औणादिकसूत्रेण सिद्धो वर्तमानकालार्थकोऽपि तद्वाचकत्वलक्षणया लट्परः। तेन प्रथमपुरुषे लडन्तास्तिधातुरप्रयुज्यमानक्रिये वाक्ये नित्यमध्याह्रियत इति कात्यायनवाक्यार्थः। सूत्रे भुव इति वदतेरवतेश्चोपलक्षणम्। तेन वदतिरवतिरित्यपि सिद्धम्। झिच्प्रत्ययान्ताः सर्वे स्त्रियां द्वयोर्वा, किंवदन्ती जनश्रुतिरिति दर्शनात्। इतिपदवाक्यरत्नाकरः। स्त्रियां द्वयोर्वेति मतभेदेन बोध्यम्। अनभिहित इतिसूत्रे कैयटोपाध्यायोऽपि भवन्तीपर इति लट्पर इत्यर्थ इति व्याचख्यौ। प्रथमपुरुष इति प्रायिकम्। त्वं वक्ता अहं श्रोतेत्यादौ प्रथमोपपत्त्यर्थं मध्यमोत्तमपुरुषयोरपि लट्परस्यास्तेरध्याहारस्यावश्यकत्वात्। त्रयः काला इत्यत्र त्रयाणां कालानां सत्ताया वर्तमानत्वाभावेन लट्परस्यास्तेरध्याहारासंभवेऽपि तत्र प्रतीयन्त इति क्रियापदमध्याहृत्य प्रातिपदिकस्य तिङ्सामानाधिकरण्यमुपपादनीयम्। न चैवमस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति वार्तिककारोक्तनियमभङ्गप्रसङ्ग इति वाच्यम्। तत्रास्तेरुपलक्षणत्वात्। तिङ्समानाधिकरणे प्रथमेत्यनुरोधेन यत्र क्रियापदं नास्ति तत्र प्रथमोपप-

त्यर्थे यथासंभवं क्रियाध्याहारः कर्तव्य इति वार्तिककाराशयात्। अथवा सन्तीत्येवाध्याहार्यं कालस्त्वविवक्षितः। वर्तमाने लडित्यत्र वर्तमानपदस्य भूतभविष्यद्भिन्नपरत्वाल्लटो नानुपपत्तिः। प्रतीयमानभवनं वाऽस्तेरर्थः। अयं घटो नीलो न, चन्द्र इव मुखमित्यादौ तु नीलादिपदं नीलभिन्न-परम्। चन्द्रादिपदं च चन्द्रादिसदृशपरम्। नञिवौ तु द्योतकौ, निपा-तत्वादुपसर्गवदिति। नीलचन्द्रादिपदानामपि तत्र तिङ्सामानाधिकरण्यं सूपपादमेव। न चोपसर्गाणामेव द्योतकत्वे प्रमाणाभावाद्दृष्टान्तासिद्धिरिति वाच्यम्, सुखमनुभवति सुखमनुभूयते गुरुमुपास्ते गुरुरुपास्यते इत्यादौ कर्तरि कर्मणि च लकारोपपत्त्यर्थं धातोस्तत्तदर्थे वृत्तेरावश्यकत्वेनोपसर्गाणां द्योतकताया एव युक्तत्वात्। न च तत्रानुभूप्रभृतिसमुदायस्यैवानुभवाद्यर्थ-वाचकत्वं धातुत्वं च। तथा च सुखमनुभवति चैत्र इत्यादौ चैत्रादेर्धात्वर्थ-व्यापाराश्रयत्वेन कर्तृत्वात्सुखमनुभूयत इत्यादौ च सुखादेर्धात्वर्थव्याप्य-त्वेन कर्मत्वात्कर्तरि कर्मणि च लकार उपपद्यते इति न भूप्रभृतिधातोस्त-दर्थपरत्वमङ्गीकृत्योपसर्गस्य द्योतकत्वमङ्गीक्रियते इति वाच्यं, गौरवात्। भूवादयो धातव इत्येतेन भ्वादिगणपठितानामेव धातुसंज्ञाविधानात् अनुभूप्रभृतीनां गणे पाठाभावेन धातुत्वासंभवाच्च। न च बहुलमेतन्निदर्श-नमित्यस्य दशगणीपाठो बहुलमिति व्याख्यानपक्षे चुलुम्पादिवदपठिता-नामप्यनुभूप्रभृतीनां गणे पाठमङ्गीकृत्य धातुत्वमङ्गीकार्यमिति वाच्यम्। अन्वभवदनुबुभूषतीत्यादावड्द्विर्वचनव्यवस्थानुपपत्तेरनुबभूवेत्यादौ धा-तोरनेकाच्त्वेनाम्प्रत्ययप्रसङ्गाच्च। तस्मात्तत्र तद्धातोरेव लक्षणया तत्तदर्थ-परत्वमुपसर्गाणां तु द्योतकत्वमिति सिद्धम्। अत एव त्रिलोचन-दासेनापि कातन्त्रवृत्तिपञ्जिकायां देवदेवं प्रणम्यादाविति श्लोकव्या-ख्याने प्रणम्येति प्रशब्देन प्रकर्षार्थो द्योत्यत इत्युक्तम्। तत्र नम-धातुरेव लक्षणया प्रकृष्टनमस्कारपरः प्रोपसर्गस्तु तात्पर्यग्राहक इति तदाशयः। इत्थं चोपसर्गाणां द्योतकत्वे सिद्धे तद्दृष्ट्याऽन्येषामपि निपा-तानां द्योतकत्वमेव न तु वाचकत्वमिति सिद्धम्। अत एव भट्टो-जिभट्टेनापि शब्दकौस्तुभे अथ शब्दानुशासनमित्यत्राथशब्दः प्रार-म्भस्य द्योतको न तु वाचको निपातत्वादुपसर्गवदित्युक्तम्। तत्र शब्दा-नुशासनपदमेव लक्षणया शब्दानुशासनप्रारम्भपरमथशब्दस्तु तात्पर्य-ग्राहक इति तदाशयः। आरोपितो ब्राह्मणोऽब्राह्मण इत्यादौ नञ्स-मासे उत्तरपदार्थप्रधानत्वं च पूर्वपदस्य नञ्निपातस्य द्योत्यार्थापेक्षया

बोध्यः । तेनोत्तरपदार्थप्रधानः समासस्तत्पुरुष इति तत्पुरुषलक्षणस्य न तत्राव्याप्तिरिति । न च निपातानां द्योतकत्वे तेषामर्थवत्त्वाभावेन प्रातिपदिकत्वाभावात्तेभ्यः सुबुत्पत्तिर्न स्यात् । ततश्च हरो हरिश्च ते सेव्या उमोमेशश्च मे गतिरित्यादौ चप्रभृतिनिपातस्य पदत्वाभावेन तदुत्तरस्य युष्मदस्मदोः पदस्य तेमेप्रभृत्या..............................(?)

चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥ इति ।
उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥

इति वृद्धोक्तावुपसर्गपदं निपातस्योपलक्षणम् । धातुपदं पदान्तरस्येति बोध्यमिति कोण्डभट्टः ।

चतुर्विधे इति । तिङन्तसुबन्तोपसर्गनिपातरूपे । नोपसर्गनिपातयोरिति । अत्रोपसर्गस्य पृथगुपादानं गोबलीवर्दन्यायेन । व्यापारो वृत्तिः सा च शक्तिलक्षणान्यतररूपा । तत्र शक्तिरस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छेति प्राचीननैयायिकाः । नव्यनैयायिकास्तु अस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छा शक्तिर्नत्वीश्वरेच्छा । तेनाधुनिकसंकेतशालिनां देवदत्तादिसंज्ञाशब्दानां तत्तद्व्यक्तिविशेषे गुणवृद्ध्यादिशब्दानां च तत्तद्वर्णविशेषे शक्तिरस्त्येवेत्याहुः ।

नागेशभट्टमतानुयायिनस्तु शक्तेरिच्छात्मकत्वे अयं शब्दोऽस्मिन्नर्थे शक्त इति व्यवहारानुपपत्तिः शब्दस्येच्छाश्रयत्वाभावात् । तस्माच्छक्तिः पदपदार्थयोः संबन्धविशेषः । स च वाच्यवाचकभावरूपः । तथा चोक्तं संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः । योऽयं शब्दः सोऽर्थो योऽर्थः स शब्द इति । स्मृत्यात्मक इत्यनेन ज्ञातस्यैव संकेतस्य शक्तिबोधकत्वं दर्शितम् । संकेतग्रहप्रकारमाह न्यायवाचस्पत्ये—सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्संकेत इति । सुग्रह इति । शोभनो ग्रहो यस्येति सुग्रहो नतु सुखेन गृह्यत इति सुग्रहः, खलर्थयोगे षष्ठ्यप्राप्तेः । तादात्म्यं च तदभिन्नत्वेन व्यवहार्यत्वं, तस्य च तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः

शक्यः, आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते । शब्दार्थयोस्तादात्म्यादेव श्लोकमशृणोदर्थं शृणोति अर्थं वदतीत्यादिव्यवहारः, ओमित्येकाक्षरं ब्रह्म, रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः, सुरथो नाम राजाऽभूत्, शब्दानुशासनं नाम शास्त्रं, वृद्धिरादैच्, इत्यादौ सामानाधिकरण्येन प्रयोगश्चोपपद्यते । न च शब्दार्थयोस्तादात्म्यस्वीकारे मधुशब्दोच्चारणे मुखे माधुर्यरसास्वादापत्तिर्वह्निशब्दोच्चारणे च मुखे दाहापत्तिरिति वाच्यम् । अभेदस्याध्यस्तत्वाद्वस्तुतो भेदस्य सत्त्वेन तादृशापत्तिविरहादित्याहुः ।

नैयायिकास्त्वयं शब्दोऽस्मिन्नर्थे शक्त इत्यत्र स्वजन्यबोधविषयत्वप्रकारकेच्छार्थकशकधातूत्तरविहितक्तप्रत्ययस्य निरूपकतासंबन्धेनाश्रयत्वरूपकर्तृत्वविशिष्टबोधकत्वाददोषः । शब्दार्थयोरितरेतराध्यासमङ्गीकृत्य तन्मूलकस्य तत्तदर्थाभिन्नत्वेन व्यवहार्यतारूपस्य तत्तच्छब्दनिष्ठतत्तदर्थतादात्म्यस्य तत्तच्छब्दशक्तिग्राहकत्वकल्पनं तु सति सदध्वनि कदध्वावलम्बनमिव न रोचते सद्भ्यः । श्रावणबोधस्येव शाब्दबोधस्यापि शृणोत्यर्थत्वान्नार्थं शृणोतीति प्रयोगानुपपत्तिः । एवं च आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतावप्यात्मनः श्रोतव्यतोपपद्यते । अर्थं वदतीत्यस्य तु शब्देन प्रतिपादयतीत्यर्थः । ओमित्येकाक्षरं ब्रह्म इत्यत्र उपस्थितस्वरूपशक्तस्येतिशब्दस्य स्वरूपप्रतिपाद्ये लक्षणा । तदेकदेशे च स्वरूपे ओमित्यस्याभेदेनान्वयः । तेनैव संबन्धेन एकाक्षरपदार्थस्यापि तत्रान्वय इति । तथा च एकाक्षराभिन्नस्वरूपप्रतिपाद्यं ब्रह्मेत्यन्वयबोधः । न चापशुः पशुरद्रव्यं घट इत्यादिप्रयोगविरहेण पदार्थैकदेशे पदार्थान्तरस्यान्वयस्याव्युत्पन्नत्वादत्र पदार्थैकदेशे स्वरूपे ओमित्यस्य एकाक्षरपदार्थस्य चान्वयो न संभवतीति वाच्यम् । घटादन्य इत्यादौ अन्यपदार्थैकदेशे भेदे पञ्चम्यर्थप्रतियोगितायाः अन्वयदर्शनात् व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि पदार्थान्तरान्वयस्य क्वचिदभ्युपगमात् । अत एव गभीरायां नद्यां घोष इत्यत्र नदीपदलक्ष्यार्थस्य नदीतीरस्यैकदेशे नद्यां गभीरापदार्थस्यान्वय इति । यदि च तत्र नदीपदस्य गभीरनदीतीरे लक्षणा, गभीरापदं तु तात्पर्यग्राहकमित्युच्यते, तदात्रापि इतिशब्दस्य ॐस्वरूपैकाक्षरप्रतिपाद्ये लक्षणा ओंपदमेकाक्षरपदं च तात्पर्यग्राहकमिति । एवमुत्तरत्रापि बोध्यम् ।

अथवा एकाक्षरपदस्यैकाक्षरप्रतिपाद्ये लक्षणा । तदेकदेशे च एकाक्षरे ओमित्यस्याभेदेनान्वयः । वस्तुतस्तु ब्रह्मपदस्य ब्रह्मप्रतिपादके लक्षणेत्यदोषः । रामेतिद्व्यक्षरं नाम मानभङ्गः पिनाकिन इत्यत्र नामपदस्य नामप्रतिपाद्ये लक्षणा तदेकदेशे च नाम्नि द्व्यक्षरपदार्थस्य रामेतीत्यस्य चाभेदेनान्वयः । तथा च रामस्वरूपद्व्यक्षराभिन्ननामप्रतिपाद्यः पिनाकिनो मानभङ्ग इत्यन्वयबोधः । ननु नामशब्दस्य लक्षणया नामप्रतिपाद्यार्थकत्वे मानभङ्गशब्दसमानाधिकरणत्वात्तस्य पुल्लिङ्गत्वं कथं न स्यात् । समानाधिकरणविशेषणस्य विशेष्यसमानलिङ्गत्वनियमात् । न चानियतलिङ्गसमानाधिकरणविशेषणस्यैव विशेष्यसमानलिङ्गत्वनियमः । कथमन्यथा वेदाः प्रमाणं शब्दः प्रमाणमित्यत्र प्रमाणशब्दस्य न पुंलिङ्गत्वमिति । उक्तं च रत्नमालायाम्

विशेषणे समानार्थे विशेष्यस्य विभक्तयः ।
जहल्लिङ्गे तु तल्लिङ्गं संख्याऽप्युत्सर्गतस्तथा ॥

इत्यत्र सूत्रे पुरुषोत्तमविद्यावागीशेन—अजहल्लिङ्गे तु न विशेष्यलिङ्गं यथा द्रव्यं घटो व्यक्तिर्जात्याश्रयः स्त्री रत्नं विद्या धनं प्रमाणं शब्द इत्यादीति । कातन्त्रपरिशिष्टकारेणापि विशेष्यवदेकाधिकरणस्य प्रायेणेत्यत्र सूत्रे नियतलिङ्गानामसंभवे व्यत्ययः । शेषो यवागूः शेषं यवागूः अर्धो भाण्डम् अर्धः शिखासंबाधः शालासंबाधो वर्त्मसंबाधं वृहदपि तद्बभूव वर्त्मेत्यपि पठन्ति । प्रकाण्डं युवतिः आदिः कलत्रं गुणः प्रधानम्, उपसर्जनं स्त्री । संभवे तु शेषं दधि शेषः ओदन इत्युक्तम् । असंभवे विशेष्यगतलिङ्गग्रहणासंभवे इति गोपीनाथतर्काचार्यः । एवं च प्रकृते नामशब्दस्य नियतलिङ्गत्वेन पुल्लिङ्गमानभङ्गशब्दसमानाधिकरणत्वेऽपि न स्वलिङ्गपरित्याग इति वाच्यम् । नामशब्दस्यात्र लाक्षणिकत्वाल्लाक्षणिकस्य तु नियतलिङ्गस्यापि भिन्नलिङ्गशब्दसमानाधिकरणस्य स्वलिङ्गपरित्यागदर्शनाद्यथा क्रोष्टुनेऽरण्याय शिरो मे श्रीति (?) नाशङ्कनीयम् । नियतलिङ्गस्य लाक्षणिकस्य भिन्नलिङ्गसमानाधिकरणत्वेन स्वलिङ्गपरित्यागस्य काचित्कत्वात् । तथा चोक्तं कातन्त्रपरिशिष्टे—औपचारिके कचित्स्वलिङ्गं कुन्तेनदं स्त्रिया यष्ट्या पुरुषेण क्वचिदन्यथा क्रोष्टुने अरण्याय शिरो मे श्रियशो मूर्खमिति भाष्यम् (?) । अतो हि स्मरन्ति लिङ्गस्य लोकाश्रयत्वादिति । औपचारिक इति औपचारिकाः प्रायशः

स्वलिङ्गाः कचित्तु लक्ष्यादन्यलिङ्गा इति रहस्यमिति तर्काचार्यः। स्मरन्तीति वृद्धा इति शेषः। भाष्येऽप्युक्तं लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति।

सुरथो नाम राजेत्यत्र सुरथशब्दस्य वा सुरथशब्दप्रतिपाद्ये लक्षणा तदेकदेशे च सुरथशब्दे नामपदार्थस्याभेदसंबन्धेनान्वयः। तथा च नामाभिन्नसुरथशब्दप्रतिपाद्यो राजेत्यन्वयबोधः। शब्दानुशासनं नाम शास्त्रमित्यत्राप्येवम्। वृद्धिरादैच् इत्यत्र तु वृद्धिशब्दस्य वृद्धिसंज्ञके लक्षणेति न कुत्रापि काऽप्यनुपपत्तिरिति। एवं च अस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छैव शक्तिर्न तु पदपदार्थयोरितरेतराध्यासमूलको ग्राह्यः तादात्म्यसंबन्धविशेष इत्याचक्षते। वस्तुतस्तु—

अर्थाभिधाने शब्दानां योग्यता शक्तिरुच्यते।
सा प्रसिद्धाऽप्रसिद्धा च द्विविधा परिकीर्तिता॥
आद्या गवादिशब्दानामर्थे गोत्वादिशालिनि।
देवदत्तादिशब्दानां तत्र तत्रापुरातनी॥
मुख्यार्थे यत्र शब्दस्य तात्पर्यं नेति गम्यते।
शक्तिरारोपिताऽन्यार्थे लक्षणा तत्र कथ्यते॥

गङ्गायां घोष इत्यादौ गङ्गादिपदस्य मुख्यार्थनदीविशेषादौ तात्पर्याभावात्तत्तीरादौ तद्गतपावनत्वादिधर्मप्रतिपत्तये शक्यतावच्छेदकारोपात् शक्तिरारोपितेति प्रतीयते। सैव लक्षणेत्युच्यते। उक्तं च दर्पणे—

मुख्यार्थबाधे तद्योगे ययाऽन्यार्थः प्रतीयते।
रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता॥ इति।

अर्पिता वक्तृपुरुषेणारोपिता। तद्वृत्तिधर्मस्य तद्वृत्तित्वेन प्रतिपादनमारोपः। काव्यप्रकाशेऽपि—

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।

कर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगाद्गङ्गायां घोष इत्यादौ च गङ्गादीनां घोषाद्यधिकरणत्वासंभवान्मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च संबन्धे रुढितः प्रसिद्धेः, गङ्गातट इत्यादेः प्रयोगाद्येषां न तथा प्रतिपत्तिस्तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्यार्थो लक्ष्यते यत्स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो

लक्षणा। मुख्यार्थस्य बाध इति। मुख्यार्थस्य तात्पर्यविषयान्वयबाध इत्यर्थः। ज्ञात इति शेषः। तेन कुन्ताः प्रविशन्तीत्यत्र कुन्तपदस्य कुन्तविशिष्टे छत्रिणो गच्छन्तीत्यत्र च छत्रिपदस्य छत्र्येकसार्थवाहिषु छत्र्यच्छत्रिषु न लक्षणानुपपत्तिः। प्रयोजनादिति तु प्रायिकम्। तेन क्वचिद्विनाऽपि प्रयोजनं लक्षणेति बोध्यम्। मुख्येनेति बाधितान्वयप्रतियोगित्वेनोपस्थितेन मुख्यार्थेन कारणभूतेनेत्यर्थः। अमुख्यार्थो लक्ष्यते इति अमुख्यार्थविषयकबोधानुकूलव्यापार इत्यर्थः। यदिति क्रियाविशेषणम्। सान्तरार्थनिष्ठो मुख्यार्थबाधग्रहादिव्यवधानेनोपस्थिते लक्ष्यार्थे स्वजन्यबोधविषयतासंबन्धेन स्थितः। एतेनात्र ग्राहककथनेन ग्राह्याया वक्तृतात्पर्यात्मिकाया लक्षणायाः सिद्धिः। यदित्यव्ययं ययेत्यर्थकम्। वृत्तावप्येवम्। आरोपिता वक्तृपुरुषेण लक्ष्यार्थविषतया जनिता क्रियावृत्तिरिति व्याख्यानं शक्यसंबन्धो लक्षणेति नैयायिकमतं चापास्तम्। लक्षणाया वृत्त्यन्तरत्वे मानाभावाद्गौरवात्फलाभावाद्दर्पणे 'लक्षणा शक्तिरर्पिता' इत्यनेनारोपितशक्तेर्लक्षणात्वस्य स्पष्टतयाऽभिधानाच्च। लक्षणाया वृत्त्यन्तरत्वमङ्गीकृत्य लक्षणाशक्तिरर्पितेत्यत्र शक्तिर्वृत्तिरिति व्याख्यातमेव। भाष्येऽपि सति तात्पर्ये सर्वे सर्वार्थवाचका इत्युक्तम्। लक्षणाया भेदास्तु काव्यप्रकाशादावुक्ता इह तु नोच्यन्ते ग्रन्थगौरवभयात्प्रकृतानुपयोगित्वाच्च। इदानीं प्रकृतमनुसरामः।

किं च निपातानां वाचकत्वे समुच्चयः शोभनः, समुच्चयं जानाति समुच्चयो ज्ञायते इत्याद्यर्थे च शोभनं च जानाति, च ज्ञायते इत्यादिरपि प्रयोगः स्यात्। तथा घटस्य समुच्चय इह घटस्याभाव इत्यादाविव घटश्च इह घटो नेत्यादावपि घटादिपदात्षष्ठी स्यादिति। तस्मान्निपातानां द्योतकत्वमेव न वाचकत्वमिति। अभियुक्तैरप्युक्तम्—

द्योतकाः प्रादयो येन निपाताश्चादयस्तथा।
उपास्येते हरिहरौ लकारो दृश्यते यथा॥
तथान्यत्र निपातेऽपि लकारः कर्मवाचकः।
विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः॥

येन हेतुना प्रादय उपसर्गा द्योतकास्तेनैव हेतुना तद्दृष्ट्या चप्रभृतयो निपाता अपि द्योतका एव न वाचकाः। अथोपसर्गाणामेव द्योतकत्वे प्रमाणाभावाद्वाचकत्वमेव तषां कुतो नेति, तथा च दृष्टान्तासिद्धि-

रिति चेन्नैवम् उपसर्गाणां वाचकत्वे उपस्येते इत्यत्र त्वया उपशब्दस्य प्रीतिर्धातोश्च व्यापारविशेषोऽर्थस्तयोश्च जन्यजनकभावः संसर्गो वाच्यः । एवं च प्रीतिरूपफलस्य धात्वर्थत्वाभावेन हरिहरयोर्धात्वर्थफलाश्रयत्वाभावात्कर्मत्वाभावेन धातोरकर्मकत्वात्कर्मणि लकारो नोपपद्येत ।

नन्वेवं चेदुपसर्गाणां द्योतकत्वमस्तु, अन्येषां निपातानां तु वाचकत्वमेवेति कुतो नाङ्गीक्रियत इति । न चोपसर्गे दृष्टान्तमाश्रित्यान्येषां निपातानां निपातत्वेन हेतुना द्योतकत्वं साधनीयमिति वाच्यम् । व्यभिचारसंशयेन निपातत्वस्य द्योतकत्वसिद्धि प्रत्यप्रयोजकत्वादिति चेन्नैवम् । साक्षात्प्रभृतीनां वाचकत्वेऽपि साक्षात्क्रियते हरिर्नमस्क्रियते गुरुरित्यादौ दर्शितरीत्या कर्मणि लकारानुपपत्तेरिति मनसिकृत्याह उपास्येते इत्यादि कर्मवाचक इत्यन्तम् । उपास्येते इति । अथोपास्यते हरिरिति प्रथमोपस्थितमेकवचनं विहाय केनाभिप्रायेण द्विवचनमुदाहृतमिति चेदुच्यते—उपसर्गस्य वाचकत्वेऽपि भावे प्रत्यये उपास्यते हरिरिति प्रयोग उपपद्यते । एकवचनस्य भावेऽपि साधुत्वादित्येकवचनं नोदाहृतम्। ननु भावे प्रत्यये कृते तत्र हरिपदस्य प्रथमान्तत्वानुपपत्तिः । संबन्धे षष्ठीप्रसङ्गात् । न चोपशब्दार्थप्रीतौ हरिपदार्थस्याधेयतासंबन्धेनान्वयान्न हरिशब्दात्षष्ठीप्राप्तिः । प्रातिपदिकार्थविशेष्यत्वेन संबन्धविवक्षायामेव षष्ठीविधानादिति वाच्यम् । राज्ञो धनमित्याद्यर्थे राजा धनमित्यादिप्रयोगविरहेण प्रातिपदिकार्थयोरभेदातिरिक्तसंबन्धेनान्वयस्याव्युत्पन्नतया हरिपदार्थस्योपशब्दार्थप्रीतावाधेयतासंबन्धेनान्वयासंभवादिति चेदत्रोच्यते—प्रातिपदिकार्थयोरभेदातिरिक्तसंबन्धेनान्वयोऽव्युत्पन्न इत्यत्र यदि निपातातिरिक्तत्वेन प्रातिपदिकं विशेष्यते तदा हरिपदार्थस्योपशब्दार्थप्रीतावाधेयतासंबन्धेनान्वय उपपद्यते इत्यभिप्रायेणैकवचनं नोदाहृतमिति । तथान्यत्रेति । अन्यत्र साक्षात्क्रियते हरिर्नमस्क्रियते गुरुरित्यादिस्थलीयसाक्षादादौ ।

अथैवं चेत्ते प्राग्धातोरित्यनुशासनाद्धातोः प्राङ्नियतप्रयोगाणामुपसर्गाणामिवान्येषामपि गतिसंज्ञकनिपातानां द्योतकत्वमस्तु चप्रभृतिनिपातानां तु वाचकत्वमेवेत्यपि न वाच्यम् । भूयान्प्रकर्ष इत्याद्यर्थे भूयः प्रेत्यादिप्रयोगस्येव शोभनः समुच्चय इत्याद्यर्थे शोभनं चेत्यादिप्रयोगस्यापि विरहेण प्रादीनामिव चप्रभृतिनिपातानामपि द्योतकत्वस्यावश्यमभ्युपगन्तव्यत्वादित्याह—विशेषणेति । आदिना समुच्चयं जानातीत्याद्यर्थे

च जानातीत्यादौ द्वितीयाद्यर्थकर्मादिपरिग्रहः। एतेनोपसर्गाणामिवान्येषामपि निपातानां द्योतकत्वमेव न वाचकत्वमिति सिद्धम्। अत एव घटमानय नीलं, चन्द्रमिव मुखं पश्यतीत्यादौ घटमुखादिशब्दसमानाधिकरणत्वान्नीलचन्द्रादिपदाद्द्वितीयादयोऽप्युपपद्यन्ते।

एवं च न पचति चैत्र इत्यादौ चैत्रकर्तृकपाकाभाव इत्यादिरूपशाब्दबोधस्य नञर्थाभावमुख्यविशेष्यकत्वात्कथं शाब्दबोधस्य सर्वत्र क्रियामुख्यविशेष्यकत्वमित्यपास्तम्। तत्रापि नञ्निपातस्य द्योतकत्वेन धातोरेव लक्षणया पाकाद्यभावार्थकत्वेन शाब्दबोधस्य क्रियामुख्यविशेष्यकतायाः सूपपादत्वात्। क्रियापदेन तत्र धात्वर्थस्य ग्रहणादिति।

परे तु उपसर्गा एव द्योतका अन्ये तु निपाता वाचका एव। न चैवं चेत्साक्षात्करोति नमस्करोति हरिमित्यादौ हर्यादेः कर्मतानुपपत्तिर्धात्वर्थफलाश्रयत्वाभावादिति वाच्यम्। तत्र लक्षणया साक्षात्पदस्य प्रत्यक्षविषयपरतया नमःपदस्य च स्वापकर्षावधित्वप्रकारकबोधविषयपरतया नीलं करोति घटमित्यादौ घटादेरिव तत्र हर्यादेः कर्मत्वसंभवात्। नापि समुच्चयः शोभन इत्याद्यर्थे च शोभनमित्यादिः प्रयोगः स्यादिति वाच्यम्। निपातार्थे शब्दान्तरार्थस्य तादात्म्यसंबन्धेनान्वयस्य प्रायेणाव्युत्पन्नत्वात्। 'कार्तिक्यादौ यन्न दानं तदत्यन्तविनिन्दितम्' इत्यादौ क्वचिदेव तथाऽन्वयस्य दर्शनात्। नापि समुच्चयोऽस्ति समुच्चयं जानातीत्यर्थे चास्ति च जानातीत्यादिरपि प्रयोग आपद्येतेति वाच्यं, निपातार्थस्य कर्तृकर्मादिभावेनान्वयस्याव्युत्पन्नत्वात्। नापि घटस्य समुच्चयः, इह घटस्याभाव इत्यादाविव घटश्च, इह घटो नेत्यादावपि घटादिपदात्षष्ठीप्रसङ्ग इति वाच्यं, निपातार्थे घटादिपदार्थस्य प्रतियोगितासंबन्धेनान्वयादेव तत्र घटादिपदात्षष्ठीप्रसङ्गाभावात्, प्रातिपदिकार्थविशेष्यत्वेन संबन्धविवक्षायामेव षष्ठीविधानात्। प्रातिपदिकार्थयोर्भेदेनान्वयोऽव्युत्पन्न इत्यत्र तु प्रातिपदिकं निपातातिरिक्तत्वेन विशेषणीयमित्याहुस्तन्मते अयं घटो न नीलः, चन्द्र इव मुखमित्यादौ नीलचन्द्रादिपदस्य तिङ्समानाधिकरणत्वाभावात्प्रथमोपपत्त्यर्थं, घटमानय न नीलं, चन्द्रमिव मुखं पश्यतीयादौ नीलचन्द्रादिपदस्य घटमुखशब्दसमानाधिकरणत्वाभावात्ततो द्वितीयाद्युपपत्त्यर्थं च यत्नः कर्तव्य इति।

एके त्वन्वयव्यतिरेकाभ्यां सर्व एव निपातास्तत्तदर्थवाचकाः। अन्यथा

तत्तत्प्रकृतेरेव लक्षणया तत्तदर्थपरत्वसंभवेन तत्तत्प्रत्ययानामपि तत्तदर्थे शक्तिर्विलुप्येत। स्फुटीकृतं च निपातानां वाचकत्वमव्ययं विभक्तीति सूत्रे भगवता भाष्यकारेण कैयटोपाध्यायेन च। यत्र तु क्वचिदनुभवति सुखं चैत्रः, सुखमनुभूयते चैत्रेण, गुरुमुपास्ते शिष्यः, उपास्यते गुरुः शिष्येणेत्यादौ वाचकत्वं न संभवति तत्र धातोस्तत्तदर्थे वृत्तिरन्वादिनिपातास्तु तात्पर्यग्राहकाः प्रणमतीत्यादौ तु प्राद्युपसर्गाः प्रकृष्टाद्यर्थस्य वाचका एव। स्पष्टं चैतद्धातोः कर्मण इति सूत्रे भाष्यप्रदीपे इत्याहुः।

इदमेव मतं न्याय्यमिति प्रतिभाति नः। एतन्मते अयं घटो नीलो न, चन्द्र इव मुखमित्यादौ प्रथमोपपत्त्यर्थमस्तिद्वयमध्याहर्तव्यम्। तत्र चायं घटो नीलो नेत्यत्रास्तिद्वयाध्याहारे अयं घटोऽस्ति नीलो नास्तीति भवति। तत्र नीलो नास्तीत्यत्रास्तेरसाधारणधर्मरूपो भावोऽर्थः। नञश्चात्यन्ताभावः। तथा च नीलत्वाभाववान् घटोऽस्तीति बोधः। चन्द्र इव मुखमित्यत्र त्वस्तिद्वयाध्याहारे चन्द्रोऽस्तीव मुखमस्तीति भवति। तथा च चन्द्रसत्तासदृशी मुखसत्तेति बोधः। सादृश्यं च कान्तिमत्त्वादि। तत्तद्धर्मसमानाधिकरणत्वेन कान्त्यादिमद्भवनं वाऽस्तेरर्थः।

यद्वा यथा सुखमनुभवति चैत्रः, सुखमनुभूयते चैत्रेण, गुरुमुपास्ते शिष्यः, उपास्यते गुरुः शिष्येणेत्यादौ कर्तृकर्मप्रत्ययोपपत्त्यर्थं धातोरनुभवोपासनाद्यर्थे वृत्तिमङ्गीकृत्यानूपादि उपसर्गाणां द्योतकत्वमङ्गीक्रियते। तथा अयं घटो नीलो न, चन्द्र इव मुखमित्यादावपि तिङ्समानाधिकरणत्वं विना प्रथमाया अनुपपत्तेस्तदुपपत्त्यर्थं नीलादिपदस्य नीलादिभिन्ने चन्द्रादिपदस्य तु चन्द्रादिसदृशे लक्षणामङ्गीकृत्य नञिवयोर्द्योतकत्वमङ्गीकार्यमित्येकमेवास्तिपदमध्याहर्तव्यमित्यदोषः।

तथा च—

वाचकत्वं निपातानामन्वयव्यतिरेकतः।
क्वचित्फलानुरोधेन द्योतकत्वमपीष्यते॥

इति स्थितम्। एवं च घटमानय न नीलं चन्द्रमिव मुखं पश्यतीत्यादावपि नञिवयोर्द्योतकत्वमङ्गीकृत्य शाब्दबोधस्य क्रियामुख्यविशेष्यकत्वमुपपादनीयमिति न काऽप्यनुपपत्तिरित्यलमधिकेन।

विष्णुप्रियायां जातेन रुद्रनारायणात्सतः।
महेशसदृशाद्रामकिशोरेण द्विजातिना॥ १॥

कृता या विदुषां प्रीत्यै शाव्दबोधप्रकाशिका ।
तत्रायं शाव्दबोधस्य क्रियामुख्यत्वनिर्णयः ॥ २ ॥

---

ननु शाव्दबोधे कीदृशे स्थले कस्मिन्पदार्थे कस्य पदार्थस्यान्वय इत्याकाङ्क्षायामाह—

**कर्त्राख्यातस्थले तत्र चैत्रादेः कर्तुराश्रये ।**
**तिङर्थेऽस्य तु धात्वर्थे व्यापारांशेऽन्वयो मतः ॥ ३ ॥**
**ग्रामादेः कर्मणस्तत्र द्वितीयार्थेऽन्वयोऽस्य तु ।**
**धातुवाच्ये फले तस्य तथा व्यापार इष्यते ॥ ४ ॥**

तत्र शाव्दबोधे आख्यातस्थले चैत्रो ग्रामं गच्छतीत्यादौ चैत्रादेः कर्तुस्तिङर्थे आश्रये अभेदसंबन्धेनान्वयः । तत्राश्रयस्य तिङर्थत्वं तु "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यत्र चकारेण "कर्तरि कृत्" इत्यतः 'कर्तरि' इत्यनुवृत्तेः । तत्रादेशानां तिवादीनां शक्तिमादेशित्वेन प्रकल्पितेषु लकारेषु प्रकल्प्यत इत्युक्तमिति बोध्यम् । आदेशानामेव तत्तदर्थे शक्तिर्न त्वादेशिनामिति वैयाकरणसिद्धान्तात् ।

कर्तृत्वं च धात्वर्थव्यापाराश्रयत्वं, तथा चोक्तं—

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते , इति ।

यद्यपि क्रिया व्यापारः स च वृत्त्या धातूपस्थापितो धातुजन्यबोधमुख्यविशेष्योऽर्थस्तथाऽपि वृत्त्या धातूपस्थापितस्य धातुनोक्तेत्यनेनैव लाभादत्र क्रियापदं धातुजन्यबोधमुख्यविशेष्यार्थपरम् । तथा च धातुनोक्तक्रिय इत्यस्य वृत्त्या धातूपस्थापितधातुजन्यबोधमुख्यविशेष्यार्थाश्रय इत्यर्थः ।

एवं च वृत्त्या तद्धातूपस्थापिततद्धातुजन्यबोधे मुख्यविशेष्यार्थाश्रयत्वं तद्धात्वर्थकर्तृत्वमिति कर्तृलक्षणम् । 'स्वतन्त्रः कर्ता' इति सूत्रे स्वतन्त्रपदमप्येतत्परमिति बोध्यम् । फलाश्रयेऽतिव्याप्तिवारणाय तद्धातुजन्यबोधमुख्यविशेष्येति । मुख्यपदानिवेशेऽपि तत्रैवातिव्याप्तिरिति । मुख्यत्वमिह वृत्त्या तद्धातूपस्थापितार्थाविशेषणत्वम् । कर्माख्यातसमभिव्याहृतत्वेन तद्धातुर्विशेषणीयः । तेन गम्यते ग्रामो गन्तव्यो ग्राम इत्यादौ धातोः फलमुख्यविशेष्यकबोधजनकत्वेऽपि न क्षतिः । उपस्थापितान्तनिवेशाच्च पक्त्वा भुङ्क्ते इत्यत्र पाकसमानकर्तृकं पाकोत्तर-

कालनिष्ठं वर्तमानकालवृत्त्येककर्तृकं भोजनमिति वाक्यार्थबोधमुख्य-विशेष्यभोजनाश्रयस्य न पचधात्वर्थकर्तृत्वम्। तादृशवाक्यार्थबोधस्य पचधातुजन्यत्वमप्यस्तीति तदापत्तिः। आश्रयत्वं च चैत्रो गच्छतीत्यादौ चैत्रादिपदस्य शरीरपरत्वे समवायसंबन्धेनात्मपरत्वे तु स्वजनककृत्या-श्रयत्वरूपपरंपरासंबन्धेन स्वसमवायिशरीरावच्छिन्नत्वरूपपरंपरासंबन्धेन वा। रथो गच्छतीत्यादौ समवायसंबन्धेन चैत्रो जानातीच्छतीत्यादौ चैत्रादिपदस्य शरीरपरत्वेऽवच्छेदकतासंबन्धेनात्मपरत्वे तु समवायसं-बन्धेन। शब्दादर्थः प्रकाशते, देवदत्ताय रोचते मोदकः, इत्यादौ तु विषयतासंबन्धेन। कन्यां विवहतीत्यादौ तु विवाहस्य ग्रहणरूपत्वे चैत्रादिपदस्य च शरीरपरत्वेऽवच्छेदकतासंबन्धेनात्मपरत्वे तु समवायसं-बन्धेन। विवाहस्य दानरूपत्वे तु उद्देश्यतासंबन्धेन। अत्र घटोऽस्तीत्यादौ तु स्वरूपसंबन्धेन। घटो नश्यति, ज्ञानं नश्यतीत्यादौ तु प्रतियोगितासं-बन्धेन बोध्यम्। एवमन्यत्रापि यथानुभवमवगन्तव्यम्।

क्रियाश्रयस्य कर्तृत्वेऽपि क्रियाया धातुलभ्यत्वादाश्रयमात्रं तिङर्थ इति बोध्यम्। अनन्यलभ्यस्यैव शब्दार्थत्वात्।

नैयायिकास्तु—आख्यातस्य कृतिर्वाच्या। गच्छति गमनं करोति, पचति पाकं करोतीति, करोतिना विवरणात्। किं करोतीति कृतिप्रश्ने गच्छति पचतीत्याद्युत्तरस्याख्यातस्य कृत्यर्थकत्वं विनानुपपत्तेश्च नतु कर्ता, अनन्तकृतेः शक्यतावच्छेदकत्वे गौरवात्। गमनानुकूलकृत्याश्रयश्चैत्र इत्याद्यन्वयबोधस्त्वाख्यातार्थस्य कृतेराश्रयतासंबन्धेन प्रथमान्तपदार्थे-ऽन्वयात्। अत्र च—'कथं पुनर्ज्ञायतेऽयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति ? अन्वयव्यतिरेकाभ्याम्। अन्वयाद्व्यतिरेकाच्च। कोऽसावन्वयो व्यतिरेको वा। इह 'पचति' इत्युक्ते कश्चिच्छब्दः श्रूयते—पचशब्दश्चकारान्तः, अतिश-ब्दश्च प्रत्ययः। अर्थोऽपि कश्चिद्गम्यते—विक्लित्तिः कर्तृत्वमेकत्वं च। पठतीत्युक्ते कश्चिच्छब्दो हीयते कश्चिदुपजायते कश्चिदन्वयी। पचछब्दो हीयते, पठशब्द उपजायते, अतिशब्दोऽन्वयी। अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी। विक्लित्तिर्हीयते, पठिक्रियोपजायते, कर्तृत्वं चैकत्वं चान्वयी। तेन मन्यामहे यः शब्दो हीयते तस्यासावर्थो योऽर्थो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायेत, यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयी' इति भूवादिभाष्यमप्यनुकूलम्।

अतिशब्दश्चेति । यद्यप्ययं प्रत्ययसमुदायस्तथाऽपि प्रकृतिभागावबोधपरत्वात्प्रत्ययभागपर्यालोचनेऽनादरादेवमुक्तम् । अथवा पूर्वाचार्यैः कैश्चिद्‌तिः प्रत्ययत्वेन कल्पित इति तदपेक्ष्यैतदुक्तमिति कैयटः । रथो गच्छति चैत्रो जानातीच्छति यतते द्वेष्टि विद्यते निद्रातीत्यादावाश्रयत्वे नश्यतीत्यादौ तु प्रतियोगित्वे निरूढलक्षणेत्याहुः,—तदनुशासनविरुद्धम् । "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यनुशासनेन हि कर्तरि लकारो विधीयते न तु कृतौ । न च तत्र चकारलब्धं कर्तृपदं कर्तृत्वपरमिति वाच्यम् । तथा सति कृतोऽपि कृतिवाचकत्वापत्तेः । "कर्तरि कृत्" इत्यतो हि तत्र कर्तृग्रहणमनुवर्तते । नचेष्टापत्तिः । गन्ता चैत्रः पक्ता चैत्रः इत्यादावन्वयबोधानुपपत्तेः । न च गच्छति चैत्रः, पचति चैत्रः इत्यादावाख्यातार्थकृतेरिव गन्ता चैत्रः पक्ता चैत्रः इत्यादौ कृदर्थकृतेरपि चैत्रादिपदार्थे आश्रयतासंबन्धेनान्वय इति वाच्यम् । निपातातिरिक्तप्रातिपदिकार्थयोरभेदातिरिक्तसंबन्धेन साक्षादन्वयस्याव्युत्पन्नत्वात् । अन्यथा गमनानुकूलकृतिश्चैत्रो द्रव्यत्वं घट, इत्यादयोऽपि प्रयोगा आपद्येरन् ।

किंच कृतां कृतिवाचकत्वे मित्रा पक्त्रीत्यादौ पक्त्र्यादिपदस्य स्त्रीलिङ्गत्वमपि नोपपद्यते , समानाधिकरणविशेषणस्यैव विशेष्यसमानलिङ्गकत्वनियमात् । अन्यथा राज्ञः स्त्रीत्यादौ राजादिपदस्यापि स्त्रीलिङ्गत्वापत्तेः । तस्मात्कृतः कर्तृवाचकत्वमवश्यमभ्युपगन्तव्यम् । तदनुरोधेन च कर्तरि कृदित्यत्र कर्तृपदस्य कर्तृत्वविशिष्टपरताऽवश्यं वक्तव्या । तस्यैव च कर्तृपदस्य "लः कर्मणि च" इत्यत्रानुवृत्तस्य कर्तृत्वपरताया असंभवात् कथमाख्यातस्य कृतिवाचकत्वमनुशासनसिद्धमिति । न च कृतः कर्तृवाचकत्वानुरोधेन कर्तरि कृदित्यत्र कर्तृपदस्य कर्तृत्वविशिष्टपरत्वमस्तु "लः कर्मणि च" इत्यत्रानुवृत्तस्य तु तस्य कर्तृत्वपरत्वमेवेति वाच्यम् । एकस्य कर्तृपदस्य सूत्रद्वयेऽर्थद्वयकल्पने गौरवान्मानाभावात् । गच्छन्तं पचन्तं पचमानं वा चैत्रं पश्येत्यादौ शतृशानजन्तस्यापि कृतिबोधकतापत्त्योक्तयुक्त्याऽन्वयबोधानुपपत्तेर्गच्छन्तीं पचन्तीं पचमानां वा मित्रां पश्येत्यादौ शतृशानजन्तस्य विशेष्यसमानलिङ्गकत्वानुपपत्तेश्च दुर्वारत्वात् । "लः कर्मणि च" इत्यादिना विहितस्यैव हि लटस्तिबादिवच्छतृशानजावप्यादिश्येते ।

किं चाख्यातस्य कृतिवाचकत्वे चैत्रो ग्रामं गच्छति, चैत्रस्तण्डुलं पचतीत्यादौ चैत्रादिपदात्कर्तरि तृतीया प्राप्नोति। तस्य कर्तृवाचकत्वे तु न तृतीयाप्राप्तिः। आख्यातेन कर्तुरभिहितत्वात्। 'कर्तृकरणयोस्तृतीया" इत्यनेन हि अनभिहिते कर्तरि तृतीया विधीयते। तत्रानभिहित इत्यस्य तिङादिभिरनुक्त इत्यर्थः। अथाख्यातस्य कृतिवाचकत्वे कर्तुरनभिहितत्वेऽपि तद्गतसंख्याया आख्यातेनाभिहितत्वादुक्तस्थले तृतीया न भवति। अनभिहित इत्येतद्धि संख्याविशेषणम् अनुक्ते संख्याने इत्यर्थः। अथवा अभिधानमभिहितम् "नपुंसके भावे क्तः" तथा चाभिनभिहिते अनभिधाने संख्याया इत्यर्थः। न चान्यत्र क्लृप्तशक्तेः सुप एव संख्योपस्थितिसंभवे न तिङां तदभिधायकत्वमिति वाच्यम्। चैत्रो मैत्रश्च गच्छत इत्यादौ विनाऽपि तादृशसुपं द्वित्वादिप्रत्ययात्। लाघवादेकवचनत्वादिरूपेणैकत्वादौ शक्तत्वाच्च। सुवेकवचनत्वादिरूपेण शक्तिकल्पने तु गौरवं स्यादिति चेन्न। संख्यायाः शब्दतोऽलाभादध्याहारे च प्रमाणाभावात्कर्मणि द्वितीयेत्यादिसूत्रोपात्तकर्मणीत्यादिनैवाभिहित इत्यस्यान्वयसंभवाच्च।

किं चानभिहितपदस्य संख्यानभिधानपरत्वे चैत्रो ग्रामं गच्छतीत्यादौ कर्त्राख्यातार्थसंख्याया विनिगमनाविरहेण कर्मण्यप्यन्वयापत्तेर्दुर्वारत्वाद्ग्रामादिपदाद्द्वितीयाऽपि न स्यात्। आख्यातस्य कर्तृवाचकत्वे तु तदर्थसंख्यायाः कर्मण्यन्वयो न भवति तस्यैकपदोपात्तत्वाभावात्। एकपदोपात्त एव साधने आख्यातार्थसंख्यान्वयस्य व्युत्पन्नत्वात्। आख्यातस्य कृतिवाचकत्वे तद्वक्तुमशक्यम्। न चाख्यातार्थभावनान्वयिन्येव तदर्थसंख्याया अन्वयः, एकपदोपात्तयोर्भावनासंख्ययोरेकत्रान्वयस्य व्युत्पन्नत्वादिति वाच्यम्। एकपदोपात्तभावनान्वयित्वापेक्षया लाघवेनैकपदोपात्तसाधनत्वस्यैव संख्यान्वयनियामकताकल्पनाया युक्तत्वात्। कर्त्रेकत्वत्वादिना शक्तिकल्पने कर्तुरप्यभिधेयतया शक्यतावच्छेदके शक्ततावच्छेदके च गौरवमधिकं स्यात्।

किंच गन्ता चैत्रः, अधीती ब्राह्मणः, कृतप्रणामो जनः इत्यादिषु कृदन्तादिषु कृत्तद्धितसमासैः संख्याया अनभिधानाच्चैत्रब्राह्मणजनादिशब्देभ्यस्तृतीयापत्तिर्दुर्वारा।

अथ कर्तृकरणयोस्तृतीयेत्यत्र कर्तृपदं कर्तृत्वपरम्। तेनानभिहिते

कर्तृत्वे तृतीया भवति इति सूत्रार्थे चैत्रो ग्रामं गच्छति चैत्रस्तण्डुलं पचतीत्यादिषु चैत्रादिपदान्न तृतीयापत्तिराख्यातेन कर्तृत्वस्याभिहितत्वात्। गन्ता चैत्र इत्यादिषु कृदादिभिः कर्तुरभिहितत्वे कर्तृत्वमप्यभिहितमेवेति न तत्रापि चैत्रादिपदात्तृतीयापत्तिशङ्केति चेदिदमपि न चारुतरमनुशासनस्थकर्तृपदस्य मुख्यार्थत्वसंभवे लक्षणाया अन्याय्यत्वात्।

किं चाख्यातस्य कृतिवाचकत्वे त्वं पचसि, अहं पचामि, चैत्रः पचतीत्यादिषु युष्मदादेः समानाधिकरणत्वाभावेन 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः, अस्मद्युत्तमः, शेषे प्रथमः,' इति सूत्रत्रयोक्ता पुरुषव्यवस्थापि नोपपद्यते। भिन्नाभ्यां रूपाभ्यामेकधर्मिबोधकत्वलक्षणं सामानाधिकरण्यमप्रसिद्धम्। संभवादन्यादृशं तु न वार्यत इति तु बालप्रतारणम्। शब्दशास्त्रे समानाधिकरणपदस्य सर्वत्र तादृशशाब्दसामानाधिकरण्यविशिष्टपरतया दृष्टत्वादत्रान्यादृशसामानाधिकरण्यमादाय पुरुषव्यवस्थोपपदानस्यान्याय्यत्वात्।

एवं चैत्रः पचतीत्यादौ चैत्रादिप्रातिपदिकस्य तिङ्समानाधिकरणत्वाभावेन ततः प्रथमापि नोपपद्यते। तिङ्समानाधिकरणे प्रथमेति वार्तिकेन प्रातिपदिकस्य तिङ्समानाधिकरणत्व एव ततः प्रथमाविधानात्। तथा स पचति तौ पचतस्ते पचन्तीत्यादौ तिङन्तस्य कर्तृपदसमानवचनकत्वनियमोऽपि नोपपद्यते। समानाधिकरणविशेष्यविशेषणपदयोरेव समानवचनकत्वनियमात्। न च पचति पाकं करोतीति यत्नार्थककरोतिनाख्यातस्य विवरणात्तस्य यत्ने शक्तिरवधार्यत इति वाच्यम्। तत्र पाकपदेन धातोर्विक्लित्तिरूपफलार्थकथनेन व्यापारवाचिना च करोतिना तस्य व्यापाररूपार्थकथनेनाख्यातेनैव चाख्यातार्थकथनेन यत्नार्थककरोतिनाख्यातस्य विवरणादिति हेतोरेवासिद्धेः। करोतेर्व्यापारवाचित्वं न तु यत्नवाचित्वमित्यभियुक्तैरप्युक्तम्—

व्यापारो भावना सैवोत्पादना सैव च क्रिया।
कृञोऽकर्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते। इति।

( यदि ? एतेन ) कृधातोर्यत्नार्थकत्वं विना किं करोतीति यत्नप्रश्ने पचतीत्युत्तरं नोपपद्यते इत्यपास्तम्। कृञः क्रियावाचितया किं करोतीत्यस्य क्रियाप्रश्नत्वेन यत्नप्रश्नत्वाभावात्। कृञो यत्नार्थकताविरहात्। न चाख्यातस्याश्रये शक्तावाश्रयत्वस्य स्वरूपसंबन्धविशेषरूपत्वेन नाना

त्वाच्छक्यतावच्छेदके गौरवमिति वाच्यम् । प्रामाणिकगौरवस्यादोषत्वात् । भवन्मतेन रथो गच्छति चैत्रो जानातीत्यादौ आख्यातस्याश्रयत्वे लक्षणाया आवश्यकत्वेन लक्ष्यतावच्छेदकगौरवस्य त्वयाऽपि दुष्परिहरत्वात् । नहि शक्यतावच्छेदकगौरवं दोषो लक्ष्यतावच्छेदकगौरवं न दोष इत्यत्र प्रमाणमस्ति । किं चास्मन्मते आश्रयत्वस्याखण्डोपाधिशक्तिरूपत्वेन न गौरवमिति । कर्तृत्वविशिष्टस्य प्रथमतो भासमानत्वात् । नत्वेतेन कर्तुः कर्त्राख्यातार्थत्वं निराकृतमिति बोध्यम् । तथा सति दर्शितदोषाणां दुर्वारतापत्तेः ।

अथवा शक्तिः कारकमिति पक्षमाश्रित्य भाष्ये कर्त्राख्यातस्य कर्तृत्वमर्थ इत्युक्तम् । तथा चोक्तं हरिणा—

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ॥

स्वाश्रये शक्त्याश्रये अर्थात्कर्तरि कर्मणि च समवेतानां तथा आश्रयान्तरे करणत्वादिशक्त्याश्रयभिन्ने कर्तृत्वशक्त्याश्रये कर्मत्वशक्त्याश्रये च समवेतानां क्रियाणामभिनिष्पत्तौ यत्सामर्थ्यं तत्तत्क्रियानिष्पत्त्यनुकूला कर्तृत्वकर्मत्वकरणत्वादिरूपा शक्तिस्तत्साधनं कारकमित्यर्थः । शक्त्याश्रयस्य कारकत्वेन तद्व्याप्यकर्तृत्वादिना च व्यवहारः शक्तिशक्तिमतोरभेदविवक्षया । एवं च त्वं पचसीत्यादौ सामानाधिकरण्यमपि नानुपपन्नमित्यलमधिकेन ।

अस्येत्यादिः अस्य तिङर्थाश्रयस्य । धात्वर्थ इति । यद्यपि संयोगादिरूपं फलं व्यापारश्च धातोरर्थस्तथाऽपि कर्त्राख्यातार्थाश्रयस्य स्वनिरूपिताधेयतासंबन्धेन व्यापारांश एवान्वयो व्युत्पन्नस्तदाश्रयस्यैव कर्तृत्वादिति भावः ।

यत्तु—कथं पुनर्ज्ञायतेऽयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति प्रागुक्तभूवादिसूत्रभाष्याच्चैत्रो ग्रामं गच्छतीत्यादौ संयोगादिरूपं फलं गम्यादिधातोरर्थः । व्यापारस्तु कर्तृप्रत्ययार्थः । धात्वर्थफलप्रत्ययार्थव्यापारयोर्जन्यजनकभावः संसर्गः । न च तत्र व्यापारस्य कर्तृप्रत्ययार्थताया अभ्युपगमात् व्यापारसत्त्वे फलानुत्पाददशायां पाको भविष्यतीतिप्रयोगस्य, व्यापारविगमे फलसत्त्वे पाको विद्यत इति प्रयोगस्य चापत्तिः, भावविहितघञादीनामपि व्यापारोऽर्थस्तत्तद्विधिसूत्रे भावपदस्य व्यापारपरत्वात्

कर्तृत्वं धात्वर्थानुकूलप्रत्ययार्थव्यापाराश्रयत्त्वम् । कर्मत्वं तु—परसमवेतप्रत्ययार्थव्यापारजन्यधात्वर्थफलाश्रयत्वम् । महीरुहो विहगेन संयुज्यते, घटः पटेन संयुज्यते, जातिर्द्रव्यगुणकर्मसु समवैति, घटो भवति श्वेत इत्यादौ धात्वर्थानुकूलव्यापाराप्रतीतेः संयोगादिमत्त्वमात्रप्रतीतेश्च प्रत्ययस्य व्यापारवाचित्वाभावाद्धातौ न सकर्मकत्वमिति मतं तदयुक्तम् । जिगमिषति—पिपक्षति—इत्यादौ प्रत्ययस्य व्यापारवाचित्वाभावेन सन्प्रत्ययानुपपत्तेरपचत्यपि विक्लित्तिरूपफलानुकूलादृष्टवति पचतीति प्रयोगप्रसङ्गाद्विभागरूपफलानुकूलपूर्वदेशसंयोगवति निश्चलेऽपि त्यजतीति प्रयोगप्रसङ्गाच्च । फलव्यापारयोरुभयोर्धात्वर्थत्वेऽपि भूवादिसूत्रभाष्ये यत्फलमात्रकीर्तनं तत्फलस्योद्देश्यत्वेन प्रधानत्वान्न त्वेतेन व्यापारस्य धात्वर्थत्वं निराकृतमिति बोध्यम् । तथा सति कारकसूत्रभाष्यविरोधापत्तेश्च । तत्र हि व्यापारस्य धात्वर्थत्वमुक्तम् । तथा हि—अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षक्रियाः प्रधानस्य कर्तुः पाकः । अधिश्रयणोदकासेचनतण्डुलावपनैधापकर्षणादिक्रियाः कुर्वन्नेव देवदत्तः पचतीत्युच्यते । तत्र तदापत्तिर्वर्तते एष प्रधानकर्तुः पाकः एतत्प्रधानकर्तुः कर्तृत्वं द्रोणं पचत्याढकं पचतीति कारके सूत्रे भाष्ये उक्तम् । अत्र व्यापारस्य, भूवादिसूत्रभाष्ये च फलस्य धात्वर्थत्वाभिधानात् फलव्यापारयोरुभयोर्धात्वर्थत्वं बहुभिः सुधीभिरङ्गीकृतमित्यवगन्तव्यम्[1] ।

इति शाब्दबोधप्रकाशिका ।

---

१ इयत्येव शाब्दबोधप्रकाशिकोपलब्धा ।



# 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| १ श्रीमद्भगवद्गीता प्रथमो गुच्छः Bhagavat-Geeta with 7 commentaries—आनन्दगिरिकृतटीकासंवलितशांकरभाष्य—जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्व) भाष्य—रामानुजभाष्य—पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी—नीलकण्ठीसमेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ... | ६—०—० | ०—७—० |
| २ श्रीमद्भगवद्गीता द्वितीयो गुच्छः Bhagavat-Geeta with 8 other commentaries—निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता—'तत्त्वप्रकाशिका,' श्रीमधुसूदनसरस्वतीकृता—'गूढार्थदीपिका,' श्रीशङ्करानन्दप्रणीता—'तात्पर्यबोधिनी,' श्रीधरस्वामिकृता—'सुबोधिनी,' श्रीसदानन्दविरचितः—'भावप्रकाशः,' श्रीधनपतिसूरिविरचिता—'भाष्योत्कर्षदीपिका,' दैवज्ञपण्डितश्रीसूर्यविरचिता—'परमार्थप्रपा,' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः—'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहिता । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिषतेति । मू. रू. | १०—०—० | ०—१५—० |
| ३ उत्तरगीता Uttara-Geeta with a commentary—गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम् । मूल्यम् रू. ... ... ... ... | ०—३—० | ०—०—६ |
| ४ श्रीमद्वाल्मीकिरामायणम् । Valmiki Ramayana with 3 well-known commentaries, सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य | | |

वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायण-तिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च सप्तभिः खण्डैः समापयिष्यामः । — मूल्यं — मार्गव्ययः

**बालकाण्डम्** । प्रथमं खण्डम् **Bal Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... ... ३–०–० ०–५–०

**अयोध्याकाण्डम्** । द्वितीयखण्डम् **Ayodhya Kanda,**—उर्ध्वनिर्दिष्टटीकात्रयोपेतम् । मू. रू. ५–०–० ०–७–०

**अरण्यकाण्डम्** । तृतीयखण्डम् । **Aranya Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. २–१२–० ०–४–०

**किष्किन्धाकाण्डम्** । चतुर्थ खण्डम् **Kishkindha Kanda** उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... ... ... ... २–१०–० ०–४–०

५ **स्तोत्रमुक्ताहारः—Stotra-muktahar containing 256 Stotras** अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वमसुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति । मूल्यम् रू. ०–८–० ०–२–०

६ **संस्कारमयूखः—Samskar Mayukha** मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । अत्र संस्काराणां स्वरूपं कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया

च भृशं दुर्बोधो विपरीतबोधकरश्चासीत् । अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमासाद्य विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः । मू. रू. ... ... मूल्यं ०–१२–० मार्गव्ययः ०–१–०

७ आचारमयूखः—Achara Mayukha नीलकंठभट्टकृतः । प्रातःस्मरणादिशयनान्तस्याह्निकक्रियाकलापस्य निरूपणपरो ग्रन्थः । मूल्यम् ... ०–८–० ०–१–०

८ मनुस्मृतिः—Manu Smriti कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. ... ... ... १–८–० ०–३–०

९ विदुरनीतिः—Vidura-Niti with a commentary संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू. ... ०–४–० ०–१–०

१० वेदान्तरहस्यम्—Vedanta Rahasya वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रू.... ... ... ०–१–० ०–०–६

११ विशिष्टाद्वैतमतविजयवादः—Vishisht-advaita-Mata-Vijaya-Vada नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मूल्यम् रू. ... ... ... ०–१–० ०–६–०

१२ रघुवंशमहाकाव्यम्—Raghuvamsha With Mallinatha's commentary श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू. ... ... ... ०–१०–० ०–३–०

१३ रघुवंशमहाकाव्यं—Only First Five Sargas of the Same with Commentary मल्लिनाथकृतटीकोपेतम् । सर्गाः १–५ मूल्यम् रू. ... ... ०–४–० ०–१–०

१४ कुमारसंभवं महाकाव्यम्—Kumar Sambhav with 3 known commentaries कविवरश्रीकालिदासविरचितमिदं

सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धन- मूल्यं मार्गव्ययः
कृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति
सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रि-
तमतीव दर्शनीयमस्ति । मूल्यम् रू. ... ... १–४–० ०–२–०

१९ कारिकावली सिद्धान्तमुक्तावलीसहिता— **Karikavalee with Siddhanta-Muktavali and other notes** न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पणीं पण्डित-जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. रू.... ... ... ... ... ०–७–० ०–१–३

१६ वैशेषिकदर्शनम्—**Vaisheshika Darshana with several commentaries** श्रीशंकरमिश्रकृत–वैशेषिकसूत्रोपस्कार—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत—विवृति–चन्द्रकान्तभट्टाचार्यप्रणीत—भाष्यसहितम् । मू. रू.... ... ... ... ... २–०–० ०–३–०

१७ वादार्थसंग्रहः (प्रथमो भागः)—**Vadartha Samgraha** First Part अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरसुपकारकः । मू. रू. ... ... ... ... ०–६–० ०–०–६

१८ वादार्थसंग्रहः (द्वितीयोभागः)—Second Part अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम्,

जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति । मू. रू.... मूल्यं ०-६-० मार्गव्ययः ०-०-६

१९ न्यायबिन्दुः—Nyayabindu पूर्वमीमांसायाः अधिकरणार्थसंग्राहको ग्रन्थः । तत्सड्डुपाख्यभट्टवैद्यनाथकृतः । टिप्पनीसहितः । मू. ... ... १-४-० ०-२-०

२० महाभागवतम्—Maha Bhagavata देवीपुराणम् । अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी—गङ्गा—पार्वती—श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थानं च प्रधानतयोपवर्णितानि। प्रसङ्गाद्रामचरितं स्कन्दचरितं पाण्डवचरितं गणेशोत्पत्तिर्गङ्गावतरणं भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिताः । सार्धपञ्चसाहस्री संहितेयम् मू. रू... ... ... २-०-० ०-३-०

२१ तैत्तिरीयोपनिषत्—Taittiriya-Upanishat श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता । मू. रू.... ... ... ... ... १-०-० ०-२-०

२२ दशरूपकम्—Dasha Rupaka नाट्यशास्त्रं धनञ्जयविरचितमवलोकसहितं पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहितं च । मू. रू. १-०-० ०-२-०

२३ ब्रह्मसूत्रवृत्तिः—Brahma Sutra Vritti अद्वैतमञ्जरी । भगवत्पाद(आद्यशंकराचार्य)शिष्यकृता । मू. रू. .. ... ... ... ०-१२-० ०-२-०

२४ चन्द्रालोकः—Chandraloka with commentary श्रीपीयूषवर्षजयदेवकविविरचितोऽलंकारग्रन्थः । पायगुण्डोपाह्ववैद्यनाथ (बाळंभट्ट) विरचितरमाख्यव्याख्यासहितः मू. रू. ... ... ०-८-० ०-१-०

२५ महाभारतविराटपर्व—Mahabharata-Virata Parvan with eight commentaries नीलकण्ठकृतभारतभावदीप—अर्जुनमिश्रकृतदीपिका—चतुर्भुजमिश्रकृतप्रकाश—सर्वज्ञनारायणकृतभारतार्थप्रकाश—विमलबोधकृतदुर्घटार्थप्रकाशिनी—रामकृष्णकृतविरोधार्थभञ्जनी—विषमपदविवरण—

| | | मूल्यं | मार्गव्ययः |
|---|---|---|---|
| | वादिराजतीर्थविरचितलक्षाभरणेत्यष्टीकोपेतं विपुलपाठ-भेदसहितं च । मू. रू. ... ... ... | ३–८–० | ०–६–० |
| २६ | चन्द्रकान्त Chandrakanta (Hindi) (वेदान्त ज्ञानका मुखग्रन्थ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक "चन्द्रकान्त" मणि वम्बई प्रान्तके प्रसिद्ध साप्ताहिक 'गुजराती' पत्रके मुख्य–आद्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ इच्छाराम सूर्यराम देसाईके शुद्ध हृदयमें देदीप्यमान प्रवोधरत्न-भाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रू. ... ... ... ... | २–८–० | ०–४–० |
| २७ | युक्तिप्रकाश–Yukti Prakasha (Hindi) विचारसागरका कर्ता साधु श्रीनिश्चलदासजीने किया हुआ यह ग्रन्थ हिन्दुस्तानी भाषामें है. इसमें वेदान्तका ३९ सिद्धान्त वहुत अच्छीतरहसे सिद्ध किये गये है. निश्चलदासकी वाणी सब जिज्ञासुलोकोंको ज्ञात होनेसे विशेष निरूपणकी कुछ जरूरत है नहीं. और जिज्ञासुलोकोंको ये ग्रन्थ वहुत उपयुक्त है. पक्की जिल्द और अच्छा कागज. ... ... | १–०–० | ०–२–० |

नोंध—व्ही. पी. खरच जूदा पडेगा.

'गुजराती' मुद्रणालयाधिपतिः ।

कोट सर्कल सासून बिल्डिंग–मुंबई.

# VÂDÂRTHA-SAMGRAHA

CONSISTING OF

SHATKÂRAKA-VIVECHANA, KÂRAKA-VÂDÂRTH,
SAMÂSA-VÂDÂRTH, EVAKÂRA-VÂDA.

SECOND PART

EDITED BY

MAHADEVA GANGADHARA BAKRE

Printed and Published by Manilal Itcharam Desai at
THE GUJARATI PRINTING PRESS,
SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY.

V. S. 1970 A. D. 1914

Price Six Annas.

# वादार्थसंग्रहः

षट्कारकविवेचन–कारकवादार्थ-समासवादार्थ-वकार-
वादार्थेतिग्रन्थचतुष्टयात्मकः

( द्वितीयो भागः )

बाक्रेइत्युपाह्वगङ्गाधरभट्टात्मजमहादेव-
शर्मणा संस्कृतः

मुंबय्या

'गुजराती' मुद्रणालयाधिपतिना मणिलाल इच्छाराम
देशाई इत्यनेन स्वीये मुद्रणालये
मुद्रयित्वा प्रकाशितः ।

---

संवत् १९७०. सन १९१४.

मूल्यं षडाणकाः

# अस्य मुद्रणे आदर्शतया गृहीतानि पुस्तकानि ।

१ षट्कारकविवेचनम् । एतन्मुद्रणालयस्थम् ।

२ " " रा. रा. मञ्जेशराव तेलंग इत्येतैर्दत्तम् ।

१ कारकवादार्थः । एतन्मुद्रणालयस्थः ।

२ " " सावंतवाडीस्थानां वे. शा. सं. रा. रा. विनायकशास्त्री (दादाशास्त्री) बाके इत्येतेषाम् ।

३ " " वे. शा. सं रा. रा. पुण्यपत्तनस्थानां गोविंद नारायणशास्त्री डेगवेकराणाम् ।

४ " " वेङ्कटेश्वरमुद्रणालये मुद्रितम् ।

१ समासवादः । एतन्मुद्रणालयस्थः ।

२ " " अमदाबादस्थैः वे. शा. सं. रा. रा. (रैक) शास्त्री मणिशंकर लल्लूभाई धर्मभूषण इत्येतैः प्रेषितम् ।

३ " " भारतमार्तण्ड–पण्डित–गोवर्धनभट्टानां ग्रन्थसंग्रहालयस्थम् ।

१ एवकारवादः । एतन्मुद्रणालयस्थः ।

एतन्मुद्रणाय यैर्महात्मभिः पुस्तकानि दत्तानि तैः प्रभूतमुपकृतोऽस्मीति सविनयं विज्ञापयति—

'गुजराती' मुद्रणालयाधिपतिः ।

# वादार्थसंग्रहः ।

## ( द्वितीयो भागः )

श्रीभवानन्दतर्कवागीशप्रणीतं

## षट्कारकविवेचनम् ६.

नत्वा कृष्णपदद्वन्द्वं कारकाद्यर्थनिर्णयः ।
श्रीभवानन्दसिद्धान्तवागीशेन वितन्यते ॥

### कारकत्वविवेचनम् ।

तत्र॰क्रियानिमित्तत्वं कारकत्वम्॰इति न सामान्यलक्षणं, संप्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादिसंपादनद्वारा संबन्धिनोऽपि पाकादिक्रियानिमित्तत्वेन संबन्धिनि मैत्रस्य तण्डुलं पचतीत्यादौ मैत्रादावतिव्याप्तेः । किंतु–

**विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वम् । क्रियानिमित्तत्वसहितं मुख्यमिति ।**

स्तोकं पचतीत्यादौ क्रियाविशेषणेऽतिव्याप्तिवारणाय विभक्त्यर्थद्वारेति । मैत्रस्य पचतीत्यादौ मैत्रसंबन्धित्वं न पाकेऽन्वेति, षष्ठ्यर्थस्य नामार्थसाकाङ्क्षतया क्रियाया अपि कर्मादिकारकसाकाङ्क्षतया परस्पराकाङ्क्षाविरहात् । किंतु तण्डुलमित्यादिपदाध्याहारेणैव मैत्रस्य तण्डुलं पचतीत्येवान्वयबोधः ।

ओदनस्य भोक्ता मैत्रस्य पाक इत्यादौ कर्मत्वकर्तृत्वार्थिका षष्ठी कारकविभक्तिरेव 'कर्तृकर्मणोः कृति' इत्यनेन तद्विधानात् । अत एव संबन्धस्य कारकत्वं नास्तीति शाब्दिकाः ।

यदि–'गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः'

---

१ नास्ति क्रियायोगाभावादितीति पाठः ।

इत्यादिप्रयोगे विनापि नामाध्याहारं धात्वर्थे षष्ठ्यर्थः संबन्धोऽन्वीयते तदा*कर्तृत्वकर्मत्वादिषट्कान्यतमत्वे सति क्रियान्वयित्वं कारकत्वम्*इति तत्त्वम् ॥

## कर्तृत्वविवेचनम्

तत्र*क्रियाश्रयत्वं कर्तृत्वम्*इति वैयाकरणाः, तेषामयमाशयः—यद्धातूत्तराख्यातेन यगाद्यसमभिव्याहृतेन यद्धात्वर्थान्वितयद्धर्मवत्त्वं बोध्यते तादृशधर्मवत्त्वमेव तत्क्रियाकर्तृत्वम् । एवं पचतीत्यादौ अनुकूलव्यापारवत्त्वं जानातीत्यादौ आश्रयत्वं नश्यतीत्यादौ प्रतियोगित्वं तत्तत्क्रियाकर्तृत्वम् । यगाद्यसमभिव्याहृतेतिकरणात्पच्यते तण्डुल इत्यादौ पाकजन्यफलाश्रयत्वेन तण्डुलादेर्बोधनान्न तस्य कर्तृत्वं, काष्ठैः स्थाल्यामोदनं पचतीत्यादौ करणाधिकरणकर्मणां क्रियान्विततद्धर्मवत्त्वेऽपि स धर्मो नाख्यातेन प्रतिपाद्यः । यदातु तत्तात्पर्येणाख्यातं प्रयुज्यते काष्ठं पचति स्थाली पचतीत्यादौ तदा कर्तृत्वं तेषामिष्टमेव ।

तथा पच्यते ओदनः स्वयमेवेत्यादौ कर्मकर्तरि ओदनादेः कर्मणोऽपि कर्तृत्वम् । तत्र हि स्ववृत्तिव्यापारजन्यपाकजन्यफलशाल्योदन इति शाब्दबोधः । एवं चौदनपदोत्तरप्रथमाया व्यापारो लक्षणयार्थः । यद्वा व्यापारसामान्ये शक्तस्याख्यातस्यार्थः । व्युत्पत्तिवैचित्र्याच्चात्र यगादिसमभिव्याहृताख्यातार्थव्यापारे प्रथमान्तार्थस्य विशेषणत्वेनान्वयः । तत्राख्यातस्य व्यापारवाचकत्वात्, ओदनान्विततादृशव्यापारस्य यगाद्यसमभिव्याहृताख्यातप्रतिपाद्यत्वादोदनस्य यगाद्यसमभिव्याहृताख्यातप्रतिपाद्यधात्वर्थान्वितव्यापारवत्त्वरूपकर्तृत्वं निराबाधमेव । ओदनः स्वं पचतीति प्रयोगस्यासाधुतयाऽभावेऽपि तादृशव्यापारे तज्जन्यप्रतिपत्तिविषयतायोग्यतानपायादिति ।

पाचयतीत्यादौ तु पाकानुकूलव्यापारो णिजन्तार्थः । तदनुकूलव्यापारश्चाख्यातार्थस्तदाश्रय एव कर्तेति ।

---

१ षट्कारकान्यतमद्वारा क्रियां इति पाठः । २ शाब्दिका इति पाठः । ३ तादृशतद्धर्मेति पाठः । ४ पाकानुकूलेति पाठः । ५ क्रियानिरूपितत्वमिति पाठः । ६ व्यापारे लक्षणा इति पाठः । ७ तया धात्वर्थस्य विशेष्यतयान्वयः इति पाठः । ८ अत्र कर्त्राख्यातस्येति पाठः । ९ स्यापि यगादिस° । १० तस्येति तदाश्रय इति पाठः ।

'स्वतन्त्रः कर्ता' इति पाणिनिसूत्रमप्येतत्परतयैव व्याख्येयमिति । तन्न । अचेतने अभियुक्तानां स्वरसतः कर्तृपदाप्रयोगात् ।

यत्तु*कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वम्* इति । सत्यन्ताच्च छेद्यसंयोगादिरूपव्यापारजनके कुठारादौ नातिव्याप्तिरित्यपरे । तदप्यसत् । ईश्वरप्रयोज्यानां संसारिणां तत्तत्क्रियास्वकर्तृतापत्तेः । अप्रयोज्यत्वं च यदि फलानुकूलतज्जन्यव्यापारानाश्रयत्वं तदा दण्डादिजन्यसंयोगादिरूपव्यापाराश्रयत्वात् कुलालादावव्याप्तिः, अन्यच्च दुर्वचमिति ।

अत्राहुः—

## अनुकूलकृतिमत्त्वं कर्तृत्वम् ।

पाकानुकूलव्यापारवत्त्वप्रतिसंधानेऽपि काष्ठादौ तान्त्रिकाणां स्वरसतः कर्तृपदाप्रयोगात्, कृताकृतविभागादिना कृधातोर्यत्नार्थकत्वे निश्चिते आश्रयार्थक-तृजन्तकृधातुव्युत्पन्नकर्तृपदस्य यत्नाश्रयार्थबोधकत्वाच्च, अचेतने कर्तृपदप्रयोगो गौणः । यदि चान्यविषयककृतिजन्ये नान्तरीयके मत्तो भूतं न तु मया कृतमिति व्यपदेशान्न मुख्यं कर्तृत्वं तदा तद्विषयकत्वेनापि कृतिर्विशेषणीया ।

न चैवं तत्तद्विषयककृतिमत्त्वमेव तत्तत्क्रियाकर्तृत्वमस्तु, गुरुतरभारोत्तोलनादौ तद्विषयककृतिमत्त्वेऽपि उत्तोलनक्रियाद्यनिष्पत्तौ कर्तृपदाप्रयोगात् । विषयत्वं च साध्यत्वेन बोध्यम् । तेन भोजनकृतेरुद्देश्यत्वेन सुखादिविषयत्वेऽपि तत्कर्तुर्न सुखकर्तृत्वम् । अस्मदादिकर्तृकपाकादावीश्वरस्य कर्तृत्वमिष्टमेव । न चैवमीश्वरः पचतीति स्यात्, तथाविवक्षायामिष्टत्वात् । कार्यत्वानवच्छिन्नजन्यतानिरूपितमसाधारणमनुकूलत्वमेव लक्षणघटकमित्यप्याहुः ।

---

## कर्मत्वविवेचनम् ।

कर्मत्वं तु न*करणव्यापार्यत्वम्* । तद्धि करणजन्यक्रियानुकूलव्यापाराश्रयत्वम् । तच्च दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणव्यापार्ये दात्रेऽतिव्याप्तम् । नापि *परसमवेतक्रियाजन्यफलशालित्वम्*।

---

१ क्रियाया अकं इति पाठः । २ विशेषणीयम् ३ सुखविषयकत्वेन इति पाठः । ४ संबन्धमिति पाठः । ५ व्यापारवत्त्वमिति पाठः ।

गमिपत्योः कर्मत्वस्य पूर्वस्मिन्देशे, त्यजेश्चोत्तरस्मिन्, स्पन्देः पूर्वापरदेशयोः प्रसङ्गात्। नदी वर्धत इत्यादौ वृद्धेरवयवोपचयस्य परंपरया तीरप्राप्तिफलकत्वात् तज्जन्यफलाश्रये तीरेऽतिव्याप्तेः।

अत्राहुः—त्यजिगमिप्रभृतीनां स्पन्दमात्रं नार्थः। नहि त्यजति गच्छतीत्यनयोः प्रतीत्योरविशेषं कश्चिदभ्युपैति। एवं च त्यजेर्विभागेन, गमेरुत्तरसंयोगेन, पतेश्चाधः संयोगेनावच्छिन्नाः स्पन्दा वाच्याः। तथा च तत्तद्धात्वर्थतावच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्मत्वं, स्पन्देर्वृधधातोश्च फलावच्छिन्नव्यापाराबोधकत्वान्न पूर्वापरदेशयोस्तीरस्य च कर्मत्वम्। फलावच्छिन्नव्यापारबोधकत्वादेव धातूनां सकर्मकत्वव्यवहारो मुख्यः।

सविषयपदार्थाभिधायिजानातीत्यादीनां तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्मकत्वम्। घटं जानातीत्यादौ द्वितीयातो विषयित्वोपस्थितौ घटविषयिताश्रयज्ञानाश्रयतावान् इत्यन्वयबोधात्। अत एव न यतधातोः सकर्मकत्वं[1] तदुपस्थापिते यत्ने नामार्थस्योद्देश्यत्वेनैवान्वयबोधात्। अभुञ्जानेऽपि भोजनाय यतत इति प्रयोगात्। अत एव तादृशधातुयोगे कर्मप्रत्ययाभावाद् भोजनं यतत इति न प्रयोगः।

अत्र भूमिं प्रयाति तरुं त्यजति खग इत्यादौ धात्वर्थतावच्छेदकसंयोगविभागरूपफलशालित्वेऽपि स्वस्य, स्वं[2] प्रयाति त्यजतीत्यप्रयोगात् धात्वर्थे परसमवेतमपि विशेषणं देयम्। न चैवमुभयकर्मजसंयोगस्थले मल्लो मल्लं गच्छतीतिवत्स्वात्मानं गच्छतीति प्रयोगः स्यात्। भूमिं प्रयातीत्यादितो हि द्वितीयादिना परत्वं प्रकृत्यर्थापेक्षिकं बोध्यते। तथा च भूमिभिन्नसमवेतभूमिवृत्तिसंयोगजनकस्पन्दानुकूलकृतिमानित्यन्वयबोधः। स्वात्मानं गच्छतीत्यादौ तु स्वात्मभिन्नसमवेतं स्वात्मवृत्तिसंयोगजनकं यन्मल्लान्तरवृत्तिगमनं तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावादेव नातिप्रसङ्गः। अत्र प्रकृत्यर्थस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन[3] न परत्वेऽन्वयः। पृथिवीं प्रयाति विहग इत्यादौ विहगस्य पृथिवीत्वावच्छिन्नभिन्नत्वाभावादनन्वयापत्तेः। प्रतियोगितामात्रेणान्वये स्वात्मनोऽपि स्वप्रतियोगिकद्वित्वावच्छिन्नभिन्नत्वात्तथैव दोषात्। अतो द्वितीयाद्यर्थफले

१ यतधातोरकर्मकत्वमिति पाठः। २ आत्मानमिति पाठः। ३ स्वप्रकृत्यर्थतावच्छेदकावच्छिन्नेति पाठः।

यद्व्यक्तेरन्वयः तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्च परत्वेऽन्वयः । पृथिवीं प्रयातीत्यादौ यत्पृथिवीवृत्तिसंयोगजनकत्वं प्रयाणस्य शाब्दधीविषयः तद्व्यक्तिभिन्नत्वं विहगे वर्तत इति न कोऽपि दोषः ।

अन्ये तु पृथिवीं प्रयातीत्यादौ भूखण्डस्यैव पृथिवीपदार्थत्वात् , न तु वृक्षविहगसाधारणपृथिवीत्वजात्यवच्छिन्नस्य, तथा चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्य व्युत्पत्तावपि न क्षतिः । एवमन्यत्रापि कर्मवाचकसामान्यपदे लक्षणया विशेषपरत्वं सूपपन्नमित्याहुः ।

यत्तु तत्क्रियानधिकरणत्वे सति तत्क्रियावच्छेदकफलशालित्वं कर्मत्वं द्वितीयादेरपि तत्क्रियानधिकरणत्वमर्थ इति तन्न, क्रियाव्यक्तिभेदादनन्तशक्तिकल्पनापत्तेः ।

वस्तुतस्तु अन्योन्याभावप्रतियोगितावच्छेदकत्वं क्रियान्वयि द्वितीयादेरर्थः । तथा च द्वितीयाद्यर्थफले पदार्थैकदेशे अन्योन्याभावे च एकव्यक्तेरेव प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्चाधिकरणत्वेनान्वयः । एवं च भूमिं प्रयातीत्यादौ भूमिवृत्तिसंयोगजनकभूमिवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकप्रयाणानुकूलकृतिमानित्यन्वयधीः । स्वात्मक्रियायां स्ववृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वात् स्वात्मानं प्रयातीत्यादेर्न प्रसङ्गः ।

एवं ददातेर्मूल्यग्रहणं विना स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागो यजतेश्च देवतोद्देश्यकस्वस्वत्वध्वंसफलकत्यागः जुहोतेश्च तादृशत्यागफलकाग्निप्रक्षेपः । अत एव ऋत्विजां तादृशत्यागाभावेऽपि होतृत्वम् । अग्निप्रक्षेपश्चाग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः । न चैवमग्नौ जुहुयादित्यत्राग्निवृत्त्यग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः इत्यादिशाब्दबोधे पुनरुक्तिनिबन्धनोऽनन्वयः, धात्वर्थतावच्छेदकसंयोगरूपफलशालित्वेनाग्नेरपि कर्मत्वापत्तिश्चेति वाच्यम् । तत्र संयोगावच्छिन्नक्रियानुकूलव्यापारस्यैव धात्वर्थतावच्छेदकतया आद्यदोषस्याभावात् । तत्र क्रियाया एव धात्वर्थतावच्छेदकतया संयो-

---

१ फलशालिनः इति पाठः । २ व्युत्पन्नत्वेऽपि इति पाठः । ३ वच्छिन्न इति पाठः । ४ फलशालिनश्चेति पाठः । ५ आत्मवृत्तिक्रियायाः आत्मवृ इति पाठः । ६ जनकत्यागः इति पाठः । ७ क्रियेत्यादिशाब्दे पुनरुक्तिनिबन्धनोऽनन्वयः इति पाठः ।

गस्यावच्छेदकतावच्छेदकतया तदन्वयिनोऽप्यग्नेः कर्मत्वासंभवेन द्वितीयदोषस्याप्यभावात् ।

द्वितीयाद्यर्थश्च वृत्तित्वं तच्च धात्वर्थतावच्छेदके फलेऽन्वेति । एवं च विप्राय गां ददाति विष्णुं यजते घृतं जुहोति इत्यादौ विप्रोद्देश्यकगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वफलकत्यागानुकूलकृतिमान्, विष्णूद्देश्यकस्वस्वत्वध्वंसफलकत्यागानुकूलकृतिमान्, घृतवृत्त्यग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारानुकूलकृतिमान् इत्यादि क्रमेणान्वयधीः । अत्र देवतायाः स्वत्वस्वीकारे तत्र द्वितीयार्थवृत्तित्वान्वयेनैव विष्णोः कर्मत्वम् । इतरथा तु उद्देश्यतासंबन्धेन तादृशस्वत्वध्वंसरूपधात्वर्थतावच्छेदकफलवत्त्वात् कर्मत्वम् । अत एव मन्त्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वं देवतात्वमिति मणिकृतः । घृतं जुहोतीत्यत्र धात्वर्थतावच्छेदकीभूताग्निसंयोगानुकूलक्रियावत्त्वात् कर्मत्वम् ।

मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकपरस्वत्वजनकत्यागो विक्रयः, मूल्यप्रदानपुरःसरं स्वस्वत्वोत्पादकस्वीकारः क्रयः, दत्तद्रव्यस्वत्वजनकस्वीकारः प्रतिग्रहः । तथा च गां विक्रीणीते क्रीणाति प्रतिगृह्णाति वेत्यादौ गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमान् गोवृत्तिमूल्यदानप्रयुक्तस्वत्वावच्छिन्नस्वीकारवान् गोवृत्तिदानप्रयुक्तस्वत्वजनकस्वीकारवानिति क्रमादन्वयधीः । सर्वत्र धात्वर्थतावच्छेदकतत्तत्फलाश्रयत्वेन गवादेः कर्मत्वम् । एवमनयैव दिशा सर्वत्र कर्मत्वमूह्यम् ।

न चैवमपि पतेरधःसंयोगावच्छिन्नस्पन्दात्मकतया तदवच्छेदकीभूताधःसंयोगवत्त्वात् भूतलादेः कर्मत्वे वृक्षात्पर्णं भूतलं पततीति प्रयोगः स्यादिति वाच्यम् । तथा विवक्षायामिष्टत्वात् । अत एव द्वितीयाश्रितातीतपतितेत्यादिसूत्रे पतितशब्दयोगे द्वितीयान्तसमासविधानं, तदुदाहरणं च नरकं पतितो नरकपतित इत्यादि साधु संगच्छते । क्वचित्सप्तम्यपि साधुः भूतले पततीति, ग्रामे गच्छतीतिवत् ।

अन्ये तु तादृशफलशालित्वेऽपि भूतलादेर्न द्वितीया, फलस्य हि[३] संबन्ध्याकाङ्क्षायां भूतलादेरन्वयो वाच्यः, प्रकृते चाधःसंयोगरूपफलस्याधोवृत्तितयोपस्थितेराश्रयान्तरनिराकाङ्क्षत्वात् ।—

१ विष्णोरुद्देश्यतासंबन्धेन तादृशस्वत्वध्वंसरूपधात्वर्थतावच्छेदकफलवत्त्वाद्घृतस्य जुहोतीत्यत्र इति पाठः । २ स्वत्वावच्छिन्नेति पाठः । ३ आश्रयाकांक्षायामिति पाठः ।

यद्वा पतिधातोरकर्मकत्वं कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वात्। यथा ग्रामं गच्छतीत्यादौ गम्यादेः। पतिर्हि पर्णगतमधःसंयोगमेव बोधयति न तु भूतलगतं भूतलस्याधःसंयोगाभावात्। पर्णस्याधो भूतलमित्येव प्रतीतेः। अत एव भूतले पततीत्येव प्रयोगः न तु भूतलं पततीत्याहुः।

प्राञ्चस्तु ग्रामं गच्छति त्यजति, गम्यते त्यज्यते वा ग्राम इत्यादौ संयोगविभागयोः फलयोः द्वितीया—कर्माख्याताभ्यां प्रत्यायनात् अनन्यलभ्यस्पन्दाद्यात्मकव्यापार एव तत्र धात्वर्थः। न चैवं तत्तद्धातुयोगे द्वितीयादेः संयोगत्वादिना फलविशेषबोधकत्वोपगमेन ग्रामं गच्छति त्यजति इत्यादौ ग्रामवृत्तिसंयोगजनकस्पन्दस्य ग्रामवृत्तिविभागजनकस्पन्दस्य च लाभात्पर्यायत्ववारणेऽपि गच्छति त्यजति गमनं त्याग इत्यनयोः पर्यायता स्यादिति वाच्यम्। संयोगावच्छिन्नस्पन्दशाब्दत्वस्य गमेर्विभागावच्छिन्नस्पन्दशाब्दत्वस्य त्यजेः कार्यतावच्छेदकत्वात्। एवं च यथायथं संयोगविभागावच्छिन्नस्पन्दलक्षणां विना त्यजति गच्छतीत्यनयोरबोधकत्वमेव।—

संयोगावच्छिन्नस्पन्दशाब्दत्वं च जन्यजनकभावसंबन्धेन संयोगस्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वम्। तेन त्यज्यते गम्यते ग्राम इत्यादौ स्पन्दविशेषणककर्माख्यातार्थसंयोगादिविशेष्यकशाब्दस्य संग्रहः। भावाख्यातस्थलेऽपि गमनमित्यादाविव संयोगाद्यवच्छिन्नस्पन्दे धातोर्लक्षणैव। न चैवं लक्षणया अपि गमित्यजिभ्यां त्यागगमनयोरबोधप्रसङ्ग इति वाच्यम्। शक्तिलक्षणान्यतरसंबन्धेन संयोगाद्यवच्छिन्नस्पन्दबोधकत्वानुपपत्तेर्निर्णयानन्तरमेव गम्यादिना विभागाद्यवच्छिन्नस्पन्दबोधनात्।—

एवं च—

**परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्।**

अत एव गमधातोः पूर्वदेशे न कर्मत्वं तस्य विभागरूपफलेनानन्वयात्। एवं पतेरपि गुरुत्वासमवायिकारणप्रयोज्या विजातीयक्रियैव अर्थः। तस्या-

---

१ इत्यन्यदेतत् इति पाठः। २ लाभादिति पाठः। ३ बोधकानुपपत्तेरिति; बोधकत्वान्यथानुपपत्तेरिति च पाठः।

अधःसंयोगरूपफलेनान्वयः । एवं ददात्यादेरपि व्यापारमात्रार्थत्वे द्वितीयादीनां(?दिना) तत्तत्फलविशेषान्वयो बोध्य इत्याहुः ।

कर्म च त्रिविधं—प्राप्यं, विकार्यं, निर्वर्त्यं चेति ।

संयोगादिफलशालि प्राप्यं, यथा ग्रामं गच्छतीत्यादौ ग्रामादिः । क्रिया यद्ध(?त्क)र्मनाशकं फलं जनयति तद्विकार्यं, काण्डं लुनाति इत्यत्र काण्डपदेन लक्षणयावयवा उच्यन्ते । लुनातिना चारम्भकसंयोगविरोधिविभागहेतुः कुठारादिव्यापारः । तथा च काण्डावयववृत्तितादृशविभागावच्छिन्नव्यापारानुकूलकृतिमानित्यन्वयधीः । एवं च प्राप्यविकार्ययोः कारकत्वात्तादृशफलाश्रयत्वाच्च मुख्यकर्मत्वम् ।

निर्वर्त्यं च निष्पाद्यं, यथा कटं घटं वा करोतीति । अत्र च कृञ्धातोः फलावच्छिन्नव्यापाराबोधकत्वात् कटादेस्तादृशफलानाश्रयत्वेन गौणं कर्मत्वम् । तच्च साध्यत्वेन विषयत्वम् । अत एव वीरणादेरुपादानत्वेन विषयत्वेऽपि वीरणं करोतीति न प्रयोगः ।

प्राञ्चस्तु कटादेर्गौणकर्मत्वेऽपि कारकत्वोपपत्त्यर्थमवयवे लक्षणा कटस्यासिद्धत्वेनाकारकत्वात् । न चैवं कदाचित् वीरणं करोतीति मुख्यप्रयोगः स्यादिति वाच्यम् । करोतिपदसमभिव्याहारे कर्मवाचकपदस्यावयवे निरूढलक्षणानियमादित्याहुः ।

ओदनं पचतीत्यादौ ओदनपदस्य तण्डुले तदवयवे वा लक्षणा । धातुना च रूपादिपरावृत्तिफलाकाधःसंतापनादि । तथा च तत्तद्धात्वर्थतावच्छेदकरूपादिपरावृत्तिशालित्वात् कर्मत्वं, अत्र च पूर्वरूपविरोधेन रूपान्तरापत्तिर्यदि विकारस्तदा विकार्यमध्ये अन्यथा तु प्राप्यमध्ये अस्यान्तर्भावः ।

स्तोकं पचतीत्यादौ क्रियाविशेषणे द्वितीया, विशेषणविभक्तिवत् प्रयोगः साधुः[1] । धात्वर्थे स्तोकस्याभेदः संसर्गः । नामार्थधात्वर्थयोर्भेदान्वयबोध एव प्रकारीभूतविभक्त्यर्थोपस्थितेस्तन्त्रत्वात् । नीलं घटमित्यादौ विशेषणविभक्तेरभेदार्थकत्वे तु अस्या अपि अभेदार्थकत्वमिति ॥

---

## करणत्वविवेचनम् ।

करणत्वं च—

**कारकान्तरेऽचरितार्थत्वे सति फलहेतुत्वम् ।**

तत्र चरितार्थत्वं च तद्व्यापारमुत्पाद्यैव फलहेतुत्वम् । कर्ता हि सिद्धं

---

१ प्रयोगसाधुत्वार्थकत्वम् इति पाठः ।

कुठारादि व्यापारयञ्छिदालक्षणं फलमुत्पादयतीति करणे चरितार्थो न तु फले । कर्मापि करणे चरितार्थं कर्मासिद्धौ करणव्यापारासिद्धेः । नहि छेद्यासिद्धौ कुठारादिकरणानां छिदानुकूलव्यापारः संभवति । अत एव करणव्यापारविषयत्वं कर्मत्वमिति प्राञ्चः । अधिकरणमपि कर्तृकर्मान्यतरव्यापारद्वारा क्रियानिष्पादकम् । यथा गृहे चैत्रः स्थाल्यां तण्डुलं पचतीत्यत्र चैत्रव्यापारसंपादनेन गृहस्य तण्डुलव्यापारसंपादनेन स्थाल्याश्च कारकत्वम् । संप्रदानापादानयोश्च न क्रियासामान्यहेतुत्वम् । किं तु दाने अनुमतिप्रकाशनेन कर्तुरिच्छामुत्पाद्य संप्रदानस्य, पतनाश्रये च पर्णादौ पतनप्रतिबन्धकसंयोगनाशजनकविभागमुत्पाद्य चापादानस्य चरितार्थत्वमेवेति ।

करणं च कारकान्तरे न चरितार्थम्, तस्य चरमकारणत्वात् । एवं च तदनुकूलव्यापारमद्वारीकृत्य तज्जनकत्वं फलायोगव्यवच्छिन्नकारणत्वं पर्यवसितं करणत्वमिति लब्धम् । एवं च तन्मते चरमकारणमेव करणमिति कुठारादौ करणपदं गौणमिति ।

वस्तुतस्तु*व्यापारवत्कारणं करणम्* । तेन हस्तादौ कुठारादौ च नाव्याप्तिः । न चैवमदृष्टद्वारा कार्यमात्रे, विशेषतः ज्ञानेच्छादौ मनोयोगद्वारा आत्मनः करणत्वापत्तिः । उपधेयसंकरस्येष्टत्वात् । अनुकूलकृतिसमवायित्वलक्षणकर्तृत्वस्य निरुक्तकरणत्वादन्यत्वेनैवोपाध्योरसंकरात् ।

कर्तृभिन्नत्वेन करणलक्षणं विशेषणीयमित्यपि कश्चित् ।

इत्थं चानुमितौ व्याप्तिस्मृतिः करणं परामर्शो व्यापारः । चक्षुरादेश्चाक्षुषादिज्ञाने चक्षुरादिसंयोगः, श्रोत्रस्य श्रावणज्ञाने श्रोत्रमनःसंयोगो न तु शब्दो व्यापारः, शब्दाभावप्रत्यक्षे तस्य व्यभिचारात् । न च शब्दश्रावणे शब्दो व्यापारः, लाघवेन श्रावणत्वावच्छिन्नं प्रत्येव श्रोत्रत्वेन हेतुत्वात्, न तु शब्दश्रावणत्वावच्छिन्नं प्रति गौरवात् ।

अन्ये तु कुठारादौ करणे*कर्तृव्यापारविषयत्वं करणत्वम्* । तच्च फलानुकूलकर्तृव्यापारवत्त्वं कुठारादौ छिदानुकूलकर्तृजन्यनमनोन्नमनादिमत्त्वमविकलम् । न चैवं स्थाल्यादेरधिकरणस्यापि कर्तृव्यापार्यत्वात् तत्रातिव्याप्तिरिति वाच्यम्, उपधेयसंकरस्येष्टत्वात् । छिदादौ चेष्टायाः प्रयत्नरूपकर्तृव्यापारविषयत्वेन हस्तादेश्च तज्जन्यचेष्टावत्त्वेन च करणत्वमिष्टमेव ।

---

१ संयोगेति पाठः ।

चेष्टया-हस्तादिना च छिनत्तीति प्रयोगस्य सर्वसंमतत्वात् । कर्मादौ विवक्षावशात्प्रयोगो भवत्येव । तण्डुलेन स्थाल्यां पाकं साधयति गवा दानं साधयति ब्राह्मणेन दानं साधयतीति प्रयोगात् । चैत्र आत्मना चैत्रेण वा पचतीत्यप्रयोगात् कर्तुः शरीरस्य च वारणाय द्रव्यासमवायि-क्रियानुकूलकृतिमद्-भिन्नत्वं विशेषणं देयम् । कृतिमत्त्वं च समवायेनावच्छेदकतया च बोध्यम् । तेन शरीरस्य आत्मनश्च व्युदासः; विशिष्टाभावाच्च हस्तादिसंग्रहः । इदं च न व्याप्तिस्मृत्यादिसाधारणम् । तत्र च पूर्वनिरुक्तमेव करणत्वम् । इत्थं च करणपदं नानार्थमेवेत्याहुः ।

परशुना छिनत्तीत्यादौ निरुक्तं करणत्वं तृतीयार्थः । प्रकृत्यर्थस्य तत्राश्रयत्वेन धात्वर्थस्य छिदादेश्च निरूपकत्वेनान्वयः । इत्थं च परशुनिष्ठकरणतानिरूपकच्छिदानुकूलकृतिमानित्यन्वयधीः इति प्राञ्चः ।

परशुना छिनत्ति न दात्रेणेत्यादौ निरूपकत्वादेः ( संसर्गस्य ) प्रतियोगितावच्छेदकसंबन्धत्वाभावान्नञर्थानुरोधेन निरुक्तकरणतानिरूपितं जन्यत्वमेव तृतीयार्थः । तत्र च निरूपकतया प्रकृत्यर्थस्य आश्रयतया च धात्वर्थस्यान्वयः । इत्थं च परशु ( निष्ठकरणता ) निरूपितजन्यताश्रयच्छिदानुकूलकृतिमानित्यन्वयधीः इति नव्याः ।

जटाभिस्तापसमद्राक्षीदित्यादौ तृतीया न करणत्वे किंतु विशेषणत्वे । तच्च प्रकृते वैशिष्ट्यरूपं, जटाभिस्तापसमित्यस्य जटाविशिष्टं तापसमित्यर्थः । अत्र चोपलक्षणत्वेऽभिधानम् । उपलक्षणत्वं च बोध्यान्यव्यावृत्त्यनवच्छेदकत्वे सति तत्समानाधिकरणत्वम् । जटाया अतापसव्यावृत्त्यनवच्छेदकत्वात् । शमदमादिमत्त्वस्यैवातापसव्यावृत्त्यन्यूनानतिरिक्तवृत्तित्वेनावच्छेदकत्वात् । न चैवं शमदमादिना तापस इति न स्यात् । इष्टत्वात् । विवक्षावशादुक्तप्रयोगस्येष्टत्वे च विशेषणोपलक्षणसाधारणं वैशिष्ट्यमात्रं न तूपलक्षणत्वमपि नियामकम् ।

अक्ष्णा काणः पादेन खञ्जः मुखेन त्रिलोचन इत्यादौ वपुषा चतुर्भुजः इत्यादौ (च) येनाङ्गविकार इतिसूत्रेण तृतीया । येनाङ्गेन विकारो हानिरा-

---

१ प्रायो भवत्येवेति पाठः २ अन्नमिति पाठः । ३ छिदादौ चेति पाठः । ४ बोध्यव्यावृत्त्यनवच्छेदकत्वे । ५ व्यावृत्तिसमानाधिकरणत्वमिति पाठः । ६ व्यावृत्त्यवृत्तीति पाठः । ७ इष्टत्वाच्चेति पाठः ।

थिक्यं वा तदङ्गवाचकात्तृतीयेति सूत्रार्थः । इत्थं च तृतीयायाः वृत्तित्वमर्थः । तच्चेह व्युत्पत्तिवैचित्र्यात्काणादिपदार्थैकदेशे विकार एवान्वेति ।

काणत्वं च बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वं, जातप्रभृत्यन्धस्याकाणत्वे तु चक्षुष्मद्गोलकवत्त्वे सतीति विशेषणीयम् । एकेनार्धेन वा चक्षुषा पश्यन्नपि काण एव गोलकार्धे गोलके वा चक्षुरभाववत्त्वात् । गोलकोपघातेऽपि काण एव तदवच्छेदेन चक्षुरभावात् । यदि च तद्गोलकावच्छेदेन चक्षुःसत्त्वेप्युपघातादेव च न तत्र चाक्षुषं तदोपहतगोलकवत्त्वमेव काणत्वम् । अक्ष्णेतिपदसमभिव्याहारस्थले च काणपदं चक्षुःशून्यत्वविशिष्टस्य उपहतत्वविशिष्टस्य वा बोधकम् । अक्षिपदं च यदाकदाचिच्चक्षुष्मद्गोलकपरम् । एवं च तादृशगोलकवृत्ति चक्षुःशून्यत्वमुपघातो वा तद्विशिष्टवानित्यक्ष्णा काण इति वाक्यार्थः ।

एवं खञ्जत्वं तथाविधसंस्थानशून्यपादवत्त्वम् । पादेनेत्यादिपदसमभिव्याहारस्थले च तादृशसंस्थानशून्यवानेव खञ्जपदार्थः । तथा च पादवृत्ति यत्तथाविधसंस्थानशून्यत्वं तद्विशिष्टवानित्यर्थः ।

त्रिलोचन इत्यस्य च बहुव्रीहिणा लोचनत्रयवानित्यर्थः । तथा च मुखवृत्तिलोचनत्रयवानिति 'मुखेन त्रिलोचन' इतिवाक्यार्थः । एवमन्यत्राप्यूह्यम् ।

अक्ष्णा काण इत्यादौ पूर्वनिरुक्ता एव पदार्थाः । तृतीया चाभेदे । तथा च तादृशगोलकाभिन्नं यच्चक्षुःशून्यमुपहतं वा तद्वानिति वाक्यार्थः । मुखेन त्रिलोचन इत्यत्र तु त्रिलोचनपदं लोचनत्रयविशिष्टवत्परम् । तथा च मुखाभिन्नलोचनत्रयविशिष्टवानिति वाक्यार्थः । एवं पादेन खञ्जः इत्यादावपि बोध्यमित्यपि कश्चित् ।

धनेन कुलमित्यादौ तृतीया हेतुत्वे । कर्तृकरणयोस्तृतीयेत्यत्र क्रियासाकाङ्क्षे निरुक्तकरणत्वे तृतीया विहिता, अत्र तु नामार्थेनापि साकाङ्क्षे हेतुत्वसामान्ये हेताविति सूत्रेण तृतीया विहिता इति भेदः ।

पुत्रेण सहागत इत्यादौ तृतीयायाः कर्तृत्वमर्थः । सहशब्दस्य समभिव्याहृतक्रियाऽऽगमनादि । तस्य चैकवर्त्मादिरूपैकदेशावच्छेदेनैककालीनत्वसंसर्गेण समभिव्याहृतक्रियायामन्वयः । एवं च पुत्रकर्तृकतादृशागमनसमानकालीनागमनकर्तेत्यन्वयबोधः ।

---

१ जातप्रसन्नान्धस्येति पाठः ।

वस्तुतस्तु सहशब्दस्यापेक्षाबुद्धिविशेषविषयत्वादिरूपसाहित्यमर्थः । तृतीयार्थश्च वृत्तित्वं संख्यामात्रं वा । सहशब्दार्थस्य च संबन्धः प्रथमान्तार्थेनैव ( तृतीयार्थेनापि समं वाक्यार्थः ?) । निपातातिरिक्तनामार्थयोरेव भेदान्वयस्य विभक्त्यर्थद्वारकत्वात् । साहित्यावच्छेदेन च सर्वत्र विधेयान्वयः । एवं च पुत्रेण सहागतश्चैत्रः इत्यस्य पुत्रवृत्तिसाहित्यावच्छिन्नश्चैत्र आगमनकर्तेत्यन्वयबोधः । तेन शिष्येण सहोपाध्यायो ब्राह्मणः सुन्दर इत्यादौ द्रव्यगुणादिविधेयस्थले नानन्वयः ।

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।

इत्यादौ पुत्रेषु भारवहनकर्तृत्वाभावेऽपि तादृशप्रयोगादेकदेशविद्यमानेत्यध्याहारेण एकदेशविद्यमानतायामुक्तसाहित्यस्यावच्छेदकतया अन्वयः । अत एवात्र विद्यमानसहार्थे तृतीयेति शाब्दिका वदन्ति । एवं पुत्रेण सह भुङ्क्ते इत्यादावप्यूह्यम् ।

एवं धान्येन धनवान् गोत्रेण गार्ग्यः प्रकृत्याभिरूप इत्यादौ प्रकृत्यादिभ्यश्चेत्यनेनैव तृतीयाऽभेदार्थिका । धान्याभिन्नधनवानिति, गार्ग्यो गर्गकुलोत्पन्नः गोत्राभिन्नगर्गकुलोत्पन्न इति बोधः । प्रकृतिपदस्य साहजिकोऽभिरूपपदस्य रमणीयतावानर्थः । तथा च साहजिकाभिन्नरमणीयतावानित्यन्वयधीः ।

---

## संप्रदानत्वविवेचनम् ।

'कर्मणा यमभिप्रैति स संप्रदानम्' इति पाणिनिसूत्रम् । तत्क्रियाकरणीभूतेन तत्क्रियाकर्मणा यं संबन्धीकर्तुमभिप्रैति कर्ता स संप्रदानमिति सूत्रार्थः ।

एवं च—

**करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं संप्रदानत्वम् ।**

इति पर्यवसितम् । ग्रामं गच्छतीत्यत्र गमनकर्मजन्यफलभागित्वेनोद्देश्यत्वस्य चैत्रादौ सत्त्वात् चैत्रादेस्तत्क्रियासंप्रदानत्वाभावात् तद्वारणाय करणीभूतेति । तत्र गमने ग्रामस्याकरणत्वात् । दानादौ च गवादि देयादिकमेव करणमिति लक्षणसमन्वयः । विप्राय गां ददातीत्यादौ जन्य-

---

१ सुखादिभागित्वेनेति पाठः ।

फलप्रकारकेच्छापूर्वकत्वं चतुर्थ्यर्थः। व्युत्पत्तिवैचित्र्याच्च तदेकदेशे जन्यत्वेऽप्रकृत्यर्थस्यापि कर्मणो गवादेर्निरूपकतासंबन्धेनान्वयः। स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नस्त्यागो ददात्यर्थः। कृतिराख्यातार्थः। एवं च विप्रविषयकगोजन्यफलप्रकारकेच्छापूर्वकगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमानित्यन्वयधीः।

पितृस्वर्गमुद्दिश्य कृते गोदाने च दानजन्यफलभागित्वेन पिता उद्देश्यो न तु गोजन्यफलभागित्वेनेति पित्रादेर्न संप्रदानत्वम्। यदि च दत्ता गौः पितुः स्वर्गमुत्पादयिष्यतीत्यभिसंधिः तदा अदृष्टाद्वारकतादृशकर्मजन्यत्वं वाच्यम्।

केचित्तु धात्वर्थतावच्छेदकत्वेन फलं विशेष्यं, निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः स च धात्वर्थतावच्छेदके फलेऽन्वेति, इत्थं च विप्रनिरूपितत्वेनेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागानुकूलकृतिमानित्यन्वयधीः। जन्यस्वत्वस्य गोवृत्तित्वे लब्धे अर्थात् तज्जन्यत्वं लभ्यत एवेति तादृशगोजन्यस्वत्वनिरूपकत्वेनोद्देश्यत्वं विप्रस्याक्षतम्।

एवं वृक्षायोदकं सिञ्चति इत्यादौ संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः। वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः। स च धात्वर्थतावच्छेदकतावच्छेदकसंयोगान्वयी। वृत्तित्वरूपद्वितीयार्थोऽपि तादृशद्रवद्रव्यक्रियायाम्। एवं च वृक्षवृत्तित्वेनेच्छाविषयसंयोगानुकूलजलवृत्तिद्रवद्रव्यक्रियावच्छिन्नव्यापारानुकूलकृतिमानित्यन्वयबोधः।

न चैवं सिञ्चधात्वर्थतावच्छेदकद्रवद्रव्यक्रियायां द्वितीयार्थवृत्तित्वान्वये पयसा वृक्षमासिञ्चतीति प्रयोगो न स्यात्, तादृशक्रियाया वृक्षावृत्तित्वादिति वाच्यम्। तत्र संयोगावच्छिन्नद्रवद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकीभूतसंयोग एव वृक्षवृत्तित्वान्वयात्। द्रवद्रव्यसंयोग एव तत्र धात्वर्थ इति न युक्तम्। तथा सति फलावच्छिन्नव्यापाराबोधकत्वेन धातोरकर्मकत्वे धात्वर्थतावच्छेदकफलशालित्वाभावेन वृक्षादेरकर्मत्वापत्तेः। अत एवाजां ग्रामं नयतीतिवन्न द्विकर्मकत्वं संयोगावच्छिन्नद्रवद्रव्यक्रियार्थत्वे तदवच्छेदकफलद्वयाभावात्। तादृशक्रियावच्छिन्नव्यापारार्थकत्वे च तादृशक्रियायामेव द्वितीयार्थवृत्तित्वान्वयात्तत्क्रियावच्छेदकसंयोगे च चतुर्थ्यर्थस्योद्देश्यत्वस्यैवान्वयात्। फलबलेन तथैव व्युत्पत्तिक-

१ गोवृत्तित्वेनार्थादिति पाठः। २ संयोगावच्छिन्नोदकवृत्तीति पाठः।

ल्पनात्। नचैवमजा नयति ग्राममित्यादौ ग्रामस्य संप्रदानत्वापत्तिः। तत्र हि संयोगावच्छिन्नगमनानुकूलव्यापारः प्रेरणादिर्धात्वर्थः। द्वितीयाद्वयस्य वृत्तित्वमर्थः। धात्वर्थतावच्छेदकगमनैकदेशे संयोगे ग्रामपदोत्तरद्वितीयार्थस्य, गमने चाजापदोत्तरद्वितीयार्थस्य वृत्तित्वस्यान्वयः। एवं च ग्रामवृत्तिसंयोगजनकाजावृत्तिगमनावच्छिन्नव्यापारानुकूलकृतिमानित्यन्वयधीः। तथा चाजाजन्यफलभागित्वेनोद्देश्यत्वेन ग्रामस्याप्रत्ययात् न संप्रदानता।—

यत्र तु तथोद्देश्यत्वं विवक्ष्यते तदा ग्रामायाजां नयतीति प्रयोगो भवत्येवेत्याहुः।

वस्तुतस्तु त्यक्तुस्त्यज्यमानद्रव्यस्वत्वभागित्वेनोद्देश्यत्वं संप्रदानत्वम्। त्यागविशेषश्चात्र ग्राह्यः। तेन विक्रयादौ क्रेत्रादेर्न संप्रदानता। श्राद्धादौ पित्रादेर्न स्वत्वभागित्वेनोद्देश्यत्वं, किंतु प्रीतिभागितयेति। अत एव संप्रदाने चतुर्थ्यसंभवात् नमः स्वस्तीत्यादिना सूत्रान्तरेण चतुर्थीविधानम्। रुद्राय गां ददातीत्यादौ रुद्रादेः स्वत्वभागित्वेनोद्देश्यत्वम्। एवं कर्मणेत्यादिसूत्रमप्येतत्परतयैव व्याख्येयमिति कर्मणा दानकर्मणा यमभिप्रैति स्वत्वभागित्वेनोद्देश्यीकरोति तत्संप्रदानमिति। एवं च संप्रदीयतेऽस्मा इति व्युत्पत्त्या संप्रदानसंज्ञाप्यन्वर्थैव।

वृक्षायोदकमासिञ्चतीत्यादौ संप्रदानप्रयोगो गौणः चतुर्थीप्राप्त्यर्थः। अत एव शत्रवेऽस्त्रं मुञ्चति मित्राय दूतं प्रेरयतीत्यादौ धात्वर्थतावच्छेदकफलोद्देश्यत्वाभावेऽपि चतुर्थीप्रयोग उपपद्यते। विभागानुकूलव्यापारो मोचनम्। गमनानुकूलव्यापारश्च प्रेषणम्। तदवच्छेदकविभागगमनादिशालित्वेन शत्रुमित्रयोरनुद्देश्यत्वात्। तथाच तत्र तत्र उदकादिजन्यफलपल्लवादि—शस्त्रजन्यदुःखादि—दूतजन्यवार्ताज्ञानादिफलशालित्वेनोद्देश्यत्वमेव गौणश्चतुर्थ्यर्थः।

न चैवं गुरुप्रीतिमुद्दिश्य गुरुपुत्राय दत्ते गुरवे ददातीति स्यात्। तथा विवक्षाया मिष्टत्वात्। अत एव यत्र रजकसंबन्धित्वमात्रं तात्पर्यविषयस्तत्र रजकस्य वस्त्रं ददातीति प्रयोगः। यत्र वस्त्रजन्यफलभागित्वेनोद्देश्यत्वं तात्पर्यविषयः तत्र रजकाय वस्त्रं ददातीति प्रयोगो भवत्येव।

न चैवं श्राद्धादावपि पित्रादेः प्रीतिभागितया उद्देश्यत्वाद्गौणसंप्रदान-

१ प्राणवियोगानुकूलक्रियावच्छिन्नव्यापार इति पाठः। २ संयोगेति पाठः।

त्वेन संप्रदाने चतुर्थ्यैवोपपत्तेः नमः स्वस्तीत्यादिसूत्रान्तरं व्यर्थमिति वाच्यम्, यत्किंचित्क्रियाकर्मजन्यफलभागित्वेनोद्देश्यत्वस्यैव गौणसंप्रदानत्वेन नमःपदादेः क्रियावाचित्वाभावेन पृथक्सूत्रप्रणयनात् ।

नारदाय रोचते कलहः, वैश्याय शतं धारयतीत्यादौ तु नारदादेर्न संप्रदानता किंतु 'रुच्यर्थानां प्रीयमाणः' 'धारेरुत्तमर्णः' इति सूत्रद्वयेन संबन्धमात्रे चतुर्थी विधीयते । तत्र चतुर्थ्या संबन्धो धातुना रुचिराख्यातेन विषयताभिधीयते । नारदस्य रुचिविषयः कलहः इत्याद्यस्य; पुनर्दानमङ्गीकृत्य द्रव्यग्रहणं धारणं, वैश्यः शतकर्मकतादृशग्रहणाश्रय इति चान्त्यस्यान्वयधीः ।

संप्रदानस्य कारकत्वं धात्वर्थतावच्छेदकफलनिष्पादकत्वेन ददस्वेत्यनुमतिप्रकाशनेन कर्तुरिच्छामुत्पाद्य दाननिष्पादनेन[1] वेति[2] ।

त्यागजन्यस्वत्वजनकस्वीकारवत्त्वं संप्रदानत्वम् । श्राद्धादौ पित्रादेर्न स्वीकारः । रुद्राय गां ददातीत्यादावपि संप्रदानत्वं गौणमुद्देश्यत्वरूपमित्यप्याहुः ॥

---

अपादानत्वविवेचनम् ।

## परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम् ।

वृक्षात्पर्णं पततीत्यादौ पतनाश्रयस्य पत्रादेरपादानत्ववारणाय परकीयेति । अत्र पञ्चम्या विभागजनकत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वं चाभिधीयते । विभागे अन्योन्याभावे च वृक्षोऽधिकरणत्वेनान्वीयते । एवं च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकपतनाश्रयः पत्रमित्यन्वयधीः ।

अत्र च धात्वर्थतानवच्छेदकत्वेन विभागो विशेष्यः । तेन वृक्षं त्यजति खग इत्यादौ वृक्षस्य नापादानत्वम् ।

यत्तु विभागावच्छिन्नक्रियायाः त्यजधात्वर्थतया विभागे[3] विशिष्टक्रियाया जनकत्वाभावान्न तत्र तथेति । तदसत् । तथा सत्यधःसंयोगाव-

---

१ 'वच्छेदकफलयत्नानि'; वच्छेदकत्वेन फलनिष्पादकत्वेन यत्नानि इति पाठः । २ निष्पादनेनैवेति पाठः । ३ विभागे विभागावच्छिन्नक्रियाजन्यत्वाभावादिति पाठः ।

च्छिन्नक्रियाया एव पतधात्वर्थतया वृक्षपर्णविभागे पर्णाधःसंयोगस्याजनकत्वादसंभवापत्तेः। तदुपलक्षितजन्यत्वं चोभयत्र समानमिति।

एवं च ग्रामाद्गच्छतीत्यादौ गमनादिजन्यविभागाश्रयत्वेन ग्रामादेरपादानत्वम्। 'ध्रुवमपायेऽपादानम्' इति पाणिनिसूत्रम्। अपाये विभागे ध्रुवं निश्चलं तद्विभागजनकक्रियाशून्यमिति तदर्थः। धावतोऽश्वात्पततीत्यादौ तु पञ्चमी नैतत्सूत्रेणानुशिष्टा तदर्थं वक्तव्यान्तरं विधेयम्।

वस्तुतस्तु विभागजनकत्वं यत्र क्रियायामन्वीयते तत्क्रियाशून्यत्वमर्थः। तेन धावतोऽश्वात्पततीत्यादौ न काप्यनुपपत्तिः। तत्र पतनक्रियायामेव पञ्चम्यर्थविभागजनकत्वान्वयेनाश्ववृत्तिधावनक्रियायां तदनन्वयादिति।

विभागे ध्रुवमवधिभूतमपादानमित्यर्थः। अवधित्वं च स्वरूपसंबन्धविशेषः प्रतीतिबलात्। तेन धावतोऽश्वात्पततीत्यादौ सक्रियाश्वादेरपादानत्वं नानुपपन्नम्। अत एव वृक्षपर्णयोः क्रियया पत्रस्य विभागेऽपि वृक्षस्यावधित्वोपपत्तिरिति तु कश्चित्।

वृक्षाद्विभजत इत्यादौ तु विभागावधित्वमपादानत्वमवधित्वमवधिमत्त्वं वा स्वरूपसंबन्धरूपं पञ्चम्यर्थः। एवं च वृक्षाद्यवधिकविभागाश्रयः पर्णमित्यन्वयबोधः। न चैवं स्वस्माद्विभजत इत्यपि स्यादिति वाच्यम्। स्वप्रतियोगिकत्वविशिष्टसंयोगस्येव स्वावधिकत्वविशिष्टविभागाश्रयत्वस्य स्वस्मिन्नभावात्। इत्थं चापादानपदं पञ्चमी च नानार्थमेवेति।

न चैवं परकीयस्पन्दजन्यविभागाश्रयत्वेन वृक्षात्पर्णं स्पन्दत इत्यपि स्यादिति वाच्यम्। परकीयक्रियेत्यत्र क्रियापदेन सकर्मकधात्वर्थस्य विवक्षितत्वात्।

व्याघ्राद्बिभेति शत्रोः परित्रायते इत्यादौ पञ्चमी नापादाने किं तु 'भीत्रार्थानां भयहेतुः' इति सूत्रेणानुशिष्टायाः पञ्चम्या हेतुत्वमर्थः। धातोर्यथायथं भयं भयाभावश्चार्थः। पञ्चम्यर्थश्च हेतुत्वं धात्वर्थे भये धात्वर्थतावच्छेदके च भयेऽन्वेति। आख्यातार्थश्चाश्रयत्वं। परित्राणानुकूलव्यापारश्च। इत्थं च हेतुपञ्चम्यैवोपपत्तौ पृथक्सूत्रप्रणयनं तस्यैव प्रपञ्चार्थमिति बोध्यम्। तथा च व्याघ्रहेतुकभयाश्रयः शत्रुहेतुकभयाभावानुकूलव्यापारवानिति चान्वयधीः।

---

१ संयोगावच्छिन्नक्रियात्वेनाजनकत्वादिति पाठः। २ ग्रामादागच्छतीति पाठः। ३ बलात्कस्यापीति पाठः।

एवं कूपादन्धं वारयतीत्यादौ पञ्चम्याः पतनं, द्वितीयाया धात्वर्थैकदेशप्रतिबन्धान्वितं वृत्तित्वं, धातोश्च प्रतिबन्धानुकूलव्यापारोऽर्थः । ( आख्यातस्य कृतिः ) तथा चान्धवृत्तिकूपपतनप्रतिबन्धानुकूलव्यापारानुकूलकृतिमानिति वाक्यार्थस्तु न युक्तः, यत्र कूपे कस्यापि पतनमप्रसिद्धं तत्रासंभवात् । अत एव द्वितीयायाः पतनं पञ्चम्या धात्वर्थान्वयिवृत्तित्वं धातोश्चाभावानुकूलव्यापारोऽर्थः । तथा च कूपवृत्त्यन्धपतनाभावानुकूलव्यापारविषयकयत्नवानित्यर्थोऽपि न युक्तः, यदन्धस्य पतनमप्रसिद्धं तत्रासंभवात् । किं तु धातोरभावानुकूलव्यापारः, पञ्चम्या वृत्तित्वं, द्वितीयायाः प्रतियोगित्वमनुयोगित्वं वा धात्वर्थतावच्छेदकीभूताभावान्वितमर्थः । अभावश्च कूपादिसमभिव्याहारादिवशात्पतनादिना संबन्धेन बोध्यः । एवं च पतनादिसंबन्धेन कूपवृत्त्यन्धप्रतियोगिकाभावानुकूलव्यापारविषयकयत्नवानित्यन्वयधीः । एवमेतस्मात्सविषान्नादमुं मित्रं वारयतीत्यादौ यत्सविषान्नस्य यन्मित्रस्य भोजनमप्रसिद्धं तत्रापि भोजनादिसंबन्धेन सविषान्नवृत्तिमित्रप्रतियोगिकाभावानुकूलव्यापारविषयकयत्नवानित्यन्वयधीः ।

कूपादन्धमित्यत्र सविषान्नादमुं मित्रमित्यत्र च यथायथं धातोः पतनं भोजनमभावानुकूलव्यापारश्चार्थः । पञ्चम्याश्च यथायथं द्वितीयार्थकर्तृत्वान्वितद्वित्वविशिष्टं वृत्तित्वं कर्मत्वं चार्थः । द्वितीययोः कर्तृत्वमर्थः । धात्वर्थतावच्छेदकीभूते चाभावे धात्वर्थस्य पतनादेरधिकरणत्वेन द्वित्वावच्छिन्नस्य पञ्चम्यर्थवृत्तित्वादिद्वितीयार्थकर्तृकत्वोभयस्य च प्रतियोगित्वेनान्वयो व्युत्पत्तिवैचित्र्यात् । एवं च पतनसामान्ये कूपवृत्तित्वान्धकर्तृकत्वोभयाभावानुकूलव्यापारविषयकयत्नवानित्याद्यस्य, भोजनसामान्ये सविषान्नकर्मकत्वमित्रकर्तृकत्वोभयाभावानुकूलव्यापारविषयकयत्नवानिति द्वितीयस्य बोधः ।

एवमेवाकाशं न पश्यति घट इत्यादावाकाशविषयकदर्शनस्य घटवृत्तिदर्शनस्य चाप्रसिद्धय़ां वक्ष्यमाणरीत्याऽन्वयबोधो द्रष्टव्य इति । तत्र द्वितीयया विषयित्वरूपं कर्मत्वं लक्षणया च घटवृत्तित्वं द्वित्वं च बो-

१ ' धात्वर्थतावच्छेदकीभूतप्रतिं इति पाठः । २ धात्वर्थतावच्छेदकीभूताभावान्वयिवृत्तित्वमिति पाठः । ३ रात्पतनादिसंबन्धेनेति पाठः । ४ सहितमिति पाठः । ५ कर्तृकदर्शनस्येति पाठः । ६ द्वावपीति पाठः ।

ध्यते । धातुना चालौकिकभिन्नं जन्यं प्रत्यक्षं, तत्रैव द्वित्वावच्छिन्नद्वितीयार्थान्वितनञर्थस्यान्वयः । आख्यातस्य तादृशोभयाभावान्वितं निरूपकत्वमर्थः । तथा चालौकिकभिन्नजन्यप्रत्यक्षसामान्यवृत्त्याकाशविषयित्वघटवृत्तित्वोभयाभावनिरूपको घट इत्यन्वयबोधः ।

न चाकाशं न पश्यत्यभात्र इत्यादौ समवायसंबन्धेनाभाववृत्तित्वाप्रसिद्ध्या नोक्तक्रमेण समञ्जसमिति वाच्यम्, तत्र हि धातोर्निरुक्तलौकिकप्रत्यक्षप्रतियोगित्वं समवायश्चार्थः । द्वितीयायाश्च विषयिप्रतियोगिकत्वमभावानुयोगित्वं त्रित्वं चार्थः । एकदेशे च विषयित्वे प्रकृत्यर्थस्याकाशादेर्निरूपकत्वेनान्वयः । तथा च समवायसंबन्धसामान्ये आकाशविषयिप्रतियोगिकत्वनिरुक्तलौकिकप्रत्यक्षप्रतियोगिकत्वाभावानुयोगिकत्वैतत्रित्वावच्छिन्नस्य योऽभावस्तन्निरूपकोऽभाव इत्यन्वयबोधः ।

केचित्तु तत्र धातोर्निरुक्तलौकिकप्रत्यक्षसमवायोऽर्थः । द्वितीयायाश्च विषयिप्रतियोगिकत्वमभावानुयोगिकत्वं चार्थः । विषयित्वे च एकदेशे प्रकृत्यर्थस्याकाशस्य निरूपकतयाऽन्वयः । तथा च निरुक्तलौकिकप्रत्यक्षसमवाये आकाशविषयिप्रतियोगिकत्वाभावानुयोगिकत्वोभयत्वावच्छिन्नस्य योऽभावस्तन्निरूपकोऽभाव इत्यन्वयबोधः ।—

अनयैव दिशा अप्रसिद्धिस्थले बोधो द्रष्टव्य इत्यपि वदन्ति ।

हिमवतो गङ्गा प्रभवति इत्यादौ न पञ्चम्या हेतुत्वं धातुना च उत्पत्तिर्बोध्यते । तथा सति 'जनिकर्तुः प्रकृतिः' इत्यत एव उपपत्तौ 'भुवः प्रभवः' इति सूत्रप्रणयनवैयर्थ्यात् । किं तु प्रकर्षेण भवनं प्रभवः प्रकाशः आद्यबहिःसंयोग इति यावत् । स एव धात्वर्थः । बहिःपदार्थः प्रकृते भूखण्डमेव । पञ्चम्यर्थश्च संयोगध्वंसाव्यवहितोत्तरवृत्तित्वमाख्यातार्थ आश्रयता । तथा च हिमालयसंयोगध्वंसाव्यवहितोत्तरक्षणवर्त्याद्यपृथिवीसंयोगाश्रयतावती गङ्गेत्यन्वयधीः । वैकुण्ठात् काशीतो वा गङ्गा प्रभवतीत्यप्रयोगात् अव्यवहितेति आद्येति च । वैकुण्ठसंयोगध्वंसाव्यवहितोत्तरक्षणे भूसंबन्धस्य काशीसंयोगध्वंसाव्यवहितोत्तरक्षणे चाद्यस्य तस्याभावात् । वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्ये-

---

१ च लौकिकप्रत्यक्षसामान्येति पाठः । २ एतदादि अनयैवेत्यतः प्राक्तनो ग्रन्थः पुण्यपत्तनपुस्तके नास्ति ।

त्यादावपि स एव धात्वर्थः । परंतु अत्र वल्मीकाग्रोर्ध्वदेशो वहिः-पदार्थ इति विशेषः ।

कृष्णात्पराजयते शिशुपालः, अध्ययनात्पराजयते बालः, इत्यादौ च धातोरसहिष्णुता पञ्चम्याः कर्मत्वमाख्यातस्याश्रयत्वमर्थः । श्रीकृष्णं न सहते अध्ययनं न सहत इति तदर्थविवरणात् । असहिष्णुता च द्वेष-विशेषोऽभिभवाशक्यत्वज्ञानमशक्यत्वज्ञानं वा । इत्थं च श्रीकृष्णविषयक-द्वेषवान् श्रीकृष्णविषयकाभिभवाशक्यत्वज्ञानवान् वा इत्याद्यस्य अध्ययन-विषयकाशक्यत्वज्ञानवानित्यन्त्यस्य बोधः ।

विप्राद्धनमादत्ते इत्यादौ पञ्चम्या यथेष्टविनियोगोऽर्थो न तु स्वत्वं चौराद्धनमादत्ते इत्यादौ चौरस्य स्वत्वाभावेन तदसंभवात् । धातोरपि यथेष्टविनियोगफलकस्वीकारोऽर्थो न तु स्वत्वजनकस्वीकारः, विप्राद्धन-मादत्ते चौर इत्यादौ चौरस्य तदसंभवात् । पञ्चम्यर्थस्य विनियोगस्य चाव्यवहितोत्तरत्वसंबन्धेन धात्वर्थतावच्छेदकविनियोगेऽन्वयः । अव्यव-हितोत्तरत्वं च स्वसमानविषयकपुरुषान्तरीयविनियोगव्यवहितभिन्नत्वं, तेन शूद्रतः प्रतिगृह्य विप्रेण दत्तं धनमादत्तरि शूद्रादादत्ते इति न प्रयोगः । इत्थं च विप्रीययथेष्टविनियोगाव्यवहितोत्तरधनवृत्तियथेष्टविनियोगफल-कस्वीकारवानित्यन्वयबोधः ।

अधर्माज्जुगुप्सत इत्यत्र पञ्चम्याः कर्मत्वं धातोर्निन्दार्थः । अधर्मं निन्दतीत्यर्थः । अधर्माद्विरमतीत्यादौ धातोः करणानन्तरमकरणं पञ्चम्याः कर्मत्वमर्थः । स च करणेऽकरणेचान्वेति । अधर्मं कृत्वा पुनर्न करोतीत्यर्थः । एवं धर्मात्प्रमाद्यतीत्यादौ पञ्चम्या विषयित्वं धातोरनवधानमाख्यातस्य चाश्रयत्वमर्थः । धर्मविषयकानवधानाश्रय इत्यन्वयधीः ।

उपाध्यायादन्तर्धत्ते शिष्य इत्यादौ धातोः स्वविषयकप्रत्यक्षविरोधि-व्यापारः, पञ्चम्याः संबन्धित्वं धात्वर्थतावच्छेदकप्रत्यक्षान्वितम्, आ-ख्यातस्य कृतिरर्थः । उपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारा-नुकूलकृतिमानिति चान्वयधीः ।

दण्डाद्घटः धूमादग्निमानित्यादौ पञ्चमी नापादाने क्रियायोगाभा-वात् । किंतु जनकत्वज्ञापकत्वरूपे हेतुत्वे जन्यत्वज्ञाप्यत्वरूपे वा हेतुमत्त्वे हेताविति सूत्रेणानुशिष्टा । न चैवं जनिकर्तुः प्रकृतिरिति सूत्रं व्यर्थम् । काष्ठात्पचतीत्यादाविव दण्डाज्जायत इत्यादावपि उत्पत्तिरूपधात्वर्थनिरू-

पितहेतुत्वार्थकपञ्चम्या हेताविति सूत्रेणैव संभवादिति वाच्यम् । उत्पत्ते-रहेतुकत्वेऽपि सावधिकत्वादुत्पत्तिनिरूपिततादृशस्वरूपसंबन्धस्य हेतुत्वाद्-न्यत्वेन हेताविति सूत्रेण पञ्चम्या अलाभात् ॥

---

## अधिकरणत्वविवेचनम् ।

अधिकरणत्वं च न॥धर्मसंबन्धः॥संबन्धस्य संयोगादिरूपस्य द्विष्ठत्वात् बदरादेरपि कुण्डाधारतापत्तेः । नच कुण्डं न बदरधर्म इति वाच्यम् । तर्हि स्वधर्मसंबन्धोऽधिकरणत्वमिति पर्यवसितम् । स्वधर्मत्वं च स्वाधेय-त्वम् । तच्च यदि स्वनिरूपिताधिकरणसंबन्धित्वं तदा अन्योन्याश्रयः । अन्यच्च दुर्वचम् ।

नापि॥उत्पत्तये स्थितये ज्ञप्तये चापेक्षणीयमधिकरणम्॥उत्पत्तये अपे-क्षणीयं च कार्यस्य समवायिकारणं, स्थितये घटादेर्भूतलादि, ज्ञप्तये च जात्यादेः समवायि, अभावसमवाययोः स्वरूपसंबन्धीति वाच्यम् । अपेक्ष-णीयत्वं हि न जनकत्वमतीन्द्रियजात्याद्यधिकरणाव्याप्तेः ( तस्य लौकिक-प्रत्यक्षाभावात्संनिकर्षाघटकत्वेनाजनकत्वात्, ) दण्डादेर्घटाद्यधिकरणता-पत्तेश्च । नाप्यधिकरणत्वम्, आत्माश्रयात् ।

नापि—॥तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवन्मूर्तत्वं पतनाश्रयद्र-व्यस्याधिकरणत्वम्॥मूर्तत्वेन विशेषणात् ब्रह्माण्डधारकसंयोगाश्रयेऽपीश्वरे नातिव्याप्तिः । पतनशून्यमूर्तस्यापि विलक्षणतत्संयोगवत्त्वमधिकरणत्वम् । अत एव पङ्कजकोरकान्तरोत्पन्नविनष्टभ्रमरस्याप्यधिकरणे पतनाप्रसि-द्ध्या नाव्याप्तिः । गुणक्रियाजात्यादेश्च तत्समवायित्वमिति । अभावसमवायादीनां च तत्स्वरूपसंबन्धित्वमेवं परंपरासंबन्धेनापि निर्वाच्यमिति—वाच्यम् । अननुगमात् । भूतले घट इत्यादौ उक्तरूपेण सप्तम्यर्थतायां गौरवादननुभवाच्च ।

किंतु प्रतियोगित्वानुयोगित्ववदाधेयत्वमधिकरणत्वं च—

**विलक्षणप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः ।**

---

१ अभावादिति पाठः । २ यत्वमधिकरणत्वमिति पाठः । ३ योः स्वरूपमस्तीति; अभावसंबन्धीति च पाठः । ४ मक्षतम् इति पाठः । ५ भ्रमराधिकरणेऽपि तत्पतनेति पाठः ।

स चातिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत्। तत्र[1] गेहे चैत्रः पचतीत्यत्र पाकस्याधःसंतापनस्य साक्षाद्गेहावृत्तित्वेऽपि कर्तृघटितपरंपराधिकरणत्वमाधेयत्वं वा पाकादिक्रियान्वितं सप्तम्यर्थः। स्थाल्यामोदनं पचतीत्यत्राधःसंतापनस्य पाकस्य साक्षात्स्थालीवृत्तित्वेऽपि कर्मघटितपरंपरयाधिकरणत्वमाधेयत्वं वा सप्तम्यर्थः पाकादावन्वेति। अनुभवबलेन तथैव व्युत्पत्तिरिति वृद्धाः। तदाहुः—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।
उपकुर्वन् क्रियाशक्तौ शास्त्रेऽधिकरणं स्मृतम्। इति।

एवं च*कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वमधिकरणत्वम्*इति।

वस्तुतस्तु—*परंपरया क्रियाश्रयत्वमेवाधिकरणत्वम्*अत एव प्राङ्गणस्थेन पुंसा दीर्घदण्डादिना काष्ठादिचालनद्वारा गृहान्तर्वर्तिपाककरणे, कर्तृद्वारा क्रियानाश्रयत्वेऽपि गृहस्य, गृहे पचतीति प्रयोगः। न चैवं परंपरयेति व्यर्थम्। अधःसंतापनं हि अधोवह्निसंयोगानुकूलकाष्ठवह्न्यादिव्यापारस्तस्य च साक्षात्काष्ठवह्न्यादिवृत्तित्वेऽपि काष्ठे वह्नौ[2] वा पचतीति प्रयोगाभावात्। एवं पथि गच्छतीतिवत् स्वस्मिन् गच्छतीति[3] प्रयोगाभावादपि च तत्पदमिति। क्रियानिरूपिताधिकरणत्वस्यैव सर्वत्र सप्तम्यर्थत्वे विना क्रियायोगं भूतले घट इत्यादि प्रयोगो न स्यादिति वाच्यम्। इष्टत्वादिति वैयाकरणाः।

अधिकरणत्वमाधेयत्वं च[4] सप्तम्यर्थः। स च यत्र क्रियान्वयी तत्र कारकव्यवहारः। अत एव भूतले घट इत्यादौ क्रियाशून्यवाक्यात् भूतलाधेया घट इति शाब्दबोधो भवत्येवेति न्यायविदः।

गृहे स्थाल्यामोदनं पचतीत्यत्र निरुक्तसंबन्धेन गेहाधिकरणकस्थाल्यधिकरणकौदनकर्मकपाकानुकूलकृतिमानित्यन्वयधीः। भूतले घट इत्यादौ सप्तम्या अधिकरणत्वमर्थः, तत्र च प्रकृत्यर्थस्याश्रयत्वेन प्रथमान्तार्थस्य च निरूपकत्वेनान्वयः, भूतलनिष्ठाधिकरणतानिरूपको घट इत्यन्वयबोध इति प्राञ्चः।

---

१ अत्र गेहे चैत्रः पचतीति पाठः। २ काष्ठेन वह्नौ इति पाठः। ३ गच्छतीत्यप्रयोगादपि इति पाठः। ४ वेति पाठः।

निरूपकत्वादेः संबन्धस्य प्रतियोगितावच्छेदकत्वाभावान्नअर्थान्वया-नुपपत्त्या आधेयत्वं सप्तम्यर्थः। तत्र च प्रकृत्यर्थस्य निरूपकतया प्रथ-मान्तार्थस्य चाधिकरणतयान्वये भूतलनिरूपिताधेयत्ववान् घट इत्यन्वय-बोध इति नव्याः।

चर्मणि द्वीपिनं हन्तीत्यादौ निमित्तसप्तमी। निमित्तत्वमुद्देश्यत्वम्। तच्च फलत्वेन फलवत्त्वेन वा इच्छाविषयत्वम्। प्रथमे मशकनिवृत्तौ धूमं करोतीति। द्वितीये तु चर्मणि द्वीपिनं हन्तीत्यादि। चर्मादेः सिद्ध-त्वादिच्छाविषयत्वाभावेऽपि साध्यीभूतयथेष्टविनियोगरूपफलवत्त्वेनोद्दे-श्यत्वात्। अत्र च यथायथं तादृशेच्छा सप्तम्यर्थः। तस्याश्च धात्वर्थे प्रयो-ज्यत्वसंबन्धेनान्वयः। तथाच मशकनिवृत्तिविषयकेच्छाप्रयोज्यधूमकर-णाश्रयः। चर्मविषयकयथेष्टविनियोगप्रकारकेच्छाप्रयोज्यद्वीपिकर्मकहनना-नुकूलकृतिमानिति च क्रमेणान्वयबोधः। अत्र च निमित्तात्कर्मयोग इत्यनुशासनात् यत्किञ्चित्कर्मप्रकारकबोधजनकधातुयोगो नियामकः। सकर्मकधातौ कर्मबोधकसमभिव्याहारेण कर्मप्रकारकबोधजनकता। यथा द्वीपिनं हन्तीत्यादौ।

अकर्मकधातौ च कर्मविशिष्टार्थशक्त्या[१]। 'अविद्यारजनीक्षये यदु-देति' इत्यत्र उदयगिरिशिखरमारोहतीत्यर्थकरणात् कर्मविशिष्टबोधजन-कत्वमविशिष्टम्। अत्र रजनीक्षयस्य सूर्योदयाजन्यत्वेऽपि निमित्तत्वं ज्ञानविषयत्वेनोद्देश्यत्वम्। तेन लोकानां रजनीक्षयज्ञानार्थं यदुदेतीत्यर्थः।

शरदि पुष्यन्ति सप्तच्छदा इत्यादावुत्पत्तिरपि सप्तम्यर्थः, शरदुत्पत्ति-कपुष्पाश्रयाः सप्तच्छदाः इति वाक्यार्थः। न च शरदुत्पत्तिकपुष्पाश्रये चम्पकादावपि तथा प्रयोगः स्यादिति वाच्यम्। सप्तच्छदस्य पुष्पाश्रयत्वे लब्धे समानवित्तिवेद्यतया सप्तच्छदवृत्तित्वस्यापि पुष्पेषु लाभात्तदवच्छेदेन शरदुत्पत्तिकत्वान्वयस्य व्युत्पत्तिसिद्धत्वात्। चम्पकादिपुष्पत्वावच्छेदेन शरदुत्पत्तिकत्वाभावेन तथा प्रयोगाभावात्। धातोर्वा सप्तच्छदीयपुष्पे लक्षणेत्यपि कश्चित्

सति सप्तम्याः सामानाधिकरण्यमर्थः। तच्च क्वचित्कालिकं, क्वचि-द्दैशिकम्। तत्राद्यं समानकालीनत्वपर्यवसन्नं यथा गोषु दुह्यमानास्वागतः दुग्धास्वागत इत्यादौ। अत्र च समानकालीनत्वे सप्तम्यर्थे दोहनमात्रस्य

१ प्रतियोगितानवच्छेदकत्वादिति पाठः। २ कर्मविशिष्टस्वार्थशक्त्येति पाठः।

न निरूपकत्वेनान्वयः, महिष्यादिदोहनसमानकालीने तथाऽप्रयोगात् । नापि गोदोहनस्य, धातुना गोदोहनत्वेनानुपस्थितेः । किं तु दण्डी पुरुषो गच्छतीत्यत्र यथा परंपरया पुरुषविशेषणतापन्नदण्डसमानकालीनत्वं गमने भासते तथा गोविशेषणकर्मताविशेषणतापन्नस्यैव दोहनस्य समानकालीनत्वमागमने भासते इति । इत्थं च तादृशदोहनसमानकालीनगमनानुकूलातीतकृतिमानिति आद्यस्य वाक्यार्थः ।

दुग्धास्वागत इत्यादौ तु न तथान्वयः । दोहनस्यातीतत्वेन बोधात् । किं तु वर्तमानध्वंसप्रतियोगिकृतिजन्यदोहनकर्मतापन्नासु गोष्वागत इति वाक्यार्थः । गोविशेषणकर्मताविशेषणदोहनविशेषणकृतिविशेषणप्रतियोगित्वविशेषणतापन्नस्य वर्तमानध्वंसस्य समानकालीनत्वमागमने भासते । तथा च तादृशवर्तमानध्वंससमानकालीनागमनानुकूलकृतिमानिति वाक्यार्थः ।

गुणकर्मान्यत्वे सति सत्त्वादित्यादौ च दैशिकं, तत्र हि गुणकर्मान्यत्वसामानाधिकरण्यस्य सत्त्वे बोधात्[1] । यद्यपि 'यस्य च भावेन भावलक्षणम्' इति सूत्रे क्रिययोः सामानाधिकरण्ये सप्तमीविधानान्नामार्थयोः सामानाधिकरण्ये सप्तमी न युक्ता । तथापि गुणकर्मान्यत्वे सति सत्त्वादित्यभियुक्तप्रयोगदर्शनात् सूत्रे भावपदं धर्मपरतया व्याख्याय तत्संगमनीयम् ।

यस्य च धर्मेण धर्मान्तरं निरुक्तस्वसामानाधिकरण्येन प्रतिपाद्यते तत्र सप्तमीति सूत्रार्थः । यस्य क्रियया अन्यस्य क्रियान्तरं लक्ष्यते इति व्याख्यानं तु शाब्दिकानां प्रायिकमिति । एवमन्यत्राप्यूह्यम् ।

इति शब्दार्थसारमञ्जर्यां भवानन्दसिद्धान्तवागीशविरचितं षट्कारकविवेचनं समाप्तम् ।

---

१ गुणसमाधिकरणसत्त्वस्येति पाठः ।

जयरामभट्टाचार्यविरचितः

# कारकवादार्थः ७.



नत्वा शंभोः पदाम्भोजं जयरामः समासतः ।
करोति कारकव्याख्यामिह संख्यावतां मुदे ॥ १ ॥

## कारकत्ववादः ।

तत्र कारकाणि कर्तृकर्मकरणसंप्रदानापादानाधिकरणानि षट् । तत्त्वं च न*क्रियानिमित्तत्वम्*। चैत्रस्य तण्डुलं पचतीत्यादौ संबन्धिनि चैत्रादावतिव्याप्तेः । अनुमतिप्रकाशनादिद्वारा संप्रदानादेरिव तण्डुलादिसंपादनद्वारा संबन्धिनोऽपि पाकादिक्रियानिमित्तत्वात् । किंतु—

### क्रियान्वितविभक्त्यर्थान्वितत्वम् ।

अस्ति च कर्तृकर्मादौ क्रियान्विततिङ्सुब्विभक्त्यर्थान्वयः, न तूदाहृते संबन्धिनि । षष्ठ्यर्थसंबन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वात् । चैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः, षष्ठ्यर्थसंबन्धस्य तण्डुलादिनामार्थेनैव क्रियायाः कर्मत्वादिनैव साकाङ्क्षत्वात्परस्पराकाङ्क्षाविरहात् । ओदनस्य भोक्ता, चैत्रस्य पाक इत्यादौ कर्मत्वकर्तृत्वार्थिका षष्ठी कारकविभक्तिरेव । ' कर्तृकर्मणोः कृति ' इत्यनेन तद्विधानात् । अत एव संबन्धस्य न कारकत्वं क्रियायोगाभावादिति शाब्दिकाः । अत एव ' गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक्स्वभेषजैः ' इत्यादौ, ' सा लक्ष्मीरुपकुरुते यया परेषाम् ' इत्यादौ च रोगे विपत्तौ चेत्यादिनामाध्याहारेणैव बोधः । यदि च विनाध्याहारं षष्ठ्यर्थसंबन्धस्य क्रियायामन्वयः प्रामाणिकस्तदा क्रियान्वितकर्तृत्वकर्मत्वादिषट्कान्यतमान्वयित्वं कारकत्वं बोध्यम् । अत एव—

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

इत्यादौ निमित्तादेरपि न कारकत्वमित्येता उपपदविभक्तयो न तु कारकविभक्तयः ।

गां दोग्धि पयः अजां ग्रामं नयतीत्यादौ गौणमुख्यकर्मद्वयमपि लक्ष्यम्। अत्र हि द्रवद्रव्यविभागानुकूलक्रियानुकूलव्यापारविशेषः कर्तृनिष्ठो दुहेरर्थः। वायुर्वृक्षं पर्णं दोग्धीति वारणाय द्रवद्रव्येति देयम्। मेघो गगनं जलं दोग्धीति वारणाय विशेषेति। विशेषो हि दुहिधातुप्रयोगगम्यः। इत्थं च द्रवद्रव्येति न देयमित्यपि वदन्ति। संयोगानुकूलक्रियानुकूलव्यापारो नीधातोरर्थः।

तत्राद्ये विभागे गामित्यस्य क्रियायां पय इत्यस्यान्वयाद्गोवृत्तिविभागानुकूलपयोवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानिति वाक्यार्थः। द्वितीये ग्राममित्यस्य संयोगेऽजामित्यस्य क्रियायामन्वयाद्ग्रामवृत्तिसंयोगानुकूलाजावृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानिति वाक्यार्थः। साक्षाद्धात्वर्थतावच्छेदकनिरुक्तक्रियाद्वयरूपफलान्वयिनान्वयिनोरजापयसोर्मुख्यकर्मत्वम्। तादृशक्रियारूपफलावच्छेदकविभागसंयोगरूपफलद्वयान्वयिनान्वयिनोर्गोग्रामयोर्गौणं कर्मत्वम्। उभयत्रापि धात्वर्थान्वितविभक्त्यर्थान्वितत्वमस्ति। फलद्वयस्यापि धात्वर्थत्वात्। अत एव कर्मद्वयसाकाङ्क्षफलबोधकधातुत्वं द्विकर्मकत्वं सूपपादम्।

यत्तु विभागानुकूलक्रिया दुहेरर्थः, संयोगानुकूलक्रिया नयतेरर्थः, नतु तदुभयानुकूलकर्तृव्यापारः। कर्मद्वयस्याप्येकत्र फले अन्वय इति। तन्न, पयोऽजयोः कर्मत्वानुपपत्तेः, परसमवेतत्वस्य क्रियायामभावात्। कर्मद्वयस्याप्येकत्र फलेऽन्वये च गौणमुख्यव्यवहारो न स्यात्। एतेन विभागाद्यनुकूला कर्तृगता चेष्टैव दुहादेरर्थ इत्यपास्तम्, फलद्वयाप्रवेशे गौणमुख्यव्यवहारानुपपत्तेः।

यदपि गामित्यस्यार्थो गोवृत्तित्वं पयस्येवान्वेतीति गौणं कर्म न लक्ष्यमिति तदपि न, गौः पयो दुह्यते इत्यादौ गोः कर्मत्वस्य दुरुपपादत्वात्। अजां ग्राममित्यादौ ग्रामवृत्तित्वस्य प्रागजायामसत्त्वेनान्वयायोगात्। काशीतः प्रयागे नीयमानामजां काशीं नयतीति प्रयोगापत्तेश्च ॥

---

## कर्तृत्ववादः।

तत्र—

**तत्तत्क्रियानुकूलकृतिमत्त्वं तत्तत्क्रियाकर्तृत्वम्।**

काष्ठादौ पाकाद्यनुकूलव्यापारवत्त्वप्रतिसंधानेऽपि कर्तृपदाप्रयोगात्,

---

१ तच्चेति पाठः। २ र्थतावच्छेदकत्वात्।

कृताकृतविभागादिना सिद्धयत्नशक्तिकेन कृधातुना तृजन्तेन सिद्धस्य कर्तृपदस्य यत्नाश्रयबोधकत्वाच्च । अचेतने कर्तृपदप्रयोगस्तु गौणः । वृष्टिगुरुतरभारोत्तोलनादिक्रियाविषयकयत्नसत्त्वेऽपि तत्तत्क्रियाया अनिष्पत्तौ तत्तत्क्रियाकर्तृत्वाव्यवहाराद् विषयत्वं विहायानुकूलत्वमुपात्तम् । यदि च मत्तो भूतं न तु मया कृतमिति व्यपदेशान्नान्तरीयककृतिसाध्यस्य पिष्टमध्यस्थशर्कराभोजनस्य न कर्तृत्वं तदा विषयत्वमपि निवेश्यम् । तच्च साध्यत्वेन । तेन यागादिकृतेरुद्देश्यत्वेन स्वर्गादिविषयकत्वेऽपि न यागादिकर्तुः स्वर्गकर्तृत्वम् । अस्मदादिकर्तृकपाकादिकर्तृत्वमीश्वरस्येष्टम् । तथा विवक्षायामीशः पचतीति प्रयोगोऽपीष्ट एव । नो चेत् कार्यत्वानवच्छिन्नजन्यतानिरूपितत्वमसाधारण(मनुकूल)त्वं निवेश्यमिति नैयायिकाः ।

वैयाकरणास्तु 'अनभिहिते कर्तरि' इत्यादावचेतनेऽपि कर्तृपदप्रयोगात्क्रियाश्रयत्वमेव कर्तृत्वम् । कारककर्मादिपदवत्कृधातुरप्यत्र क्रियार्थक एव । आश्रयत्वमिह तत्तदाख्यातार्थद्वारा । तथा च ※यगाद्यसमभिव्याहृताख्यातेन यद्धात्वर्थान्वितयद्धर्मवत्त्वं बोध्यते तद्धात्वर्थनिरूपिततद्धर्मवत्त्वं तद्धात्वर्थकर्तृत्वम् ※ । यथा पचतीत्यादौ पाकानुकूलव्यापारवत्त्वम् , जानातीत्यादौ ज्ञानाश्रयत्वम्, नश्यतीत्यादौ नाशप्रतियोगित्वम् इति । चैत्रेण तण्डुलः पच्यते इत्यादौ पाकजन्यफलाश्रयत्ववारणाय यगाद्यसमभिव्याहृतेति । अत्र चैत्रादेः कर्तृत्वं तु पचतीत्याद्याख्यातबोध्यधर्ममादायैवेति बोध्यम् । धात्वर्थान्वितद्वितीयाद्यर्थकर्मत्वकरणत्वादिवारणायाख्यातेनेति । जानातीत्याद्याख्यातार्थ आश्रयत्वम्, न पाककर्तृत्वम्, हन्तीत्यादौ हिंसाश्रयत्वम्, न गमनकर्तृत्वमित्येतत्संपत्तये यत्तदिति धात्वर्थविशेषणम् । यदि च काष्ठं पचति, स्थाली पचतीत्यादिप्रयोगवशात्करणादीनां कर्तृत्वमिष्टम्, पच्यत ओदनः स्वयमेवेत्यादौ कर्मकर्तरि कर्मणोऽपि तदिष्टम् ओदनः स्वं पचतीत्यप्रयोगस्त्वसाधुत्वादिति किमाख्यातपदेनेति विभाव्यते तदा कर्मत्वविशिष्टस्य कर्तृरूपतावारणाय तदुपादेयम् । नहि कर्मत्वादेः कर्तृत्वरूपत्वे ' अनभिहिते कर्तरि ' इत्यनुशासनार्थः संगच्छत इत्याहुः ।

यत्तु 'स्वतन्त्रः कर्ता' इति पाणिनिसूत्रात्※कारकान्तराप्रयोज्यत्वे सति

१ विष्टीति पाठः । २ इहाख्यातार्थः । ३ । कर्तृकर्मणोपि । ४ स्वयं पच्; स्वं पचतीति प्रयोगस्तु साधुः ।

कारकान्तरप्रयोजकत्वं कर्तृत्वम् * सत्यन्तेन पुरुषादिजन्यसंयोगरूपव्यापारवत्त्वरूपतत्प्रयोज्यत्ववतः कुठारादेर्व्युदासः इति तन्न, ईश्वरप्रयोज्यानां जीवानां कर्तृत्वानापत्तेः । दण्डजन्यसंयोगरूपव्यापारवति कुलालादावव्याप्तिश्चेति दिक् ।

---

### कर्मत्ववादः ।

अथ किं कर्मत्वं ? न *करणव्यापार्यत्वम्* । तद्धि करणजन्यव्यापारवत्त्वं दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणव्यापार्ये दात्रादावतिव्याप्तम् । नापि *परसमवेतक्रियाजन्यफलशालित्वम् * गमिपत्योः कर्मत्वस्य पूर्वस्मिन्देशे, त्यजेश्चोत्तरस्मिन्देशे, स्पन्देः पूर्वपरयोः प्रसङ्गात् । नदी वर्धते इत्यादौ वृद्धेरवयवोपचयरूपायाः परंपरया फलस्य तीरप्राप्तिरूपस्याश्रये तीरे कर्मत्वापत्तेश्चेति चेत्, अत्र वदन्ति—

## धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम् ।

तादृशं च फलं गमेः संयोगस्त्यजेर्विभागः पतेरधःसंयोगस्तदवच्छिन्ने स्पन्दे तेषां शक्तेः, स्पन्दमात्रे तेषां शक्तौ पर्यायतापत्तेः, स्पन्देर्वृधुधातोश्च न फलावच्छिन्नव्यापारे शक्तिरिति न कोऽपि दोषः । फलावच्छिन्नव्यापारबोधकत्वादेव च धातूनां सकर्मकत्वव्यवहारो मुख्यः । जानातीत्यादीनां तु नामार्थान्वितोद्देश्यत्वातिरिक्तविषयत्वरूपविभक्त्यर्थान्वय्यर्थकत्वं गौणं सकर्मकत्वम् । घटं जानातीत्यादितो घटविषयिताशालिज्ञानाश्रयत्ववानिति बोधात् । तादृशधातुयोग एव च कर्मप्रत्ययः । अत एवाभुञ्जानेऽपि भोजनाय यतते इति प्रयोगात् यतधात्वर्थे नामार्थान्वितस्य चतुर्थ्यर्थोद्देश्यत्वस्यैवान्वयात् न यतेः सकर्मकत्वं, न वा भोजनं यतते इति प्रयोगः ।

'भूमिं प्रयाति विहगो विजहाति महीरुहं नतु स्वात्मानम्' इतिप्रयोगात् स्वस्य धात्वर्थतावच्छेदकसंयोगविभागरूपफलशालित्वेपि कर्मत्वाभावात् परसमवेतक्रियाजन्यत्वमपि धात्वर्थतावच्छेदकफले निवेश्यम् । न चैवमपि मल्लो मल्लं गच्छतीत्यादौ उभयकर्मजसंयोगरूपफलस्य तादृशत्वात्स्वकर्तृकक्रियाकर्मत्वरूपव्यवहारः स्वस्मिन् स्यादिति वाच्यम् । परसमवेतयत्क्रियाजन्यतादृशफलशालित्वं यत्र तत्र तत्क्रियाकर्मत्वस्य स्वीकारात् । इत्थं च द्वितीयादेः क्रियान्वयि परसमवेतत्वमप्यर्थः । परत्वं स्वप्रकृत्यर्थापेक्षया सुपा, स्वार्थफलान्वय्यपेक्षया कर्माख्यातेन च बोध्यते ।

तथा च भूमिं प्रयातीत्यतो भूमिभिन्नसमवेत–भूमिवृत्तिसंयोगजनक–स्पन्दानुकूलकृतिमानित्यन्वयबोधः । भूमिर्गम्यत इत्यादौ कर्माख्यातस्थले फलं परसमवेतत्वं चाख्यातार्थः । भूमिपदार्थस्य परत्वे विशेषणत्वेन, फलं प्रति विशेष्यत्वेन चान्वयः । तथा च भूमिभिन्नसमवेतक्रियाजन्यफलशालिनी भूमिरिति । एवं च स्वभिन्नसमवेतं स्ववृत्तिसंयोगजनकं यन्मल्लान्तरवृत्तिगमनं तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावादेव न मल्लः स्वं गच्छतीति प्रयोगः ।

नन्वत्र परत्वे स्वप्रकृत्याद्यर्थस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन प्रतियोगितामात्रेण वान्वयः । नाद्यः, पृथ्वीं प्रयाति खग इत्यादौ अनन्वयापत्तेः । खगस्य पृथ्वीत्वावच्छिन्नाभिन्नत्वाभावात्[1] । न द्वितीयः, स्वात्मन्यपि स्वघटोभयभेदस्य[2] सत्त्वात् स्वं प्रयातीत्यापत्तेरिति चेन्न, द्वितीयाद्यर्थफले यद्व्यक्तेरन्वयस्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन प्रकृत्यर्थस्य कर्माख्यातार्थफलान्वयिनश्च[3] परत्वेऽन्वयात् । इत्थं च पृथ्वीं प्रयातीत्यादौ यत्पृथिवीव्यक्तिवृत्तिसंयोगजनकत्वं प्रयाणस्य तद्व्यक्तिभिन्नत्वं विहगेऽस्तीति न दोषः ।

परे तु पृथिवीं प्रयातीत्यादौ पृथिवीपदं कर्मीभूततत्तत्पृथिवीव्यक्तिपरमेवमन्यत्र कर्मवाचकं सामान्यपदं लक्षणया विशेषपरम् । इत्थं चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तेर्न भङ्ग इत्याहुः ।

यत्तु परसमवेतत्वं नार्थः किंतु अन्योन्याभावप्रतियोगितावच्छेदकत्वं क्रियान्वयि द्वितीयार्थः।तथा च भूमिवृत्तिसंयोगजनक–भूमिनिष्ठान्योन्याभावप्रतियोगितावच्छेदक–प्रयाणानुकूलकृतिमानित्यर्थः । स्ववृत्तिक्रियायाः स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वान्न स्वं प्रयातीति प्रयोग इति । तन्न, एवमपि येन मल्लेन मल्लान्तरं न गतं सोऽपि मल्लो मल्लं गच्छतीति प्रयोगापत्तेः । मल्लान्तरनिष्ठभेदप्रतियोगितावच्छेदिकायास्तन्मल्लवृत्तिक्रियायास्तन्मल्लवृत्तिभूमिसंयोगजनकत्वात् । यन्मल्लव्यक्तेः फलान्वयस्तस्या एवान्योन्याभावेऽन्वयोक्तौ ( दोषवारणे तु ) तद्व्यक्तित्वादेः प्रकारत्वे ( शक्त्यानन्त्यम् । कथंचित् ) कर्मवाचकपदस्य तद्व्यक्तित्वावच्छिन्नलक्षणास्वीकारे युगपद्वृत्तिद्वयविरोधप्रसङ्गः ।

ननु नान्योन्याभावप्रतियोगितावच्छेदकत्वं क्रियान्वयि द्वितीयार्थः

१ पृथिवीत्वावच्छिन्नत्वात् । २ खगघटोभयेति पाठः । ३ कर्मत्ववत्तदिति पाठः ।

न वा परसमवेतत्वम्, कर्मवाचकपदार्थतावच्छेदकावच्छिन्नान्वितद्वितीयार्थसमवेतत्वत्वरूपसामान्यधर्मावच्छिन्नतत्तत्कर्मसमवेतत्वनिष्ठप्रतियोगिताकाभावात्मक–स्वप्रतियोगिकाभाव–संबन्धेन कर्मवाचकपदार्थान्वितद्वितीयार्थसमवेतत्वस्य धात्वर्थक्रियायामन्वयस्वीकारात् । सामान्यरूपेण विशेषाभावानभ्युपगमेऽपि यद्व्यक्तेर्द्वितीयार्थसमवेतत्वेऽन्वयस्तद्व्यक्तिसमवेतत्वत्वावच्छिन्नप्रतियोगिताकाभावात्मकस्वप्रतियोगिकाभावसंबन्धेन कर्मवाचकपदार्थान्वितद्वितीयार्थसमवेतत्वस्य धात्वर्थक्रियायामन्वयस्वीकारादेव न विहगः स्वं प्रयातीति प्रयोगः । ईदृशसंबन्धेनान्वयबोधस्य क्वाप्यदृष्टचरत्वेऽपि प्रकृते गत्यन्तरविरहेण स्वीकारात् । अत एव च न कर्मवाचकपदस्य तत्तद्व्यक्तित्वेन तत्तद्व्यक्तिबोधकतया सामान्यरूपेण बोधकतया च युगपद्वृत्तिद्वयविरोध इति चेन्न, नव्यनये क्रियाया अव्याप्यवृत्तितया तन्निष्ठतदाश्रयद्रव्यसमवेतत्वस्यापि अव्याप्यवृत्तित्वात्, मल्लः स्वं गच्छतीति प्रयोगप्रसङ्गस्य दुर्वारत्वापत्तेः । एतेन *तत्तत्क्रियानधिकरणत्वे सति तत्तत्क्रियावच्छेदकफलशालित्वं तत्तत्क्रियाकर्मत्वं* द्वितीयादेरपि तत्तत्क्रियानधिकरणत्वमर्थ इत्यपास्तम् । शक्त्यानन्त्यापत्तेश्च ।

यत्तु क्रियान्वयि परसमवेतत्वमपेक्ष्य कर्त्रन्वयि परत्वमेव लाघवात्कर्मप्रत्ययार्थ इति । तन्न, द्वितीयार्थफलपरसमवेतत्वयोरेकान्वयित्वे लाघवात्, ग्रामो गमेः कर्म न तु चैत्र इत्यादौ फलपरसमवेतक्रियाजन्यत्वघटितस्यैव कर्मपदार्थतया तस्यैव कर्मप्रत्ययार्थत्वात्, गम्यते ग्रामः स्वयमेवेत्यादौ परत्वान्वयिविरहाच्चेति दिक् ।

अथैवमपि पतेरधःसंयोगावच्छिन्नस्पन्दार्थकतया धात्वर्थतावच्छेदकफलशालिनो भूतलादेः कर्मत्वे वृक्षात्पर्णं भूतलं पततीति प्रयोगः स्यादिति चेत्, तथा विवक्षायां भवत्येव । अत एव 'द्वितीया श्रिता–' इति सूत्रे पतितशब्दयोगे द्वितीयासमासविधानं तदुदाहरणं च नरकं पतितो नरकपतित इति साधु संगच्छते । क्वचित्सप्तम्यपि साधुः । यथा भूमौ पतति, ग्रामे गच्छतीत्यादौ ।

परे तु भूतलादेः कर्मत्वेऽपि न द्वितीया । यत्र फलस्य संबन्ध्याकाङ्क्षा तत्रैव तत्स्वीकारात् । अत्र तु फलस्याधोदेशवृत्तितया उपस्थितेर्न संब-

---

१ नेति नास्ति । २ फलत्वे इति पाठः ।

न्ध्याकाङ्क्षा। यद्वा कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वं गम्यादेः, न तु पततेः । अधःसंयोगरूपफलस्य पर्णान्वितत्वात्। अध इत्यस्य संबन्धिसाकाङ्क्षतया संबन्धित्वेन पर्णस्यैवान्वयात्। भूतलं हि पर्णस्याधः न तु भूतलस्येति न भूतलं पततीति प्रयोग इति। अथ कथं वृक्षात्पर्णमधः पतति इति प्रयोग इति चेत्, भ्रमात् अत्यधोविवक्षया वा। गतं तिरश्चीनमनूरुसारथेः इत्यत्र व्यक्तिविशेषस्याधो धाम पततीत्यर्थात् न दोष इत्याहुः।

यत्तु त्यजिगम्यादेः स्पन्दाद्यात्मकव्यापारमात्रे शक्तिः, फलस्य द्वितीयादिलभ्यत्वात्। अत एव ग्रामं त्यजति गच्छतीत्यनयोर्नैकार्थता त्यजिगम्योर्योगे द्वितीयादिना विभागसंयोगयोर्बोधनात्। त्यजेर्विभागावच्छिन्नस्पन्दशाब्दत्वस्य, गमेः संयोगावच्छिन्नस्पन्दशाब्दत्वस्य कार्यतावच्छेदकत्वात्। अत एव गमनं त्याग इत्यनयोरपि नैकार्थता। उक्तकार्यकारणभावानुरोधेनात्रापि त्यजिगम्योर्विभागसंयोगावच्छिन्नस्पन्दे लक्षणाङ्गीकारात्। विभागाद्यवच्छिन्नस्पन्दशाब्दत्वं च विभागादिस्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वम्। तेन चैत्रेण ग्रामस्त्यज्यते इत्यादिवाक्यजन्यस्पन्दविशेषणकविभागादिविशेष्यकशाब्दबोधसंग्रहः। इत्थंच *परसमवेततत्तद्धात्वर्थान्वितफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम्*। तेन त्यजादेर्नोत्तरदेशादौ कर्मत्वमिति। तन्न, विभागाद्यवच्छिन्नस्पन्दशाब्दत्वस्य जन्यतावच्छेदकत्वे तादृशस्पन्दे शक्तेर्दुर्वारत्वात्। परेषामितरान्विते शक्तिग्रहे इतरांशवद्विभागाद्यंशस्य त्यागस्तु न युक्तः, त्यागगमनयोरेकार्थतावारणाय तत्फलविशिष्टस्पन्दे शक्तिसिद्धेः, विनापि तल्लक्षणाप्रतिसंधानं तथा प्रतीतेरिति दिक्।

एवं ददातेर्मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागः, यजतेर्देवतोद्देश्यकस्वस्वत्वध्वंसफलकत्यागः, जुहोतेस्तादृशाग्निप्रक्षेपश्चार्थः। अत एव ऋत्विजां तादृशत्यागाभावेऽपि होतृत्वम्। अग्निप्रक्षेपश्च अग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः। न चैवमग्नौ जुहोतीत्यादौ सप्तम्यर्थस्याग्निसंयोगेऽन्वये निराकाङ्क्षतापत्तिरिति वाच्यम्। तत्र संयोगानुकूलक्रियानुकूलव्यापारस्यैव धात्वर्थत्वात्। न च तथाप्यग्नेः कर्मत्वापत्तिः। संयोगस्य धात्वर्थतावच्छेदकतावच्छेदकतया तद्वतोऽग्नेः कर्म-

१ यद्वा कर्मभिन्नेति पाठः। २ पर्णभूतलस्येति पाठः। ३ शाब्दोभयेति पाठः। ४ नुसंधानमिति पाठः।

त्वाभावात् । क्रियाया एव धात्वर्थतावच्छेदकतया तच्छालिनो घृतस्यैव कर्मत्वात् । द्वितीयार्थश्च वृत्तित्वं, तच्च धात्वर्थतावच्छेदकेऽन्वेति ।

इत्थं च विप्राय गां ददाति, विष्णुं यजते, घृतं जुहोतीत्यादौ मूल्यग्रहणं विना विप्रोद्देश्यकगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वफलकत्यागानुकूलकृतिमान्, विष्णूद्देश्यकस्वस्वत्वध्वंसफलकत्यागानुकूलकृतिमान्, घृतवृत्त्यग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारानुकूलकृतिमानित्यन्वयबोधः । विष्णोरुद्देश्यत्वसंबन्धेन स्वस्वत्वध्वंसफलवत्त्वात्कर्मत्वम् ।

एवं मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वजनकस्त्यागो विक्रयः । मूल्यदानप्रयुक्तस्वस्वत्वोत्पादकस्वीकारः क्रयः । दत्तद्रव्यस्य स्वस्वत्वजनकस्वीकारः प्रतिग्रहः । तथा च गां विक्रीणाति क्रीणाति प्रतिगृह्णातीत्यादौ गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वजनकत्यागानुकूलकृतिमान्,गोवृत्तिमूल्यदानप्रयुक्तस्वस्वत्वानुकूलस्वीकारानुकूलकृतिमान्, गोवृत्तिदत्तद्रव्यस्वस्वत्वजनकस्वीकारवानिति क्रमेणान्वयधीरिति संप्रदायः ।

इदमत्रावधेयम् । दानस्य परस्वत्वजनकत्वे तत एव विक्रयवारणे मूल्यग्रहणं विनेति व्यर्थम् । अथ—प्रतिग्रह एव स्वीकारविशेषतया स्वत्वहेतुः । अस्वामिके स्वीकारस्य स्वत्वहेतुत्वकल्पनात् । अत एव 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्' इत्यादिकं साधु संगच्छते । अन्यथा प्रतिग्रहवैफल्यापत्तेः । दानं तु स्वस्वत्वध्वंसमात्रं जनयत्परस्वत्वप्रयोजकमिति—मतम् । तथापि पूर्वोक्तलक्षणमसम्यक् तदुपादानेऽप्युपेक्षायामतिव्याप्तेः । तस्या अपि स्वस्वत्वध्वंसद्वारा परस्वत्वप्रयोजकत्वात् । तद्वारणाय त्यागे वैजात्योपादानस्यावश्यकत्वात् ।

वस्तुतो दूरस्थपात्रमुद्दिश्य त्यक्तद्रव्यस्य प्रतिग्रहात्प्रागस्वामिकस्यानुद्देश्येन पुरुषेण प्रतिग्रहात्स्वत्वं स्यात् । अन्योद्देश्यकत्यागादेः प्रतिबन्धकत्वे तु गौरवम् । न च तादृशत्यागो दानाभास एव ससंप्रदानको हि त्यागो दानं, संप्रदानं च ददस्वेत्यनुमतिप्रकाशनद्वारा दानक्रियाहेतुत्वेन, न च असन्निहितस्य तत्त्वमिति, न ततो दातुः स्वत्वनाश इति वाच्यम् ।

तीर्थे संकल्पितं द्रव्यं यदन्यत्र प्रदीयते ।
दाता तीर्थफलं भुङ्क्ते प्रतिग्राही न दोषभाक् ॥

---

१ ध्वंसजनक' २ 'दत्तद्रव्यस्वस्वत्वजनकस्वी'।

मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत् ।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते ॥

इत्यादिवाक्यात्तादृशस्य दानत्वसिद्धेः । तस्माद्दानमेव परस्वत्वजनकम् । प्रतिग्रहप्रागभावस्यापेक्षणीयत्वान्न प्रतिग्रहवैफल्यम् । अत एव यस्मै दत्तं तस्य प्रतिग्रहेण दातुः स्वत्वनिवृत्तिः ।

अस्तु वा दत्तद्रव्यस्वीकारत्वरूपप्रतिग्रहत्वेन स्वीकर्तव्यद्रव्यदानत्वेन वेति विनिगमकाभावात् दानं स्वस्वत्वध्वंसद्वारा परस्वत्वजनकं प्रतिग्रहश्च स्वस्वत्वजनकः । उभयथापि मूल्यग्रहणं विनेति व्यर्थम् । विक्रयस्य परस्वत्वजनकत्वे मानाभावात् । न च विक्रीतद्रव्यस्वीकारत्वं क्रयत्वमित्यत्रापि विनिगमनाविरहः ।

मूल्यदानपूर्वकस्वीकारस्यैव क्रयत्वात् विक्रयत्वस्य गौरवेणानिवेशात् । किंच स्वस्वत्वध्वंसजनकेत्यपि व्यर्थम्, अव्यावर्तकत्वात् । अपि चाग्निप्रक्षेपो होम इत्यप्ययुक्तम्, 'देवतोद्देश्यकस्वस्वत्वध्वंसफलकत्यागो यागः स एव प्रक्षेपावच्छिन्नो होमः' इति वाचस्पतिमिश्राद्युक्तेः, 'याग एव विशिष्टदेशप्रक्षेपोपहितो होमः' इति विवेकोक्तेश्च । अस्तु च ऋत्विजा त्यागाद्यजमानस्वत्वध्वंसः, अनुमतदासत्यागाद्विदेशस्थस्वामिस्वत्वध्वंसवत् ।

वस्तुतस्तु दानत्वयागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषाः । न च श्राद्धस्य पित्रपेक्षया यागत्वं, ब्राह्मणापेक्षया दानत्वमिति विवेकोक्तेरतयोः सांकर्यान्न जातित्वमिति वाच्यं, श्राद्धस्य गौणतदुभयरूपत्वात् । वस्तुतः श्राद्धस्य यागत्वमेव, उद्देश्यपित्रादिस्वत्वाजनकत्वात् । ब्राह्मणस्य स्वत्वमपि न सार्वत्रिकम्, ब्राह्मणाभावेऽपि श्राद्धोक्तेः । 'पिण्डांस्तु गोजविप्रेभ्यः' इत्यादिनान्यत्रापि तत्प्रतिपत्तेः ।

विष्णुं यजते इत्यादौ द्वितीयार्थोऽप्युद्देश्यत्वम् । तत्त्वं च तस्येदमित्यारोपज्ञानविषयत्वम् । देवतायाः स्वत्वोपगमे तु यागत्वं दानत्वव्याप्यं, होमत्वं यागत्वव्याप्यमिति सिद्धम् । देवपूजादिकमपि याग एवेति कृतमप्रकृतेन ।

अत एव संसृष्टिस्थलेऽसाधारणस्वत्वनाशोत्तरं साधारणस्वत्वोत्पादात्

---

१ तस्याप्रतिग्रहे न दातुरिति पाठः । २ रत्वरूपक्रयत्वेन स्वीकर्तव्यद्रव्यविक्रयत्वेन वा क्रयत्वमित्यत्रापीति पाठः । ३ इत्युक्तमिति पाठः । ४ अनेकस्वामिकत्वरूपसंसृ इति पाठः । ५ पादानात् ।

तत्र सकलविशेषणसहितदानलक्षणातिव्याप्तिरित्यपास्तम्, दानत्वजातेस्तत्राभावात्। परमात्रस्वत्वानुकूलत्वविशेषणात् संसृष्टिनिरास इत्यन्ये। तत्र न स्वत्वनाशः किंतु परस्वत्वोत्पत्तिमात्रम्। स्वत्ववति स्वत्वोत्पत्तिस्तत्रेच्छाया उत्तेजकत्वात्। स्वस्वत्वध्वंसपूर्वकत्वविशेषणादेव तन्निरास इत्यन्ये। परे त्वदृष्टविशेषजनकत्वविशेषणात्तद्व्यावृत्तिरित्यप्याहुः। एतेन विनिमये विक्रयादिलक्षणातिव्याप्तिरित्यपास्तम्। विक्रयत्वादेर्जातित्वात्। मूल्यातिरिक्तद्रव्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वानुकूलत्यागो विनिमय इत्यन्ये।

किमत्र स्वत्वमिति चेत्। अत्र प्राञ्चः—यथेष्टविनियोज्यत्वं स्वत्वम्। तच्च शास्त्रानिषिद्धविनियोगोपायो यः क्रयप्रतिग्रहादिस्तद्विषयत्वम्। तच्च न बहिरिन्द्रियवेद्यम्। प्रतिग्रहादेर्मानसज्ञानविशेषरूपस्य बहिरिन्द्रियायोग्यत्वादित्याहुः।

नव्यास्तु—प्रतिग्रहादिनाशोत्तरमपि स्वत्वव्यवहाराद्दानादितः स्वत्वं नश्यति प्रतिग्रहादितश्च स्वत्वमुत्पद्यते इत्यादिप्रत्ययव्यवहारप्रामाण्यानुरोधात् स्वत्वमतिरिक्त एव पदार्थः। तच्च स्वत्वं दानादितो नश्यति, प्रतिग्रहादितश्च जायते। तच्च बहिरिन्द्रिययोग्यं, स्वं पश्यामीति प्रतीतेः। तदीययथेष्टविनियोज्यत्वज्ञानस्य तदीयस्वत्वसाक्षात्कारहेतुत्वान्न यथेष्टविनियोगाद्यज्ञानदशायां स्वत्वसाक्षात्कारापत्तिः।

वस्तुतस्तदीययथेष्टविनियोज्यत्वे तदीयस्वत्वव्यभिचारित्वग्रहदशायां तद्ग्रहेऽपि स्वत्वसाक्षात्कारानुदयात् तदीयस्वत्वसाक्षात्कारं प्रति तदीयस्वत्वव्याप्यतदीययथेष्टविनियोज्यत्ववदिदमित्याकारकज्ञानस्य हेतुत्वं वाच्यम्। तथा च स्वत्वस्यानुमितिरेव न तु साक्षात्कारः। स्वत्वे लौकिकविषयताकल्पने लौकिकविषयिताशालितत्साक्षात्कारे तादृग्विशेषदर्शनस्य हेतुत्वकल्पने च गौरवात्। स्वं पश्यामीत्यनुव्यवसायस्तु सुरभि चन्दनं पश्यामीत्यादिवद्विशेषणांशेऽलौकिकविषयत्वावगाही। न चायोग्यत्वकल्पने लौकिकसाक्षात्कारे स्वत्वस्य प्रतिबन्धकत्वकल्पने गौरवमिति वाच्यम्, तस्यायोग्यत्वकल्पने लौकिकविषयताविरहादेव तत्प्रत्यक्षवारणसंभवात्। योग्यत्वे तद्गोचरलौकिकप्रत्यक्षसामग्र्यास्तद्गोचरानुमित्यादौ प्रतिबन्धकत्वकल्पने गौरवादित्याहुरित्यलमतिविस्तरेण।

---

१ 'त्वविशेषणरहि'। २ नच स्वस्वत्ववति परस्वत्वानुपपत्तिस्त'।

तच्च कर्म त्रिविधम्—प्राप्यं, विकार्यं, निर्वर्त्यं च।

तत्र संयोगादिरूपक्रियाजन्यफलशालि प्राप्यम्। यथा—ग्रामं गच्छतीत्यादौ ग्रामादिः।

यल्लब्धसत्ताकमेवावस्थान्तरमापद्यते तद्विकार्यम्। यथा—काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोतीत्यादौ यथा काष्ठादिः, काष्ठादिपदलक्ष्यस्य काष्ठावयवादेः सत एव भस्मादिसंबन्धरूपावस्थान्तरप्राप्तेः।

यत्तु क्रिया यत्कर्मनाशकं फलं जनयति तद्विकार्यम्। यथा—काष्ठं लुनातीत्यत्र काष्ठमिति तन्न, काष्ठपदलक्ष्यस्य काष्ठावयवस्य कर्मतया क्रियायास्तन्नाशकत्वाभावात्। अत्र हि काष्ठपदस्य काष्ठावयवो लुनातेरारम्भकसंयोगप्रतिद्वन्द्विविभागहेतुक्रियानुकूलः कुठारादिव्यापारोऽर्थः। तथा च काष्ठावयववृत्त्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियानूकूलव्यापारानुकूलकृतिमानित्यन्वयधीरिति काष्ठावयवस्य प्राप्यकर्मतैवावस्थान्तरप्राप्त्यभावान्न विकार्यता। तण्डुलं पचतीत्यादौ तण्डुलपदलक्ष्यस्तण्डुलावयवः पच्यर्थो रूपादिपरावृत्त्यवच्छिन्नो विक्लित्त्यवच्छिन्नो वा तेजस्संयोगः। तथाच धात्वर्थजन्यफलशालित्वात्सतोऽवस्थान्तरप्राप्तेश्च उभयविधकर्मत्वं तण्डुलावयवस्येष्टम्। असंकीर्णस्थानमुक्तमेवेत्यदोषः।

यत्क्रियया निष्पद्यते तन्निर्वर्त्यम्। यथा—घटं कटं वा करोतीत्यादौ घटादि। अत्र कृञः फलावच्छिन्नव्यापारबोधकत्वाभावाद्गौणकर्मत्वम्। तच्च साध्यताख्यकृतिविषयत्वम्। अत एव वीरणं करोतीत्यादिर्न प्रयोगः। वीरणादावुपादानताख्यकृतिविषयताया एव सत्त्वात्।

यत्तु कटादिपदस्य कटाद्यवयवे निरूढलक्षणा। तत्र विना लक्षणां कटादेर्गौणकर्मत्वसंभवेऽपि कारकत्वासंभवात्, निरूढलक्षणाया मुख्यप्रयोगापवादकत्वाच्च न वीरणं करोतीति मुख्यप्रयोग इति। तन्न, घटं जानाति अतीतमित्यादौ घटादेरिव कटादेरपि गौणकारकत्वसंभवात्।

स्तोकं पचतीत्यादौ क्रियाविशेषणपदोत्तरद्वितीया विशेषणविभक्तिवत् प्रयोगसाधुत्वाय नामार्थधात्वर्थयोरभेदान्वयस्वीकारेणाभेदस्य संसर्गत्वात्। तदस्वीकारे तु विशेषणविभक्तिवदस्तु साऽभेदार्थिका। तस्याः कारकत्वाभावस्तु क्रियान्वितकर्तृत्वाद्यन्वितत्वाभावादिति दिक्॥

---

करणत्ववादः ।

**करणत्वं कारकान्तरेऽचरितार्थत्वे सति क्रियाहेतुत्वम् ।**

कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावः सत्यन्तार्थः । कर्तृकारके आरम्भकसंयोगप्रतिद्वन्द्विविभागानुकूलकुठारादिक्रियाया एव छिदादिधात्वर्थतया कर्तुः कुठारादिकरणनिष्ठव्यापारद्वारा छिदादिहेतुत्वान्नातिप्रसङ्गः । कर्मणस्तु तादृशक्रियाहेतुत्वविरहादेव नातिप्रसङ्गः । अधिकरणमपि कर्तृकर्मान्यतरव्यापारद्वारा क्रियाहेतुः । चैत्रो गृहे स्थाल्यामोदनं पचतीत्यादौ गृहस्थाल्याद्यधिकरणं कर्तृकर्मसंयोगद्वारा पाकादिक्रियासाधनम् । संप्रदानं स्वानुमतिप्रकाशनेन कर्तुरिच्छाद्वारा दाननिमित्तम् । अपादानं पतनप्रतिबन्धकसंयोगनाशकपत्रादिविभागद्वारा पतनादिनिमित्तमिति नातिप्रसङ्गः ।

न चैवं कुठारादिकरणस्यापि कर्तृनिष्ठव्यापारसापेक्षत्वादसंभवः । कारकान्तरनिष्ठव्यापारसंबन्धावच्छिन्नजनकत्वाभावस्य सत्यन्तार्थतया कुठारादिक्रियारूपच्छिदिक्रियायां कुठारस्य तादात्म्यसंबन्धेन हेतुतया कर्तृनिष्ठव्यापारसंबन्धेनाहेतुत्वात् । न च कुठारादिव्यापारादावतिव्याप्तिरिति वाच्यम्, तस्यापि एतन्मते लक्ष्यत्वात् । अत एव *फलायोगव्यवच्छिन्नं कारणं करणम्* इति वदन्ति ।

वस्तुतस्तु *व्यापारवत्त्वे सति कारणं करणम्* । न चैवं कार्यमात्रे ज्ञानादौ चादृष्टस्य मनोयोगस्य च व्यापारस्य सत्त्वादात्मनोऽपि करणत्वापत्तिः, इष्टत्वात् । उपधेयसंकरेऽपि कर्तृत्वकरणत्वलक्षणोपाधेरसंकरात् व्यवहारभेदोपपत्तेः । इत्थं चानुमितौ व्याप्तिज्ञानं करणम्, परामर्शस्य व्यापारत्वात् । चाक्षुषादौ चक्षुरादि, तत्संयोगस्य व्यापारत्वात् । श्रावणज्ञाने श्रोत्रमनःसंयोगस्य व्यापारत्वान्न तु शब्दस्य, शब्दाभावप्रत्यक्षे तस्य व्यभिचारात् ।

परे तु * फलानुकूलकर्तृव्यापारवत्त्वम् * अस्ति च कुठारादेः छिदानुकूलकर्तृसंयोगादिमत्त्वम् । न च गृहस्थाल्याद्यधिकरणस्यापि कर्तृव्यापारवत्त्वात्करणत्वापत्तिरिष्टत्वात् । स्थाल्यान्नं साधयतीत्यादिप्रयोगात् । गवा दानं साधयति, ब्राह्मणेन दानं साधयतीत्यादिप्रयोगात् तत्रापि तदिष्टम् ।—

१ संबन्धावच्छिन्नकि° । २ °दव्याप्तिः । ३ कर्तृकुठाराभिघातेऽति° ।

चैत्र आत्मना चैत्रेण वा पचतीत्यप्रयोगात् , कर्तुः शरीरस्य च वारणाय द्रव्यसमवायिभिन्नात् क्रियानुकूलकृतिमतो भिन्नत्वेन विशेष्यम् । कृतिमत्त्वं समवायेनावच्छेदकतया च । तेन शरीरस्यापि व्युदासः । भिन्नादित्यन्तेन हस्तादिसंग्रहः, हस्तादिना छिनत्तीति प्रयोगात् । व्यापारवत्त्वं च जनकतया । तेन व्याप्तिस्मृत्यादिसाधारण्यमित्याहुः ।

अत्र परशुना छिनत्तीत्यादौ निरुक्तकरणत्वं तृतीयार्थः । आश्रयत्वेन प्रकृत्यर्थान्वितस्य तस्य धात्वर्थे निरूपकत्वेनान्वयः । तथा च परशुनिष्ठकरणतानिरूपकच्छिदानुकूलकृतिमानिति वाक्यार्थ इति प्राञ्चः ।

नव्यास्तु परशुना छिनत्ति न दात्रेणेत्यादौ नञर्थान्वयानुरोधेन निरुक्तकरणत्वनिरूपितं जन्यत्वमेव तृतीयार्थः । तस्य च निरूपितत्वेन प्रकृत्यर्थान्वितस्य आश्रयतया धात्वर्थेनान्वयः । इत्थं च परशुनिरूपितं जन्यत्वं दात्रनिरूपितजन्यत्वाभावश्च छिदायामन्वेतीत्याहुः ।

जटाभिस्तापस इत्यादौ तृतीयोपलक्षणे । तत्त्वं च *अतद्व्यावृत्त्यनवच्छेदकत्वे सत्यतद्व्यावृत्तिसामानाधिकरण्यम्* । अस्ति च जटायामतापसव्यावृत्त्यनवच्छेदकत्वं शमादिमत्त्वस्यैव तदन्यूनानतिरिक्तवृत्तितया तदवच्छेदकत्वात् । शमादिना तापस इति[1]पप्रयोगः । विवक्षातस्तथा प्रयोगस्येष्टत्वे तु विशेषणोपलक्षणसाधारणवैशिष्ट्यमेव तृतीयार्थः ।

अक्ष्णा काणः, पादेन खञ्जः इत्यादौ 'येनाङ्गविकारः' इत्यनेन तृतीया, येनाङ्गेन विकारो हानिराधिक्यं वा तदङ्गबोधका तृतीयेति सूत्रार्थः । एवं चात्र तृतीयाया वृत्तित्वमर्थः । तच्च व्युत्पत्तिवैचित्र्यात्काणादिपदार्थस्यैकदेशे विकारेऽन्वेति । काणत्वं बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वम् । जात[2]मात्रान्धस्याकाणत्वे तु चक्षुष्मद्गोलकवत्त्वे सतीति वाच्यम् । यदि च बहिरवच्छेदेन चक्षुःसत्त्वेऽपि उपघातादेव न चाक्षुषं तदोपहतगोलकवत्त्वं काणत्वमक्षिपदं चक्षुष्मद्गोलकपरम् । एवं च चक्षुष्मद्गोलकवृत्ति यच्चक्षुःशून्यत्वमुपघातो वा तद्विशिष्टगोलकवानिति अक्ष्णा काण इत्यस्यार्थः ।

एवं खञ्जत्वं संस्थानविशेषशून्यपदवत्त्वम् । तथाच पदवृत्ति यत्तथाविधसंस्थानशून्यत्वं तद्विशिष्टपदवानिति पादेन खञ्ज इत्यस्यार्थः । मुखेन त्रिलोचन इत्यत्र बहुव्रीहिः । तथाच मुखवृत्तिलोचनत्रयवानित्यर्थः ।

---

१ न प्रयोगः । २ जातप्रसन्नान्धस्य; जातप्रसवान्धस्य ।

परे तु अक्ष्णा काण इत्यादावभेदे तृतीया । तथा च तादृशगोलका-भिन्नं यच्चक्षुःशून्यमुपहतं वा तद्वानिति वाक्यार्थः । एवं मुखेन त्रिलोचन इत्यत्र त्रिलोचनपदं लोचनत्रयविशिष्टवत्परम् । तथा च मुखाभिन्नलोचन-त्रयविशिष्टवानित्यर्थ इत्याहुः ।

धनेन कुलमित्यादौ हेतुत्वे तृतीया । क्रियान्वयिनिरुक्तकरणत्वार्थिका तृतीया 'कर्तृकरणयोस्तृतीया' इत्यनेन विहिता । 'हेतौ' इति सूत्रेण तु नामार्थेऽप्यन्वितहेतुत्वार्थिकेति विशेषः ।

पुत्रेण सहागतः पितेत्यत्र तृतीयायाः कर्तृत्वमर्थः । सहशब्दसमभि-व्याहृतक्रिया सहशब्दार्थः । एककालीनत्वसंबन्धेन तस्याः समभिव्याहृत-क्रियायामन्वयः । तथा च पुत्रकर्तृकागमनसमानकालीनागमनकर्तेत्यर्थः । शिष्येण सह गुरुर्ब्राह्मणः, पुत्रेण सह पिता सुन्दरः, इत्यादौ सहार्थो ब्राह्मण्यादि समानकालीनत्वसंबन्धेन ब्राह्मणत्वादिपदार्थैकदेशेऽन्वेति ।

परे तु सहार्थः साहित्यमेकधर्ममात्रं, तृतीयार्थो वृत्तित्वं संख्यामात्रं वा, तथा च शिष्यवृत्तिसाहित्यवान्गुरुर्ब्राह्मण इत्यादिर्बोध इत्याहुः ।

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् ।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥

इत्यादौ पुत्रेषु भारवहनकर्तृत्वाभावेऽपि सहप्रयोगे विद्यमानेत्यस्याध्या-हारात् विद्यमानत्वं साहित्यं सहशब्दार्थः । तथाच समानकालीनत्वसं-बन्धेन दशपुत्रवृत्तिविद्यमानत्वविशिष्टविद्यमानत्वाश्रयः इत्याकारकान्व-यबोधः । अत एव विद्यमानसहार्थे तृतीयेति शाब्दिकाः ।

धान्येन धनी, गोत्रेण गार्ग्यः, प्रकृत्याभिरूप इत्यादौ तृतीयाया अभेदोऽर्थः । तथा च धान्याभिन्नधनवान्, गोत्राभिन्नगर्गकुलोत्पन्नः, साहजिकाभिन्नरमणीयतावानित्यर्थः । प्रकृतिपदस्य साहजिकार्थत्वाद-भिरूपपदस्य रमणीयतावदर्थकत्वादिति दिक् ॥

---

## संप्रदानत्ववादः ।

'कर्मणा यमभिप्रैति स संप्रदानम्' इति पाणिनिसूत्रम् । तत्क्रिया-करणीभूतेन तत्क्रियाकर्मणा यमभिप्रैति [ तत्क्रियातत्क्रियाप्रयोजनके-च्छान्यतर ] फलभागित्वेनोद्देश्यीकरोति स संप्रदानमिति सूत्रवाक्यार्थः ।

**करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं संप्रदानत्वम् ।**

इति फलितम् । ग्रामं गच्छतीत्यादौ गमनकर्मग्रामजन्यसुखभागित्वे-

नोद्देश्यस्य चैत्रादेस्तत्क्रियायां संप्रदानत्वाभावात्तद्वारणाय करणीभूतेति। गमनक्रियाया ग्रामस्याकरणत्वान्न दोषः । दानादौ देयादिकं करणमिति प्रकृतसंगतिः ।

पितृस्वर्गोद्देशेन कृतगोदानस्थले दानजन्यफलभागित्वेनैव पितोद्देश्यः, नतु गोजन्यफलभागित्वेनेति न पित्रादेः संप्रदानत्वम् । अत एव पित्रे गां ददातीति न प्रयोगः । यदि चादृष्टद्वारा गोजन्यत्वं फले दत्ता गौः पितुः स्वर्गमुत्पादयिष्यतीति चाभिसंधिस्तदा फले कर्मजन्यत्वमदृष्टाद्वारकं ग्राह्यम् । अत एव न स्वस्मिन्स्वकर्तृकदानसंप्रदानत्वापत्तिः, न वा चैत्रश्चैत्राय गां ददातीति प्रयोगप्रसङ्गः ।

वस्तुतो धात्वर्थतावच्छेदकत्वेन फलं विशेष्यम् । पितुः स्वर्गादिकं न तथेत्यदोषः । इत्थं च विप्राय गां ददातीत्यत्र संबन्धित्वेन परेच्छाविषयत्वं चतुर्थ्यर्थः । चैत्राय चैत्रो ग्रामं गच्छतीत्यादिवारणाय परेति । स च धात्वर्थतावच्छेदकफलेऽन्वेति । वृत्तित्वं द्वितीयार्थः । तथा च विप्रसंबन्धित्वेन परेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वानुकूलत्यागानुकूलकृतिमानित्यन्वयधीः ।

यत्तु अत्र जन्यफलप्रकारकेच्छापूर्वकत्वं क्रियान्वयि चतुर्थ्यर्थः । व्युत्पत्तिवैचित्र्याच्च तदेकदेशे जन्यत्वे कर्मणो गवादेर्निरूपकत्वसंबन्धेनान्वयः । तथा च विप्रविषयकगो[निरूपित]जन्यफलप्रकारकेच्छापूर्वकगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वानुकूलत्यागानुकूलकृतिमानित्यन्वयधीरिति तन्न, गोजन्यफलस्य प्रकृते स्वत्वरूपतया विप्रविषयिका या गोजन्यफलप्रकारकेच्छा तत्पूर्वकत्वस्य दानेऽसंभवात् तादृशेच्छाया एव दानत्वात्, गौरवाच्चेति दिक् ।

एवं वृक्षायोदकमासिञ्चतीत्यादौ संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः । वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः । स च धात्वर्थतावच्छेदकतावच्छेदके संयोगेऽन्वेति । वृत्तित्वरूपद्वितीयार्थोऽपि तादृशद्रवद्रव्यक्रियायाम् । एवं च वृक्षवृत्तित्वेनेच्छाविषयसंयोगानुकूलोदकवृत्तिद्रवद्रव्यक्रियानुकूलव्यापारानुकूलकृतिमानित्यन्वयधीरिति । अत्र क्रियान्तस्य धात्वर्थत्वे वृक्षस्य कर्मत्वं स्यात् । न तु जलस्य । क्रियाया वृक्षापेक्षयैव परसमवेतत्वात् । न चैवं पयसा वृक्षमा-

१ गोवृत्तिपरेति पाठः । २ निरूपितत्वेनेति पाठः ।

सिञ्चतीति न स्यात्, धात्वर्थताऽवच्छेदकक्रियाया वृक्षावृत्तित्वादिति वाच्यम् । अत्र क्रियान्तस्य धात्वर्थतया धात्वर्थतावच्छेदकद्रवद्रव्यसंयोगस्य वृक्षवृत्तित्वात् । द्रवद्रव्यसंयोग एवात्र धात्वर्थ इति तु न युक्तम् । तर्हि फलावच्छिन्नव्यापाराबोधकत्वाद्धातोरकर्मकत्वं, धात्वर्थतावच्छेदकफलशालित्वाभावाद्वृक्षादेरकर्मत्वं च स्यात् ।

अत्राजां ग्रामं नयतीतिवद्द्विकर्मकत्वं स्यादिति नाशङ्कनीयम् । क्रियान्तार्थत्वे [धात्वर्थतावच्छेदक]फलद्वयाभावात्, तादृशक्रियानुकूलव्यापारार्थत्वे च क्रियाया मेव द्वितीयार्थवृत्तित्वान्वयात् । क्रियावच्छेदकसंयोगे तु वृक्षायेत्यादिचतुर्थ्यर्थस्योद्देश्यत्वस्यैवान्वयो न द्वितीयार्थस्य, व्युत्पत्तिवैचित्र्यात् । चतुर्थीसमभिव्याहृतस्यैव सिचधातोस्तादृशव्यापारार्थत्वात् । अत एवाजां ग्रामं नयतीत्यत्र ग्रामस्य न संप्रदानत्वम् । अत्र हि संयोगावच्छिन्नाक्रियानुकूलव्यापारः प्रेरणादिर्धात्वर्थः, द्वितीयार्थो वृत्तित्वम् । संयोगे तु ग्रामपदोत्तरद्वितीयार्थः क्रियायामजापदोत्तरद्वितीयार्थोऽन्वेति । तथैव व्युत्पत्तेः । तादृशफलभागित्वेन ग्रामादेरनुद्देश्यत्वान्न संप्रदानता । तथोद्देश्यत्वविवक्षायां ग्रामायाजां नयतीति भवत्येवेति दिक् ।

परे तु *त्यज्यमानद्रव्यस्वत्वभागित्वेनोद्देश्यत्वं संप्रदानत्वम् *। त्यागोऽत्र विलक्षणो ग्राह्यः । तेन विक्रयादौ क्रेत्रादेर्न संप्रदानत्वम् । कर्मणा दानकर्मणा यमभिप्रैति स संप्रदानमिति 'कर्मणा' इत्यादिसूत्रार्थः । अत एव संप्रदीयतेऽस्मै इति संप्रदानसंज्ञान्वर्थैव । श्राद्धादौ पित्रादेर्न स्वत्वभागित्वेनोद्देश्यत्वं किंतु प्रीतिभागितयेति संप्रदानत्वाभावेन संप्रदानचतुर्थ्यसंभवात् 'नमः स्वस्ति' इत्यादिना सूत्रान्तरेण तत्र चतुर्थी ।—

एवं वृक्षायोदकमासिञ्चतीत्यादौ वृक्षादौ संप्रदानप्रयोगो गौणः चतुर्थीप्रास्त्यर्थः । अत एव शत्रवेऽस्त्रं मुञ्चति, मित्राय दूतं प्रेषयतीत्यादौ धात्वर्थातवच्छेदकफलभागित्वेनोद्देश्यत्वाभावेऽपि चतुर्थी । विभागानुकूलक्रियानुकूलव्यापारो मोचनम् । संयोगानुकूलक्रियानुकूलव्यापारः प्रेषणमिति धात्वर्थतावच्छेदकक्रियावच्छेदकसंयोगविभागरूपफलशालित्वेन शत्रुमित्रयोरनुद्देश्यत्वम् । इत्थं चोदकादिजन्यफलपल्लवाद्युल्ला-

---

१ क्रियारूपफलजन्यफलशा°; क्रियारूफलशा° ।

दिजन्यदुःखादिदूतजन्यवार्ताज्ञानादि फलशालित्वेनोद्देश्यत्वमेव गौणं वृक्षायेत्यादिचतुर्थीत्रयार्थः ।—

न च गुरुप्रीत्युद्देशेन गुरुपुत्राय दत्ते गुरवे ददातीति स्यात्, तथा विवक्षायामिष्टत्वात् । अत एव रजकसंवन्धित्वस्य तात्पर्यविषयत्वे रजकस्य वस्त्रं ददातीति प्रयोगः । वस्त्रजन्यफलभागित्वेनोद्देश्यत्वस्य तत्त्वे तु रजकाय वस्त्रं ददातीति भवितव्यम् ।—

न चैवं श्राद्धादावपि पित्रादेः प्रीतिभागित्वेनोद्देश्यत्वात् संप्रदानचतुर्थ्यैवोपपत्तेः 'नमः स्वस्ति' इत्यादि सूत्रान्तरं व्यर्थम् । यत्किंचित्क्रिया( कर्म )जन्यफलभागित्वेनोद्देश्यत्वस्यैव गौणसंप्रदानत्वरूपतया नमःपदार्थादेः क्रियात्वाभावेन पृथक्सूत्रप्रणयनात् ।—

नारदाय रोचते कलहः, वैश्याय शतं धारयतीत्यादौ तु न नारदादेः संप्रदानता किंतु 'रुच्यर्थानां प्रीयमाणः', 'धारेरुत्तमर्णः' इति सूत्राभ्यां संबन्धमात्रे चतुर्थी । तथा च चतुर्थ्या संबन्धो धातुना रुचिराख्यातेन विषयता बोध्यत इति नारदस्य रुचिविषयः कलह इत्याद्यस्य; पुनर्दानमङ्गीकृत्य द्रव्यग्रहणं धारणं, वैश्यस्य शतकर्मकतादृशग्रहणाश्रय इत्यन्त्यस्यार्थः ।—

संप्रदानस्य कारकत्वं धात्वर्थतावच्छेदकफलनिष्पादकत्वेन ददस्वेत्यनुमतिप्रकाशनेन दातुरिच्छामुत्पाद्य दानसंपादनेन वेत्याहुः ।

परे तु *त्यागजन्यस्वत्वजनकस्वीकारवत्त्वं संप्रदानत्वम्* । श्राद्धादौ पित्रोदर्न स्वीकारः । रुद्राय गां ददातीत्यादावपि गौणसंप्रदानत्वमुद्देश्यत्वरूपमित्याहुः ।

---

## अपादानत्ववादः ।

### परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम् ।

वृक्षात्पर्णं पततीत्यादौ पर्णादेरपादानत्ववारणाय परकीयेति । अत्र पञ्चम्या विभागजनकत्वमन्योन्याभावप्रतियोगितावच्छेदकत्वं चार्थः । विभागेऽन्योन्याभावे चाधिकरणत्वेन वृक्षोऽन्वेति । तथा च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकपतनाश्रयः पर्णमिति वाक्यार्थः । तथा च 'ध्रुवमपायेऽपादानम्' इति पाणिनिसूत्रम् । अपाये विभागे ध्रुवं निश्चलं प्रकृतपञ्चम्यर्थविभागजनकत्वा-

न्वयिक्रियाशून्यमिति तदर्थः । तेन धावतोऽश्वात्पततीत्यादावश्वादेः पुरुषनिष्ठविभागहेतुक्रियावत्त्वेऽपि प्रकृतपञ्चम्यर्थविभागजनकत्वान्वयिनी या पतनक्रिया तच्छून्यत्वमव्याहतम् । स्पन्दजन्यविभागाश्रयत्वेन वृक्षादेरपादानत्वे वृक्षात्पर्णं स्पन्दत इत्यपि स्यादतः क्रियेति सकर्मकधात्वर्थपरम् ।

व्याघ्राद्बिभेतीत्यादौ पञ्चमी नापादानत्वे, किंतु हेतुत्व इत्यग्रे वक्ष्यते । धात्वर्थतानवच्छेदकत्वेन विभागो विशेष्यः । तेन वृक्षं त्यजति खग इत्यादौ वृक्षस्य नापादानत्वम् ।

यत्तु विभागावच्छिन्नक्रियायास्त्यजधात्वर्थतया विभागे विभागविशिष्टक्रियाजन्यत्वाभावान्न दोष इति तन्न । तर्हि अधःसंयोगावच्छिन्नक्रियाया एवं पतत्यर्थतया वृक्षपर्णविभागेऽधःसंयोगविशिष्टक्रियाया अजनकत्वादसंभवापत्तेः । विभागे फलोपलक्षितव्यापारजन्यत्वमुभयत्र तुल्यमिति दिक् ।

वृक्षाद्विभजत इत्यादौ विभागावधित्वमपादानत्वम्, अवधित्वं स्वरूपसंबन्धरूपं पञ्चम्यर्थः । अपाये विभागे ध्रुवम् अवधिभूतमपादानमित्यपि पाणिनिसूत्रार्थः । तथा च वृक्षनिष्ठावधितानिरूपकविभागाश्रयः पर्णमित्युक्तवाक्यार्थः । न चैवं स्वस्माद्विभजत इत्यपि स्यात् । स्वप्रतियोगिकत्वविशिष्टसंयोगस्येव स्वावधिकत्वविशिष्टविभागस्यापि स्वस्मिन्नभावात् । इत्थं चापादानपदं पञ्चमी च नानार्थमेवेति बोध्यम् । धावतोऽश्वात्पततीत्यादावपि अवधित्वमेव पञ्चम्यर्थ इत्यपि कश्चित् ।

व्याघ्राद्बिभेति, शत्रोः परित्रायत इत्यादौ पञ्चमी नापादाने किंतु 'भीत्रार्थानां भयहेतुः' इति सूत्रेणानुशिष्टा हेतुत्वार्थिका । धातोश्च यथायथं भयं भयाभावश्चार्थः । पञ्चम्यर्थहेतुत्वं धात्वर्थे भये धात्वर्थतावच्छेदके च भयेऽन्वेति । आश्रयत्वं व्यापारश्च यथायथमाख्यातार्थः । तथा च व्याघ्रहेतुकभयाश्रय इत्याद्यस्य शत्रुहेतुकभयाभावानुकूलव्यापारवानित्यन्त्यस्यार्थः । इत्थं च हेतुपञ्चम्यैवोपपत्तौ पृथक्सूत्रं प्रपञ्चार्थमिति बोध्यम् ।

एवं कूपादन्धं वारयतीत्यादौ पञ्चम्या अधःसंयोगानुकूलक्रियारूपं पतनं, द्वितीयाया धात्वर्थव्यापारान्वितं वृत्तित्वम्, धातोः विरोधिव्यापारोऽर्थः । तथा चान्धवृत्ति–कूपादिनिष्ठाधःसंयोगानुकूलक्रि-

या—विरोधिव्यापारविषयककृतिमानिति वाक्यार्थः संपद्यते। स न युक्तः। यत्र हि त्रिक्षणावस्थायिनि खण्डकूपे परमाण्वादेरधःसंयोगो मानाभावेनासिद्धः तत्रासंभवात्। अत एव द्वितीयायाः पतनं पञ्चम्या धात्वर्थतावच्छेदकाभावान्वयि वृत्तित्वं धातोरभावानुकूलव्यापारोऽर्थः। तथा च कूपवृत्त्यन्धपतनाभावानुकूलव्यापारविषयकयत्नवानित्यन्वयोऽप्यपास्तः। यदन्धस्य पतनमप्रसिद्धं तत्रासंभवात्। किंतु धातोरभावानुकूलव्यापारः पञ्चम्या वृत्तित्वं द्वितीयायाः प्रतियोगित्वमनुयोगित्वं वा धात्वर्थतावच्छेदकीभूताभावान्वितमर्थः। अभावश्च कूपादिसमभिव्याहारात्पतनादिना तज्जन्याधःसंयोगादिना वा संबन्धेन बोध्यः। तथाच पतनादिसंबन्धेन कूपवृत्त्यन्धप्रतियोगिकाभावानुकूलव्यापारविषयकयत्नवानिति वाक्यार्थः। एवमेतस्मात्सविषादन्नादिदं मित्रं वारयतीत्यादौ यत्सविषान्नस्य यन्मित्रस्य च भोजनमप्रसिद्धं तत्रापि भोजनसंबन्धेन सविषान्नवृत्तिमित्रप्रतियोगिकाभावानुकूलव्यापारविषयककृतिमानित्यन्वयधीः।

परे तु कूपादन्धं वारयतीत्यत्र सविषादन्नादिदं मित्रमित्यत्र च धातोः पतनमाद्ये, द्वितीये भोजनम्; अभावानुकूलव्यापारश्चोभयत्रार्थः। पञ्चम्या अवच्छिन्नत्वमाद्ये द्वितीये कर्मत्वमुभयत्र द्वित्वं चार्थः। द्वितीयायाश्च कर्तृत्वमर्थः। धात्वर्थतावच्छेदकीभूताभावे धात्वर्थपतनादेरधिकरणत्वेन, द्वित्वावच्छिन्नस्य पञ्चम्यर्थद्वितीयार्थकर्तृत्वोभयस्य च प्रतियोगित्वेनान्वयो व्युत्पत्तिवैचित्र्यात्। तथाच पतनसामान्ये यः कूपावच्छिन्नत्वान्धकर्तृत्वोभयप्रतियोगिकाभावस्तदनुकूलव्यापारविषयकयत्नवानिति आद्यस्य, यः भोजनसामान्ये सविषान्नकर्मत्वमित्रकर्तृत्वोभयप्रतियोगिकाभावस्तदनुकूलव्यापारविषयकयत्नवानिति द्वितीयस्यार्थः।

आकाशं न पश्यति घटश्चैत्रो वेत्यादौ द्वितीयया विषयित्वं लक्षणया घटादिवृत्तित्वं द्वित्वं च बोध्यते। धातुना लौकिकविषयित्वावच्छिन्नचाक्षुषप्रत्यक्षम्। तथा च लौकिकचाक्षुषप्रत्यक्षसामान्ये य आकाशविषयित्वघटादिवृत्तित्वोभयाभावः तत्प्रतियोगिनिरूपको घट इत्यर्थः। आकाशविषयकचाक्षुषोपनीतभानेऽपि लौकिकविषयित्वावच्छेदेनाकाशविषयित्वचैत्रवृत्तित्वोभयाभावसत्त्वान्न दोषः। एवमन्यत्राप्रसिद्धिस्थले बोध्यमित्याहुः।

हिमवतो गङ्गा प्रभवतीत्यादौ पञ्चम्या हेतुत्वं धातोरुत्पत्तिरर्थ इति न

युक्तम् । तर्हि 'जनिकर्तुः—' इत्यत एवोपपत्तौ 'भुवः प्रभवः' इति सूत्रवैयर्थ्यप्रसङ्गात् । किंतु प्रकर्षेण भवनं प्रकाशः आद्यबहिःसंयोगरूपो धात्वर्थः । बहिःपदार्थः प्रकृते भूखण्डम् । पञ्चम्यर्थः संयोगध्वंसाव्यवहितोत्तरक्षणवृत्तित्वम् । आख्यातार्थ आश्रयत्वम् । तथा च हिमालयसंयोगध्वंसाव्यवहितोत्तरक्षणवृत्त्याद्यपृथिवीसंयोगाश्रयत्ववती गङ्गेत्यर्थः । वैकुण्ठात्काशीतो वा गङ्गा प्रभवतीत्यप्रयोगादव्यवहितेति, आद्येति च । वैकुण्ठसंयोगध्वंसाव्यवहितोत्तरक्षणे भूसंबन्धस्य काशीसंयोगध्वंसाव्यवहितोत्तरक्षणे आद्यस्य तस्याभावाददोषः । 'वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य' इत्यादावप्येवमेव । तत्र बहिःपदार्थो वल्मीकाग्रोर्ध्वदेश इति विशेषः ।

कृष्णात्पराजयते शिशुपालः अध्ययनात्पराजयते बाल इत्यादौ धातोरसहिष्णुता, पञ्चम्याः कर्मत्वमाख्यातस्याश्रयत्वमर्थः । श्रीकृष्णं न सहते, अध्ययनं न सहते इतिविवरणात् । असहिष्णुता च द्वेषः, अभिभवाशक्यत्वज्ञानम्, अशक्यत्वज्ञानं वा । तथा च श्रीकृष्णविषयकाभिभवाशक्यत्वज्ञानवान् शिशुपालः कृष्णविषयकद्वेषवान् वेत्याद्यस्य, अध्ययनविषयकाशक्यत्वज्ञानवान् बाल इत्यन्त्यस्यार्थः ।

विप्राद्धनमादत्ते इत्यादौ पञ्चम्या यथेष्टविनियोगोऽर्थो नतु स्वत्वं चौराद्धनमादत्ते इत्यादौ चौरस्य स्वत्वाभावेन तदसंभवात् । धातोरपि यथेष्टविनियोगफलकस्वीकारोऽर्थो न तु स्वत्वजनकस्वीकारः । विप्राद्धनमादत्ते चौर इत्यादौ चौरस्य तदसंभवात् । पञ्चम्यर्थश्च विनियोगोऽव्यवहितोत्तरत्वसंबन्धेन धात्वर्थतावच्छेदके विनियोगेऽन्वेति । अव्यवहितोत्तरत्वं च स्वसमानविषयकपुरुषान्तरीयविनियोगव्यवहितभिन्नत्वम् । तेन शूद्रतः प्रतिग्रहीत्रा विप्रेण दत्तं धनमादातरि शूद्रादादत्त इति न प्रयोगः । इत्थं च विप्रीययथेष्टविनियोगाव्यवहितोत्तरधनवृत्तियथेष्टविनियोगफलकस्वीकारवानित्यर्थः ।

अधर्माज्जुगुप्सत इत्यत्र पञ्चम्याः कर्मत्वं धातोर्निन्दार्थः । तथाचाधर्मं निन्दतीत्यर्थः । अधर्माद्विरमतीत्यत्र धातोः करणानन्तरमकरणं पञ्चम्याः कर्मत्वमर्थः । स च करणेऽकरणे चान्वेति । तथा चाधर्मं कृत्वा पुनर्न करोतीत्यर्थः । धर्मात्प्रमाद्यतीत्यादौ पञ्चम्या विषयत्वं धातोरनवधानमाख्यातस्याश्रयत्वमर्थः । धर्मविषयकावधानाभावाश्रय इति वाक्यार्थः ।

उपाध्यायादन्तर्धत्ते शिष्य इत्यादौ धातोः स्वविषयकप्रत्यक्षविरोधिव्यापारः पञ्चम्याः संबन्धित्वं धात्वर्थतावच्छेदकप्रत्यक्षान्वितमाख्यातस्य कृतिरर्थः । तथाचोपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमाञ्छिष्य इति वाक्यार्थः ।

दण्डाद्धटः, धूमाद्वह्निमानित्यादौ तु पञ्चमी नापादाने, क्रियायोगाभावात् । किंतु जनकत्वज्ञापकत्वरूपे हेतुत्वे जन्यत्वज्ञाप्यत्वरूपे हेतुमत्त्वे वा 'हेतौ' इति सूत्रेणानुशिष्टा । नचैवं 'जनिकर्तुः' इति सूत्रं व्यर्थम्, काष्ठात्पचतीत्यत्रेव दण्डाज्जायत इत्यादावप्युत्पत्तिनिरूपितहेतुत्वार्थकपञ्चम्याः 'हेतौ' इति सूत्रेणैव संभवादिति वाच्यम् । उत्पत्तेरहेतुकत्वेऽपि सावधिकत्वव्यवहारादुत्पत्तिरूपधात्वर्थनिरूपितस्वरूपसंबन्धस्य हेतुत्वानात्मकतया 'हेतौ' इति सूत्रेण तदर्थकपञ्चम्या असंभवादिति ॥

## अधिकरणत्ववादः ।

अधिकरणत्वं च न *धर्मसंबन्धः* संयोगादिरूपसंबन्धस्य द्विष्ठतया बदरादेरपि कुण्डाद्याधारतापत्तेः । न च स्वधर्मसंबन्धोऽधिकरणत्वं कुण्डादिकं च न बदरादिधर्म इति वाच्यम् । स्वधर्मत्वस्य स्वाधेयत्वरूपतया स्वाधेयत्वस्य च स्वनिष्ठाधिकरणतानिरूपकत्वरूपत्वेनान्योन्याश्रयप्रसङ्गात् ।

नापि *उत्पत्तये स्थितये ज्ञप्तये चापेक्षणीयमधिकरणम्* उत्पत्तयेऽपेक्षणीयं कार्यस्य समवायिकारणं, स्थितये घटादेर्भूतलादि, ज्ञप्तये जात्यादेः समवायि समवायादेः स्वरूपसबन्धीति वाच्यम् । अपेक्षणीयत्वस्य कारणत्वरूपत्वेऽसमवायिकारणादावतिव्याप्तेः । समवायिकारणत्वं तु घटत्वादिज्ञप्तेर्घटादौ न संभवति ।

नापि *तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवन्मूर्तत्वं पतनवन्मूर्ताधिकरणत्वम्* ब्रह्माण्डादिधारकसंयोगाश्रयेश्वरवारणाय मूर्तत्वमुपात्तम् । मूर्तमात्रस्य विलक्षणतत्संयोगादिमत्त्वं वा । तेन कस्यचित्पतनाप्रसिद्धावपि नाव्याप्तिः । गुणादेस्तत्समवायित्वं समवायादेस्तत्स्वरूपसंबन्धित्वम् । एवं रक्तः पट इत्यादौ परम्परासंबन्धेनापि वक्तव्यम्—इति वाच्यम् । अननुगमात् । सप्तम्या नानार्थत्वे चान्याय्यत्वात् ।

१ ज्ञप्तये इति पाठः ।

किंतु प्रतियोगित्वादिवत्—

**अधिकरणत्वमधिकरणमितिप्रतीतिसाक्षिकं**

स्वरूपसंबन्धरूपमतिरिक्तं वेत्यन्यदेतत् । एवमाधेयत्वमपि वाच्यम् । इत्थं च गृहे स्थाल्यामोदनं पचतीत्यादौ पच्यर्थः अधःसंतापनमधोवह्निसंयोगानुकूलकाष्ठवह्न्यादेर्व्यापार इत्येके । पच्यर्थो विक्लित्त्यवच्छिन्नाभितण्डुलादिसंयोग एव पाकजं रूपमित्यादिव्यवहारादित्यन्ये । उभयथापि गेहादेः साक्षात्तदधिकरणत्वाभावात्, कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वरूपं क्रियाधिकरणत्वं सप्तम्यर्थः । तदाहुः—

कर्तृकर्मव्यवहितमसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥

वस्तुतः परंपरया क्रियाश्रयत्वमात्रं सप्तम्यर्थः । अत एव प्राङ्गणस्थेन दीर्घदण्डादिना काष्ठादिचालनद्वारा गृहमध्ये पाककरणे गृहस्य कर्तृद्वारा क्रियानाश्रयत्वेऽपि गृहे पचतीति प्रयोगः । वह्निचैत्रादेः साक्षात्पाकगमनादिक्रियाश्रयत्वेऽपि वह्नौ पचति चैत्रे गच्छतीत्याद्यप्रयोगात्परंपरयेत्युक्तम् । न चैवं क्रियाश्रयत्वस्यैव सप्तम्यर्थत्वे क्रियायोगेन विना भूतले घट इत्यादिप्रयोगो न स्यादिति वाच्यम् । इष्टत्वात् । नहि क्रियारहितं वाक्यमस्तीति शाब्दिकाः ।

वस्तुतोऽधिकरणत्वमात्रमाधेयत्वमात्रं वा सप्तम्यर्थः । क्रियांशस्य वैयर्थ्यत्वात् । स च यत्र क्रियायामन्वेति तत्र कारकत्वव्यवहारः । अत एव भूतले घट इति ( क्रियाशून्य )वाक्याच्छाब्दबोध इति नैयायिकाः । अत्र भूतलनिष्ठाधिकरणतानिरूपको घट इत्यन्वयबोधः । निष्ठत्वं निरूपकत्वं च संसर्ग इति प्राञ्चः । एवं सति निरूपकत्वसंबन्धस्य प्रतियोगितानवच्छेदकत्वात् भूतले न घट इत्यादौ नञर्थान्वयासंभवाद् [ आधेयत्वं सप्तम्यर्थः । तत्र च प्रकृत्यर्थस्य निरूपकतया प्रथमान्तार्थस्याधिकरणतया चान्वये ] भूतलनिरूपिताधेयत्वाश्रयो घट इत्यन्वयबोधः । निरूपितत्वमाश्रयत्वं च संसर्ग इति नव्याः ।

निमित्तसप्तम्यर्थो निमित्तत्वम् । तच्चोद्देश्यत्वं फलत्वेन फलवत्त्वेन चेच्छाविषयत्वरूपम् । तत्राद्यं मशकनिवृत्तौ धूमं करोतीत्यादौ मश-

१ मनुगताकारप्र'; अधिकरणाकार' । २ त्रापिती पाठः । ३ अन्यलभ्यत्वात् ।

कनिवृत्त्यादेः फलत्वात् । 'चर्मणि द्वीपिनं हन्ति' इत्यादौ चर्मादेः सिद्धतया स्वत्वरूपफलवत्त्वेनैवेच्छाविषयत्वात् । तच्च प्रयोज्यत्वेन धात्वर्थेऽन्वेति । तथाच मशकनिवृत्तिविषयकेच्छाप्रयोज्यधूमकरणाश्रयः, चर्मविषयकस्वत्वप्रकारेच्छाप्रयोज्यद्वीपिकर्मकहननानुकूलकृतिमानिति च क्रमेण वाक्यार्थः । एवं 'सीम्नि पुष्कलको हतः' इत्यादावपि 'पुष्कलको गन्धमृगः सीमा तस्याण्डकोशकः' इति कोशात् । सा च 'निमित्तात्कर्मयोगे' इत्यनुशासनाद्यत्किंचित्कर्मप्रकारकबोधजनकधातुयोगे प्रयुज्यते । तादृशबोधजनकता च सकर्मकस्य धातोः कर्मबोधकपदयोगेन । यथा द्वीपिनं हन्तीत्यादौ । अकर्मकस्य तु कर्मविशिष्टस्वार्थशक्तया । यथाऽविद्यारजनीक्षये यदुदेतीत्यादौ उदेतीत्यस्योदयगिरिशिखरमारोहतीत्यर्थात् । अत्र रजनीक्षयस्य सूर्योदयाजन्यत्वेऽपि निमित्तत्वं ज्ञानविषयत्वेनोद्देश्यतया । तेन लोकानां रजनीक्षयज्ञानार्थमुदेतीत्यर्थ इत्येके । एतद्दीपवृत्तियावद्रविरश्मिसंसर्गाभावविशिष्टस्य कालस्य रजनीत्वात्, सूर्योदये तद्रश्म्युत्पादेन तत्प्रागभावनाशे विशिष्टकालनाशाद्रजनीक्षयेच्छाप्रयोज्यत्वं सूर्योदयेऽक्षतमित्यन्ये ।

शरदि पुष्प्यन्ति सप्तच्छदा इत्यत्रोत्पत्तिरपि सप्तम्यर्थः । शरदुत्पत्तिकपुष्पाश्रयाः सप्तच्छदा इति वाक्यार्थः । न च शरदुत्पत्तिकपुष्पाश्रये चम्पकादावपि तथा प्रयोगः स्यादिति वाच्यम् । सप्तच्छदस्य पुष्पाश्रयत्वे लब्धे तुल्यवित्तिवेद्यतया पुष्पेष्वपि सप्तच्छदवृत्तित्वलाभात्तदवच्छेदेन शरदुत्पत्तिकत्वस्य व्युत्पत्तिसिद्धत्वात्, चम्पकादिपुष्पत्वावच्छेदेन शरदुत्पत्तिकत्वाभावेन तथाप्रयोगाभावात् । धातोरेव वा सप्तच्छदीयपुष्पत्वेन लक्षणेति केचिदिति दिक् ।

सतिसप्तम्याः सामानाधिकरण्यमर्थः । गुणकर्मान्यत्वे सति सत्त्वादित्यतो गुणकर्मान्यत्वसमानाधिकरणसत्त्वबोधात् । तच्च क्वचित्कालिकं, क्वचिद्दैशिकम् । तत्राद्यं समानकालीनत्वपर्यवसन्नम् । यथा गोषु दुह्यमानास्वागतो दुग्धास्वागत इत्यादौ । अत्र सप्तम्यर्थे समानकालीनत्वे न दोहनमात्रस्य निरूपकत्वेनान्वयः, महिष्यादिदोहनसमानकालीने तथाप्रयोगाभावात् । नापि गोदोहनस्य गोदोहनत्वेन धातोरनुपस्थितेः । किंतु दण्डी पुरुषो गच्छतीत्यत्र यथा परंपरया पुरुषविशेषणतापन्नदण्डसमानकालीनत्वं गमने भासते, तथा गोविशेषणकर्मताविशेषण-

तापन्नस्य दोहनस्य। इत्थं च तादृशगोदोहनसमानकालीनातीतागमनानुकूलकृतिमानिति धीः ।

दुग्धास्वागत इत्यादौ तु न तथान्वयः । आगमनकाले दोहनस्यातीततया दोहनकालीनत्वस्यागमने बाधात् । किंतु वर्तमानध्वंसप्रतियोगिदोहनकर्मतापन्नासु गोष्विति दुग्धासु गोष्वित्यन्तार्थः । तादृशगोदोहनविशेषणप्रतियोगित्वविशेषणध्वंसस्य समानकालीनत्वमागमने भासते । तथाच तादृशवर्तमानध्वंसकालीनागमनानुकूलकृतिमानिति द्वितीयवाक्यार्थः। एवं गोषु धोक्ष्यमाणास्वागत इत्यादावपि तादृशप्रतियोगित्वविशेषणप्रागभावस्य समानकालीनत्वं भासते । न च सप्तम्यर्थे समानकालीनत्वे प्रकृत्यर्थस्य गोरनन्वयापत्तिः। तादृशगोदोहनकर्मत्वविशिष्टाया गोः स्वविशेषणकर्मत्वविशेषणदोहनाद्याश्रयत्वसंबन्धेन कालेऽन्वयात् ।

इदं तु बोध्यम्। 'यस्य च भावेन भावलक्षणम्' इति सूत्रस्य यस्य क्रियया क्रियान्तरं लक्ष्यते इति व्याख्यानात् क्रिययोः सामानाधिकरण्ये सप्तमी तत्सूत्रेणानुशिष्टेति गुणकर्माऽन्यत्वे सति सत्त्वादित्यादौ यद्यपि सप्तमी न युक्ता तथापि गुणकर्मान्यत्वे सति सत्त्वादित्यभियुक्तप्रयोगदर्शनात् सूत्रतद्व्याख्यानयोर्भावक्रियापदे धर्मपरे । तथा च यस्य धर्मेण धर्मान्तरं निरुक्तस्वसामानाधिकरण्येन प्रतिपाद्यते तत्र सप्तमीति सूत्रार्थ इत्यदोषः ॥

इति श्रीमहामहोपाध्यायजयरामन्यायपञ्चाननभट्टाचार्यविरचितः कारकवादार्थः समाप्तः ।

---

१ गोदोहनध्वंसेति पाठः । २ दोहनीयास्वेति पाठः ।

श्रीजयरामभट्टाचार्यप्रणीतः

# समासवादः ८

न्यायपञ्चाननः श्रीमाञ्जयरामः सतां मुदे ।
समासतत्त्वमाचष्टे विबुधानां सुखोपमम् ॥ १ ॥

## समासत्ववादः ।

तत्र समासत्वं–

**विभक्तिशून्यपूर्वपदकनामसमुदायत्वम् ।**

अत्र विभक्तिशून्यपूर्वपदकत्वं विभक्तिशून्यपूर्वपदघटितशाब्दबोधप्रयोजकानुपूर्वीमत्त्वम् । तेन न घट इत्यादौ नातिव्याप्तिः । घटो नेत्याद्यानुपूर्वीज्ञानत्वेनैव शाब्दबोधहेतुत्वात् । अघट इत्यादौ समासतापन्नस्य नञस्तु पूर्ववर्तित्वेनैव शाब्दबोधप्रयोजकत्वं समासानुशासनबलाद्धटः अ इत्यादेरबोधकत्वाच्च । 'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' इत्यादौ श्रुतेरर्थं स्मृतिरिवेति योजनयैव बोधः । तेन 'इवार्थम्' इत्यादौ नातिव्याप्तिः । 'आराद्ब्रह्मविदामशेषविषयब्रह्मैक्यमुद्दीपयन्' इत्यादौ ब्रह्मैक्यमुद्दीपयन्नाराद्दुज्जृम्भते इति योजनयैव बोधस्तेन 'आराद्ब्रह्म' इत्यत्र नातिव्याप्तिः ।

'दधि मधुरमस्ति' इत्यादौ भावनाद्यन्वये प्रथमाद्यन्तपदज्ञानजन्योपस्थितेः प्रयोजकत्वेन लुप्तविभक्तेः सत्त्वाददोषः । नीलोत्पलमित्यादिसमासे तु विभक्तिर्व्यर्था । नहि राजपुरुष इत्यादौ लुप्तषष्ठ्यादिस्मृत्या शाब्दबोधः । षष्ठीलोपमजानतोऽपि बोधात् । न वा बहुव्रीहौ यत्पदगर्भविग्रहवाक्यस्मृत्या शाब्दबोधः, तत्पदाभावात् । किंचैवं तत्पुरुषादितः कर्मधारयस्य ज्यायस्त्वं न स्यात् । लुप्तषष्ठ्यादिस्मृत्या स्मरणाङ्गीकारे लक्षणाविरहात् । समासादौ विभक्तिलोपाभिधानं तु विभक्तिं विनापि तत्र प्रातिपदिकस्य साधुत्वाय । नीलोत्पलधवखदिरादिसमुदायोत्तरं विभक्तिस्त्वर्थवदादिसूत्रेऽर्थवत्त्वस्य स्वघटकपदवृत्त्यार्थबोधकत्वरूपत्वात् ।

---

१ समासतः । २ नीलोत्पलेत्यादि ।

अत एव वाक्यं न समासता प्राप्नोति । नित्य एव समासः । कण्ठेकाल, उरसिलोमेत्यादिकमपि समासप्रकृत्यन्तरमेवेत्येके । तन्न । कण्ठेकाल उरसिलोमेत्यादेः प्रकृत्यन्तरत्वं समुदाये शक्तिमङ्गीकृत्य न वा । आद्ये गौरवम् । नामसमुदायत्वं च व्याहन्येत । अत एव नान्त्यः प्रातिपदिकत्वस्यार्थबोधकत्वस्य चानुपपत्तेः । एकारान्तकण्ठेइतिशब्दस्य क्वाप्यनुपपत्तेः । तस्माद्वाक्यमेव क्वचिद्विकल्पेन क्वचिन्नित्यमेव समासतां प्राप्नोतीति सविभक्तिकनामसमुदायस्यैव समासत्वम् । नचैवं देवानित्यादिसमुदायस्यापि वारणायार्थवदादिसूत्रेऽप्रत्यय इत्यस्य प्रत्ययतदन्तान्यपरत्वेऽपि प्रत्ययपदस्य विभक्तिपरतया कृत्तद्धितप्रत्ययान्तयोरस्तु संग्रहः । नीलोत्पलादिसमासस्य लुप्तविभक्त्यन्तस्य प्रातिपदिकत्वं कृदादिसूत्रेणैव विधेयमिति तत्सूत्रस्यार्थवदादिसूत्रप्रपञ्चत्वं मिश्राद्युक्तं विरुध्येत । अप्रत्यय इत्यस्य कृत्तद्धितसमासेतरप्रत्ययान्तभिन्नपरत्वज्ञापकतया कृदादिसूत्रप्रपञ्चत्वसंभवादित्यन्ये । एतन्मते च प्रागुक्तलक्षणमसंभवीति चेन्न । आनुशासनिकलोपाभावविशिष्टान्यत्वस्य नियतानुसंधानविषयत्वस्य च विभक्तिविशेषणत्वात् । कण्ठेकाल इत्यादौ विभक्तिर्नानुशासनिकलोपाभावविशिष्टान्या, नीलोत्पलमित्यादौ च विभक्तिर्न नियतानुसंधानविषयः साधुत्वमात्रार्थत्वात्, इत्यदोषः । परेतु अलुक्समासातिरिक्तसमासे विभक्तेरसत्त्वादन्त्यविशेषणं न देयमित्याहुः ।

*संकेतविशेषसंबन्धेन समासपदवत्त्वमेव समासत्वम्* इत्यपरे ।

*विभक्त्यन्तविभक्तिमन्नामसमुदायत्वम्* इति तु यथानीलदण्डादित्याद्यनुकरणसाधारणम् । नच नीलदण्डादित्यत्र नीलदण्डादिपदे तत्पदसमभिव्याहृते लक्षणा । एकदेशे दण्डादित्यादिपदेऽभेदान्वयात्कर्मधारयत्वमिष्टं विभक्तेरप्यनुकरणे[1] नामत्वादिति वाच्यम् । प्रकृतिवदनुकरणमित्यनुशासनेन निरर्थकसमुदायोत्तरमपि विभक्तिसंभवे नीलदण्डादितिपदे तुल्याधिकरणत्वाभावेन कर्मधारयत्वाभावाल्लक्षणयैकेदेशेऽभेदान्वयानौचित्यात् । चरमपदे तत्तदानुपूर्वीविशिष्टे लक्षणाया (अ)युक्तत्वात् । विवरणेऽप्येवम् । तस्याप्यनुकरणविशेषत्वादित्यास्ता विस्तरः ।

अत्रेदं तत्त्वम् । यथा नीलदण्डादित्याद्यनुकरणे विशेषलक्षणायोगात्

---

१ ॰नुपलब्धेरिति पाठः । २ व्यस्तवाक्यवारणाय विभक्त्यन्तमिति । सरूपैकशेषवारणाय विभक्तिमदिति । ३ तत्तत्सम॰ । ४ ॰णेनाभिन्नत्वादिति ।

समासत्वानङ्गीकारः। परंतु तादृशसमुदायेऽतिप्रसङ्गदानं पूर्वलक्षणेऽपि समानम्। विभक्तिशून्यपूर्वपदकेत्यत्र पदे स्वार्थतात्पर्यकत्वनिवेशेन तद्वारणं चात्रापि विभक्तिमन्नामसमुदायेत्यत्र विभक्तिमन्नाम्निस्वार्थबोधतात्पर्यकत्वनिवेशेन तुल्यम्। तस्माल्लघुत्वात्स्वार्थबोधतात्पर्यकत्वघटितं द्वितीयमेव लक्षणमुपादेयमिति।

यत्तु विभक्त्यन्तत्वज्ञाने समासत्वज्ञानं समासत्वज्ञाने च विभक्त्यन्तत्वज्ञानमित्यन्योन्याश्रयाद्विभक्त्यन्तत्वघटितसमासलक्षणं न साध्विति तन्न। विभक्त्यन्तत्वघटितसमासत्वज्ञाने विभक्त्यन्तज्ञानापेक्षायामपि विभक्त्यन्तत्वज्ञाने तद्घटितसमासत्वज्ञानानपेक्षणात्। तत्र संकेतविशेषसंबन्धेन समासेतिसंज्ञावत्त्वरूपसमासत्वज्ञानस्यैवापेक्षितत्वात्।

तत्र समासाः षट्। कर्मधारयद्विगुतत्पुरुषबहुव्रीहिद्वन्द्वाव्ययीभावभेदात्।

---

## कर्मधारयः।

कर्मधारयत्वं च—

**समासप्रयुक्तलक्षणाशून्यतुल्याधिकरणनामद्वयघटितसमासत्वम्।**

नीलोत्पलमित्यादौ नीलपदे निरुढलक्षणायाः समासाप्रयुक्ततया नीलोत्पलपदयोस्तुल्याधिकरणत्वाच्च लक्षणसंगतिः। चित्रगू राजपुरुष इत्यादौ समासप्रयुक्तलक्षणासत्त्वात्, नीलघटयोरभेदः कण्ठेकाल इत्यादौ तुल्याधिकरणपदद्वयाभावान्नातिव्याप्तिः। तुल्याधिकरणत्वस्याभेदसंसर्गकबोधतात्पर्यकत्वस्य नीलघटयोरभेद इत्यादावभावान्नीलस्याभेदेन घटान्वितत्वे[1] षष्ठ्यर्थेऽन्वयासंभवादभेद इत्यस्य निराकाङ्क्षत्वापाताच्च। अस्ति चेदं नीलोत्पलं कृष्णसर्प इत्यादौ नीलादिपदस्य नीलवदादिलाक्षणिकतयाऽभेदान्वयबोधात्[2]।

अत्र वाक्यमेव समासतां प्राप्नोतीति मते नीलोत्पलमित्यादयो विकल्पसमासाः नीलमुत्पलमित्यादिविग्रहसत्त्वात्। उपकुम्भं कुम्भकारः कृष्णसर्पः इत्यादयो नित्यसमासाः। अविग्रहोऽस्वपदविग्रहो वा नित्यसमास इत्यभियुक्तस्मरणात्।

अस्वपदविग्रह इत्यस्य स्वघटकयावत्पदघटितविग्रहकान्य इत्यर्थः।

---

१ घटान्वितस्येति पाठः। २ अभेदबोधादिति पाठः।

चित्रागौर्यस्येति विग्रहेऽधिकस्य यस्येतिभागस्य निवेशेऽपि स्वघटकयावत्पदघटितत्वस्य सत्त्वाद्बहुव्रीहेर्नित्यसमासत्वव्युदासः ।

क्वचिदसमासो यथा रामो जामदग्न्यः, अर्जुनः कार्तवीर्यः, उत्पलं नीलमित्यादाविति बोध्यम् ।

छिन्नप्ररूढो वृक्ष इत्यत्र छिदेरारम्भकसंयोगविरोधिविभागजनकक्रिया, क्तप्रत्ययस्य फलाश्रयो, वृक्षपदस्य तदवयवोऽर्थः । विभागस्योभयकर्मजत्वेऽवयवद्वयस्यैव परसमवेतक्रियाजन्यफलशालित्वात्कर्मत्वम् । अन्यतरकर्मजत्वे निश्चलावयवस्यैकस्यैवेति बोध्यम् । तादृशक्रियानुकूलदात्रादिव्यापारश्छिदेरर्थः । धात्वर्थतावच्छेदकक्रियाशालितया च सक्रियावयवस्यैव कर्मत्वमित्यन्ये । प्रोपहितरुहेर्वृक्षाद्युत्पत्तिः । क्तस्याश्रयोऽर्थः । तथाच तादृशक्रियाजन्यफलाश्रयाभिन्नो वृक्षाद्युत्पत्तिमान् वृक्षाद्यवयव इति वाक्यार्थः । कृष्टमदीकृत इत्यत्र कृषेर्विलेखनं मृदवयवविभागहेतुक्रियाजनकलाङ्गलादिव्यापारोऽर्थः । 'कृष विलेखने' इत्यनुशासनात् । क्तप्रत्ययस्य फलाश्रयः । मदी काष्ठविशेषनिर्मिता मदितिख्याता । तया कृतस्तद्व्यापाराधीनसंयोगाश्रयः । कृञो व्यापारार्थत्वात् । तथाच तादृशलाङ्गलादिव्यापारजन्यफलाश्रयाभिन्नो मदीव्यापाराधीनसंयोगाश्रयः इति वाक्यार्थः । अत्र आदौ छिन्नः पश्चात्प्ररूढ इत्यादिपाठक्रमो विवक्षितः । 'आदिकर्मणि क्तः' इत्यनुशासनात् । तेन प्ररोहोत्तरं छेदनमात्रे न तथा प्रयोग इति बोध्यम् ।

मुखचन्द्र इत्यत्र चन्द्रपदस्याह्लादकत्वादिधर्मवति सारोपलक्षणया तुल्याधिकरणत्वात्कर्मधारयः । नन्विदमयुक्तम् । 'आह्लादयति मुखेन्दुर्जगदिदमम(तु)लद्युतिः सुतनोः' इत्यादाविन्दुपदेनाह्लादकत्वाद्युक्तौ पौनरुक्त्यापत्तेः । नच नात्र सारोपलक्षणया रूपकं, मयूरव्यंसकादिसमासोपगमे हि तथा, प्रकृते तु इन्दुरिव मुखमित्युपमितसमासोऽस्त्विति वाच्यम् । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनुशासनात्सामान्यधर्माप्रयोग एव तत्समासात् ।

आलंकारिकैरपि सामान्यधर्मप्रयोगे सत्युपमाबाधकसत्त्वात्सारोपलक्षणाप्रयुक्तो रूपकालंकार इष्यते । यतः उपमितसमासे धर्मवाचकोभयलुप्तोपमैव हि तैरुदाहृता न तु वाचकमात्रलुप्तोपमा । किंचैवम् 'पादा-

---

१ अत्र क्तस्येति पाठः । २ विलक्षणमृदवयवेति पाठः ।

म्बुजं भवतु वो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः' इत्यादौ पूर्वपदार्थप्रधानव्याघ्रादिसमासेनोपमा, मञ्जीरशिञ्जितस्य पाद एव संभवात् 'यस्यानिशं दिविषदश्चरणारविन्दमुत्तंसयन्त्यमितभक्तिभरावनम्राः' इत्यादावुत्तरपदार्थप्रधानमयूरव्यंसकादिसमासेन रूपकमेव, उत्तंसनस्यारविन्द एव संभवादिति व्यवस्था सर्वैरङ्गीकृता नसंभवति, तथासत्यरविन्दादिपदार्थस्यारुण्यादिगुणविशिष्टस्य प्राधान्यायोगेन मयूरव्यंसकादिसमासेऽपि व्याघ्रादिसमास इव पूर्वपदार्थचरणस्यैव प्राधान्यापत्त्योत्तंसनानुगुण्यविरहतौल्यापत्तेः । गुणजातिविशिष्टयोर्जातिविशिष्टप्राधान्यस्य नीलोत्पलादौ व्यवस्थितेः । उत्तरपदार्थप्राधान्येऽपि चरणवृत्त्यारुण्यादिगुणस्योत्तंसनानुगुणत्वाभावाच्चोत्तंसनपदस्यापि सोत्कण्ठश्रवणे साध्यवसानलक्षणास्वीकारात्सुतरां तथेति चेत् । मैवम् । इन्द्वादिपदस्येन्द्वादिवृत्तिधर्मवत्त्वेन तत्तद्धर्मवति लक्षणया पौनरुक्त्यायोगात् । धर्मत्वेनोक्तधर्मस्यैव लाभः । अन्यथा चन्द्रवन्मुखमाह्लादकमित्यादावपि पौनरुक्त्यापत्तेः ।

किंचेत्यादिकमपि मन्दम् । योगरूढिभ्यामिव लक्षणाव्यञ्जनाभ्यां चरणारविन्दमित्यादितश्चरणाभिन्नारविन्दवृत्तिधर्मवदरविन्दमित्याकारकबोध एव वाक्यपर्यवसानात् । [ 'कस्त्वं भोः कथयामि' इत्यादौ 'मथ्नामि कौरवशतम्' इत्यादौ च व्यङ्ग्यार्थमादायैव शाब्दबोधविश्रामात् । ]

व्यञ्जनानङ्गीकर्तृन्यायादिमते तु जातिविशिष्टप्राधान्यानियमात्पादाभिन्नमम्बुजसदृशं चरणाभिन्नमरविन्दवृत्तिधर्मव[त्पादाभिन्नमम्बुजवृत्तिधर्मव]दित्युभयत्र बोधः । उत्तंसनपदस्य सोत्कण्ठश्रवणे लक्षणया लक्ष्यार्थस्य शाब्दमुख्यार्थाभेदाध्यवसायविरहस्य च स्वीकारान्न दोषः । अभेदाध्यवसायस्तु मानस एवेति तत्तदलंकारव्यपदेशः ।

उच्छृङ्खलास्तु मुखचन्द्र इत्यादौ चन्द्रादिपदे न लक्षणा । रसविशेषवासनाजन्यबोधे बाधधियो विरोधित्वाभावात् शाब्दधीस्तुल्याधिकरणत्वं चाभेदबोधकत्वाद्वाक्याप्रामाण्यं चेष्टमित्याहुः ।

अब्राह्मणोऽसुरोऽघट इत्यत्र नञः क्रमेण सदृशो विरोधी भिन्नश्च सर्वत्र ब्राह्मणादिपदस्य ब्राह्मणादिप्रतियोगिकोऽर्थः । ब्राह्मणादिप्रतियोगिकाभिन्नसादृश्यादेराश्रयो वाक्यार्थः । ब्राह्मणसदृशः, सुरविरोधी,

---

१ अरविन्दत्वादिजातेरिवारुण्यादीति पाठः । २ लक्ष्यार्थे इति पाठः ।

घटान्य इत्यादौ पदार्थैकदेशेऽप्यभेदान्वयस्य व्युत्पन्नत्वात् । अस्तु वा ब्राह्मणपदस्य सादृश्यादिसंबन्धेन ब्राह्मणसंबन्ध्यर्थः । ब्राह्मणसंबन्ध्यभिन्नसदृशादिर्वाक्यार्थः । एतेनैकदेशेऽभेदबोधकत्वेन तुल्याधिकरणत्वे चित्रगुरित्यादौ गोपदलक्ष्यगोस्वामिनः एकदेशे गवि चित्राभेदान्वय इति मते तत्रापि तुल्याधिकरणत्वं स्यादित्यपास्तम् ।

शाब्दिकास्तु अब्राह्मण इत्यादेरारोपितो ब्राह्मण इत्यादिरर्थो ब्राह्मणभिन्नादिस्तु फलितार्थः । सर्वनामकार्यायोत्तरपदार्थप्राधान्यादन्यथातिसर्वे इत्यादाविवातस्मिन्नित्यादौ सर्वनामकार्यं न स्यादित्याहुः । [ब्राह्मणभिन्नादेः शाब्दबोधविषयत्वे पूर्वपदार्थप्राधान्यवदतस्मिन्नस इत्यादावपि पूर्वपदार्थस्यैव प्राधान्यापत्त्या सर्वनामकार्यं न स्यादित्यर्थः । नचैवमतिसर्वे इत्यादावपि उत्तरपदार्थप्राधान्ये सर्वनामकार्यं स्यादितिवाच्यम् । तत्रानन्यगत्या पूर्वपदार्थप्राधान्यादिति ।]

एतन्मते ब्राह्मणपदस्य ब्राह्मणारोपविषये लक्षणा । नञ्पदं तात्पर्यग्राहकमिति तु युक्तम् । न च व्याघ्रादिसमासे पुरुषव्याघ्र इत्यादौ, अब्राह्मण इत्यादौ शस्त्रीव श्यामा शस्त्रीश्यामा, घनश्याम इत्यादौ च समासप्रयुक्तलक्षणासत्त्वात्कर्मधारयलक्षणाव्याप्तिः । समासप्रयुक्तलक्षणाव्याप्यसमासविभाजकोपाधिशून्यत्वस्य वाच्यत्वात् । कण्ठेकाल इत्यादौ निर्मक्षिकमित्यादौ च लक्षणाविरहेऽपि न क्षतिः । बहुव्रीह्यव्ययीभावयोस्तुल्याधिकरणत्वाभावादेवानतिप्रसङ्गात् । यदि चातिसर्वे इत्यादौ तत्पुरुषेऽपि न लक्षणा तदा *कर्मधारयव्यवहारविषयत्वमेव* लक्षणं बोध्यम् ।

परे तु *विग्रहे समासे च ययोः पदयोस्तुल्याधिकरणत्वं तदुभयपदघटितसमासत्वं कर्मधारयत्वम्* । राज्ञः पुरुष इत्यादिविग्रहे तुल्याधिकरणपदद्वयविरहान्नातिव्याप्तिः । *विग्रहसमासयोरन्यतरत्र ययोस्तुल्याधिकरणत्वं तदुभयभिन्नपदद्वयघटितसमासत्वं वा तत्त्वम्* । एतेन कृष्णसर्प इत्यादौ विग्रहासत्त्वेऽपि न क्षतिः । नच शस्त्रीश्यामेत्यादावव्याप्तिः । स्वपदविग्रहस्यैवात्र विग्रहत्वेन निवेशादिति । शस्त्री चासौ श्यामा चेत्येवात्र विग्रहवाक्यमित्यन्य इत्याहुः ॥ १ ॥

---

## द्विगुः ।

**संज्ञाविषयान्यत्वे सति संख्यावाचकपूर्वपदकतुल्याधिकरणसमासो द्विगुः ।**

सत्यन्तोपादानात्पञ्चाम्राः, पञ्चकन्या इत्यादिकर्मधारयव्युदासः । पञ्चानामाम्राणां समाहार इत्यर्थे तु पञ्चाम्रीति द्विगुरेव । तथाच पञ्चकन्यमित्यपि । नीलोत्पलमित्यादेश्च व्युदासाय सङ्ख्येत्यादि । पञ्चभर्तेत्यादिव्युदासाय तुल्याधिकरणेति । विग्रहे तुल्याधिकरणत्वाभावात्तद्व्युदासः ।

अयं च कर्मधारयबाधकोऽपत्येऽणादिभिन्नस्वरादितद्धितार्थेऽभिधेये, तद्धितसामान्यस्यैव चार्थे विषये, परत उत्तरपदे, समाहारे चाभिधेये विधीयते ।

तद्धितार्थेऽभिधेये यथा—पञ्चसु कपालेषु संस्कृतः पञ्चकपाल इति, अत्र समासस्य संस्कृतोऽर्थः । कपालपदस्यैव वा कपालसंस्कृतोऽर्थः । तत्र व्युत्पत्तिवैचित्र्यादभेदेनैकदेशे कपाले पञ्चाभेदान्वयात्पञ्चाभिन्नकपालसंस्कृत इति शाब्दधीः । तद्धितार्थस्य समासादिनाऽभिधानादुक्तार्थत्वान्न तद्धितप्रत्ययः ।

तद्धितार्थे विषये यथा—पञ्चसु ब्राह्मणेषु साधुः पञ्चब्राह्मण्यः, पञ्चानां गर्गाणां भूतपूर्वो गौः पञ्चगर्गरूप्यः, पञ्चानां नापितानामपत्यं पाञ्चनापितिः, द्वाभ्यां नौभ्या क्रीतो द्विनौरित्यादि । अत्र समासेन तद्धितार्थानभिधानात्तद्धितप्रत्ययः 'तत्र साधुः' इति यः । अपत्येऽर्थे इञ् । पञ्चब्राह्मणनिरूपितसाधुत्ववान्, पञ्चगर्गातीतस्वत्ववान्, पञ्चनापितापत्यम्, द्विनौक्रीत इत्यन्वयधीः । [ द्विनौरित्यत्र ठञो लोपविधानाल्लुप्ततद्धितस्मरणादेव क्रीतार्थबोधः । ]

परत उत्तरपदे यथा—पञ्चगवधनमित्यादयः । अत्र पञ्च गावो धनं यस्येतिविग्रहेऽन्तर्वर्तिद्विगुमाश्रित्य राजादित्वादन्प्रत्ययः । समुदायस्तु बहुव्रीहिः । पञ्चगवाभिन्नधनसंबन्धीत्यन्वयधीः ।

समाहारे यथा—पञ्चाना गवां समाहारः पञ्चगवं, चतुर्णां पथा समाहारश्चतुष्पथम्, पञ्चानां फलाना समाहारः पञ्चफली । अत्र पात्रादिभिन्नादन्तद्विगुत्वादीप्रत्ययः । तदुक्तम्—

अपात्रादिरदन्तो यः स्त्र्यादन्तो वा द्विगुः स्त्रियाम् ।
अन्नन्तश्च समाहारो नदादिषु निगद्यते ॥ १ ॥ इति ।

पात्रादेस्तु नपुंसकत्वमेव । द्विपात्रं, त्रिपात्रं, त्रिभुवनं, चतुर्युगमित्यादि । स्त्र्यादन्तस्यान्नन्तस्य द्विगोर्वैकल्पिकं नदादित्वम् । यथा—पञ्चखट्वी पञ्चखट्वं, पञ्चतक्षी पञ्चतक्षमित्यादि । अत्र समाहारः समासस्य शक्त्या, फलादिपदस्यैव वा फलादिसमाहारो लक्षणयार्थः । एकदेशेऽपि फलादौ पञ्चादेरभेदान्वयो व्युत्पत्तिवैचित्र्यात् । समाहारश्च बुद्धिविशेषविषयत्वम् । तथाच पञ्चाभिन्नफलादिसमाहारः, समाहारविशिष्टाः पञ्चाभिन्नफलादय इति वाऽन्वयधीरित्यग्रे विवेचयिष्यते ।

---

## तत्पुरुषः ।

**समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामपदकसमासत्वं तत्पुरुषत्वम् ।**

पञ्चफलीत्यादिवारणाय सत्यन्तम् । नीलोत्पलादिवारणाय लुप्तेत्यादि न चानयोस्तत्पुरुषत्वमिष्टं मुख्यतत्पुरुषत्वस्याभावात् । तत्पुरुषसंज्ञाविधानं तु अब्राह्मण इत्यादौ नकारलोपाद्यर्थं गौणम् । अब्राह्मणमित्याद्यव्ययीभाववारणाय पूर्वेति।[1] न च न विवादोऽविवाद इत्यत्राव्याप्तिः । विरोध्यर्थकनञाऽसुर इत्यादाविवाविवादोऽनुपपत्तिरित्यादौ कर्मधारयस्वीकारेण मुख्यतत्पुरुषानङ्गीकारात् । न च नञोऽव्ययत्वेन तेनाव्ययीभाव एव युक्तः । यथा निरो गताद्यर्थे इत्यनुशासनान्निरो निर्गमनबोधकत्व एव निःकौशाम्बिरित्यादौ तत्पुरुषः, अत्यन्ताभावतद्वतोर्बोधकत्वे तु निष्कौशाम्बि निर्मक्षिकं निर्विघ्नमित्यादावव्ययीभावः, तथा नञोऽत्यन्ताभावतद्वतोर्बोधकत्वे एवाव्ययीभावः विवादस्याभावोऽविवादमित्यत्र अघटं भूतलमिति[2] नञ्दीधित्युक्तेश्च । अत्यन्ताभावतद्वदन्यबोधकत्वे तु कर्मधारयोऽब्राह्मणोऽसुरोऽविवाद इत्यादावित्यदोषात् ।

अत्यन्ताभावाद्यर्थकनञापि विकल्पेन कर्मधारय इत्यन्ये । वस्तुतस्तु *तत्पुरुषपरिभाषाविषयत्वं तत्पुरुषत्वं* बोध्यम् ।

---

१ अब्राह्मण इत्यादिवारणाय पूर्वेति; सुरसं दधि पश्येतिवारणाय पूर्वेतीति च पाठः । २ मित्यत्र नञ्दीधित्युक्ते च; दीधित्युक्तं च इति पाठौ ।

एतेनार्धपिप्पल्यादावुत्तरपदे समासप्रयुक्तलक्षणासत्त्वात्, अवादयः क्रुष्टाद्यर्थे तृतीयया, पर्यादयो ग्लानाद्यर्थे चतुर्थ्या, प्रादयो गताद्यर्थे प्रथमया इत्याद्यनुशासनाद्, अवक्रुष्टं कोकिलया अवकोकिलं वनं, परिग्लानोऽध्ययनाय पर्यध्ययनः, प्रगत आचार्यः प्राचार्य इत्यादौ च लुप्तद्वितीयादिविभक्तिकपूर्वपदकत्वाभावादव्याप्तिरित्यपास्तम्। एषु तत्पुरुषत्वं गौणमित्यन्ये।

राजपुरुष इत्यादौ, ग्रामगत इत्यादौ च राजादिपदे राजसंबन्धिनि ग्रामादिपदे च ग्रामादिकर्मकादौ लक्षणा। राजसंबन्ध्यभिन्नः पुरुषः, ग्रामकर्मकाभिन्नगमनाश्रय इति चान्वयधीः। शोभनराजपुरुष इत्यादौ च राजपदे शोभनराजसंबन्धिनि लक्षणा। शोभनपदं तात्पर्यग्राहकं नातो राजपदस्य राजसंबन्धिनि लक्षणायामेकदेशे राज्ञि शोभनान्वयानुपपत्तिः। अत्रैकदेशेऽप्यभेदान्वयश्चित्रगुरित्यादाविव व्युत्पत्तिवैचित्र्यादित्यन्ये।

एतेन राजा पुरुषो ग्रामो गमनमित्यादावन्वयाबोधात्, नामार्थयोर्नामार्थधात्वर्थयोश्च भेदेनान्वयस्याव्युत्पन्नतया राजादेः स्वत्वादिसंबन्धेन, पुरुषादौ ग्रामादेश्च कर्मत्वादिसंबन्धेन गमनादावन्वयासंभवाद्राजपुरुष इत्यादिसमुदायस्य राजसंबन्धवत्पुरुषादौ शक्तिः। इत्थं च राज्ञः पुरुष इत्यादिविग्रहसमानार्थतापीत्यपास्तम्।

किंचैवं निषादस्थपतिं याजयेदित्यत्र निषादानां स्थपतिरिति न षष्ठीसमासो लक्षणासत्त्वात्किंतु कर्मधारयस्तत्र लक्षणाविरहादिति सिद्धान्तो व्याहन्येत। तव मते षष्ठीसमासेऽपि लक्षणाविरहात्।

अथ शक्तितज्ज्ञानहेतुतयोरिव लक्षणातज्ज्ञानहेतुतयोरपि क्लृप्तत्वात्षष्ठीसमास एव युक्तः। तथा सति निषादानां स्थपतेर्लब्धविद्यत्रैवर्णिकस्य याजनसंभवे निषादस्य नापूर्वविद्याप्रयुक्तिकल्पनं न वा स्त्रीशूद्रौ नाधीयातामिति निषेधसंकोचः। लाघवाभावेऽपि वेदस्य मुख्यत्वसंभवे न गौणत्वमितिवत्[1], वेदे कर्मधारयसंभवे नान्यसमास इति षष्ठीसमासे शक्तावपि न सिद्धान्तव्याघात इति चेन्न। वैदिकशाब्दबोधस्य शक्तिज्ञानमूलकत्वे लाघवस्य सिद्धान्तबीजत्वात्। शक्यसंबन्धज्ञानस्य विना शक्तिज्ञानमसंभवात्तन्मूलकत्वे गौरवात्। केषांचिच्छक्यसंबन्धज्ञानादपि

१ मितिचेत्; मितिचेन्नेति पाठः।

शाब्दबोध इति चेदस्तु तथापि न्यायनिर्णीततात्पर्यकानां लक्षणाज्ञानाकल्पनलाघवस्य निष्प्रत्यूहत्वात् ।

इत्थं च लाघवात्कर्मधारयप्रवृत्तावपूर्वविद्याप्रयुक्तिकल्पनादिगौरवं फलमुखत्वान्न दोषाय । 'स्त्री शूद्रौ नाधीयाताम्' इत्यत्राधिपूर्वेङ्धातोर्निषादीयतत्तदध्ययनेतराध्ययनपरत्वं न तु शूद्रपदस्य निषादेतरशूद्रपरत्वम् । निषादस्य वेदान्तराध्ययनप्रसङ्गादिति बोध्यम् ।

पुरुषोत्तम इत्यत्रापि षष्ठीसमासः । अत्र निर्धारणाभावान्न 'न निर्धारणे' इत्यनेन षष्ठीसमासनिषेधः । नच पुरुषसमुदायादेकदेशस्येश्वरस्योत्तमत्वेन पृथक्करणान्निर्धारणमस्त्येवेति वाच्यम् । समासवाक्यादन्यतो निर्धारणप्रयोजकरूपोपस्थितावेव समासनिषेधात् । नराणां क्षत्रियः शूरतमः इत्यर्थे नरक्षत्रियः शूरतम इत्यप्रयोगात् । नरशूर इति प्रयोगस्त्विष्ट एव । नच नाथः सृजतीत्यादौ तस्मै (नम) इत्यनेन तत्प्रयोजकरूपोपस्थितिः, विधेयस्यैव तत्प्रयोजकत्वात् । तत्पदार्थस्य तु विशेष्यत्वेनादोषात् ।

एतेन पुरुषोत्तमपदस्य श्रीकृष्णत्वविशिष्टे रूढतया तत्प्रयोजकरूपोपस्थितिरित्यपास्तम् । कृष्णत्वविशिष्टस्य योगार्थविशेष्यत्वात् । पुरुषाणामुत्तमः कृष्ण इत्यत्र तु कृष्णस्य विधेयत्वे निर्धारणोपगमात् । पुरुषेभ्य उत्तम इत्यतः स्वेतरपुरुषावृत्त्युत्तमत्वाश्रय इत्येवं योगादनतिप्रसङ्गे रूढिविरहाच्च । एतेन योगार्थस्यैव विशेष्यत्वेऽपि न क्षतिः ।

अथ विधेयस्यैव निर्धारणप्रयोजकत्वे किं बीजमितिचेदाकर्णय । गवां कृष्णा संपन्नक्षीरेत्यादौ निर्धारणषष्ठ्यास्तादात्म्यं कृष्णापद—संपन्नक्षीरापदयोस्तत्तद्भिन्नं चार्थः । तथाच गोतादात्म्यवती कृष्णा संपन्नक्षीरा । गोतादात्म्यवती कृष्णान्या संपन्नक्षीरान्येति वाक्यार्थः । संपन्नक्षीरातदन्ययोश्च विधेयत्व एवोद्देश्यतावच्छेदकावच्छेदेनान्वयात् । पशूनां कृष्णा संपन्नक्षीरा, गवामियं संपन्नक्षीरेति न प्रयोग इति । [ संपन्नक्षीरासंपन्नक्षीरकृष्णगोद्वयघटितगोसमूहबोधकगोपदघटितस्य एतासां गवां कृष्णा संपन्नक्षीरेति वाक्यस्य योग्यत्ववारणायावच्छेदकावच्छेदेन भावान्वयस्वीकारो बोध्यः । ]

---

१ नाथः सृजत्यवति यो जगदेकपुत्रप्रीत्या ततः परमनिर्वृतिमादधाति । तस्मै नमः सहजदीर्घकृपानुबन्धलब्धत्रितत्वतनवे पुरुषोत्तमाय ॥ इति लीलावतीकृतः ।

एतेन षष्ठ्यास्तादात्म्यमेवार्थः । तथाच गोतादात्म्यवत्कृष्णत्वावच्छेदेन संपन्नक्षीराया गोतादात्म्यवत्संपन्नक्षीरात्वावच्छेदेन च कृष्णाया अन्वयाद्गवां सास्नावती संपन्नक्षीरा पशूनां कृष्णा संपन्नक्षीरेत्याद्यप्रयोग इत्यपास्तम् । विधेयतावच्छेदकावच्छेदेनोद्देश्यान्वयस्यादृष्टचरत्वात् ।

नचास्तु संपन्नक्षीरादेरेवोद्देश्यत्वम् । पूर्वोपात्तत्वाभावात् । क्षत्रियाणां कर्णः प्रचुरं ददातीत्यत्रासंभवाच्च । धर्मिण्याख्यातस्य लक्षणायामप्युद्देश्यत्वेन बोधायोगात् । ददाति सुन्दरः इत्यतो दाता सुन्दर इत्यबोधात् । नच पचति गच्छतीत्यतः पक्ता गच्छतीति बोधस्य वैयाकरणैः स्वीकारान्नैवं, प्रथमांतपदोपस्थाप्य एवान्वयस्य नैयायिकैः स्वीकारात् । तथैव कान्यादौ प्रयोगदर्शनात् । जलेषु स्नेहवत् शीतस्पर्शवदिति प्रयोगापत्तेश्च । नच जलतादात्म्यवत्स्नेहवत्त्वेन न व्याप्यता तर्हि क्षत्रियाणां कर्ण इत्यस्याप्यनापत्तेः । तस्मात्कर्णपदस्य कर्णतदन्यौ ददातीत्यस्य दानकृतितदभावावर्थ इति पूर्ववदेवान्वयबोधः ।

परे तु गोसमुदायादेकदेशस्य कृष्णायाः पृथक्करणं कृष्णेतरगोभेदानुमापकत्वं तत्स्वरूपयोग्यतानिर्धारणम् । तच्चेत्कृष्णेतरगोभेदव्याप्यत्वं कृष्णेतरगवावृत्तित्वपर्यवसितं षष्ठ्यर्थः, संपन्नक्षीरात्वे एकदेशे व्युत्पत्तिवैचित्र्यादन्वेति । कृष्णेतरगोभेदव्याप्यत्वकृष्णेतरगोभिन्नत्वमेव वा पृथक्करणं संपन्नक्षीरायामवच्छेदकावच्छेदेनान्वेति । तेन पदार्थेषु द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावत् पदार्थेषु जातिमत्सत्तावदित्यादिकं सूपपादम् । षष्ठ्यास्तादात्म्यार्थकतयावच्छेदकावच्छेदेन भावान्वयस्यापि स्वीकारात् । घटेषु कृष्णा संपन्नक्षीरा गोषु कृष्णाशुक्लान्यतरा संपन्नक्षीरेत्यादेर्व्युदासः । एतल्लाभायैव तत्तद्भिन्नवृत्तिधर्मवत्परं समुदायपदमित्याहुः ।

[ षष्ठ्यास्तादात्म्यार्थकतया समुदायतादात्म्यवन्निर्धार्यतावच्छेदकावच्छेदेन निर्धारणप्रयोजकरूपान्वयलाभाय, निर्धार्येतरसमुदायावृत्तिरूपनिर्धार्येतरसमुदायभेदानुमितिस्वरूपयोग्यत्वरूपपृथक्करणरूपनिर्धारणस्य लिङ्गविधया इतरभेदानुमितिरूपनिर्धारणप्रयोजके पदार्थैकदेशेऽन्वयलाभाय च निर्धार्यतदितरवृत्तिधर्मवत्परसमुदायपदोपादानम् । प्रागुक्तान्वयलाभयोः किं प्रयोजनमिति चेत्—पार्थिवानां स्नेहवत् शीतस्पर्शवज्जलानां स्नेहवच्छीतस्पर्शवदित्यनयोरयोग्यत्वसंपादनमेव । समुदायतादात्म्यवन्निर्धार्यतावच्छेदकावच्छेदेन निर्धारणप्रयोजकरूपभावान्वयस्वीकारस्य तु गवां कृष्णाशुक्लान्यतरा संपन्नक्षीरेत्यस्यायोग्यत्वसंपादनमित्याहुः । ]

यत्तु यस्मान्निर्धार्यते, यश्च निर्धारणहेतुः, यश्चैकदेशो निर्धार्यते एतत्रितयसंनिधावेव निर्धारणे षष्ठी तत्रैव समासनिषेध इति तन्न । तथा सति नरशूरः क्षत्रिय इत्यस्याप्यनुपपत्तेः । (पुरुषपदस्य कृष्णत्वविशिष्टे रूढिसत्त्वे पुरुषोत्तम इत्यस्याप्यनापत्तेश्च ।) पुरुषोत्तम इत्यस्य योगेन स्वेतरपुरुषावृत्त्युत्तमत्वविशिष्टार्थकतयानतिप्रसङ्गात्केवलयौगिकत्वमेवेत्यन्ये । नच पुरुषश्चासावुत्तमश्चेति कर्मधारयोऽस्तु तर्ह्युत्तमपुरुषप्रयोगापत्तेः । जातिवाचकयोगे गुणक्रियावाचकस्य पूर्वोपात्तत्वनियमात्[1] । नीलोत्पलमित्यादौ तथा व्यवस्थितेः । अन्यत्र त्वनियमः । यथा खञ्जकुब्जः कुब्जखञ्ज इत्यादौ ।

यत्तु पुरुषेषूत्तम इति सप्तमीसमास एवात्रेति तन्न । तथा सति सप्तमीसमासेन नरक्षत्रियः शूरतम इत्यादिप्रयोगापत्तेः । न चेष्टापत्तिः । न निर्धारण इति निषेधवैयर्थ्यापत्तेः । निर्धारणे तादृशप्रयोगस्यासाधुत्वज्ञापकतयैव तत्सार्थकत्वात् ।

परे तु सप्तमीसमास एवायं स्वरभेदनियामकषष्ठीसमासनिषेधकत्वेन निषेधसाफल्यमित्याहुः । पञ्चमीसमासोऽत्रेत्यन्ये ॥

---

अथ बहुव्रीहिः ।

**नियमतः समासप्रयुक्तलाक्षणिकोत्तरपदकसमासो बहुव्रीहिः ।**

अत्र संख्यावाचकपूर्वपदकान्यत्वे सतीति विशेषणं देयम् । तेन पञ्चफलीत्यादिद्विगौ नातिव्याप्तिः । राजपुरुष इत्यादिवारणायोत्तरेति । नच कण्ठेकाल इत्यत्राव्याप्तिः, कालपदे लक्षणायाः समासाप्रयुक्तत्वादिति वाच्यम् । कालरूपप्रकारेण लक्षणाया अतत्वेऽपि कालसंबन्धित्वेन लक्षणायास्तत्वात् । [ इदमुपलक्षणम् । कण्ठावच्छेदेन कालरूपविशिष्टे प्रकृते कालपदस्य लाक्षणिकतया तादृशलक्षणायाः समासप्रयुक्तत्वमव्याहतमेवेति बोध्यम् ।] वस्तुतो न देयमेव समासप्रयुक्तेति व्यर्थत्वात् ।

नन्वेवमपि स्थिरमन्युरित्यादिवत्स्थिरमत्सर इत्यादिप्रयोगात्तत्राव्याप्तिः । नचात्र कर्मधारयः । स्वरभेदार्थमपि बहुव्रीहेः स्वीकारात् । नच मत्सरपदस्य शुक्लादिपदवद्गुणिनि लक्षणा । 'गुणिलिङ्गास्तु तद्वति'

---

१ 'जातिविशिष्टवाचकस्य गुणक्रियाविशिष्टवाचकयोगे जातिविशिष्टप्राधान्यनियमात्' इति पाठः ।

इत्यत्र तद्वति शुक्लादिमतीत्यर्थात् । गुणिनि शुक्लादिपदसंकेतग्रहस्य गुणसंकेतग्रहप्रयोज्यतया वटादिपदस्य ग्रामादाविव शुक्लादिपदस्य गुणिनि शक्त्यभावो मत्सरपदस्य तु मिथोनिरपेक्षग्रहशक्तिग्रहकयोर्द्वेषतद्वतोर्द्वयोरपि शक्तत्वात् ' मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ' इति नामार्थमध्यपाठाच्च । तेन मत्सरपदस्यापि मत्सरशब्दार्थपरामर्शकतत्पदघटिततद्वत्पदेन शक्तिग्रहेऽपि न क्षतिः । मिश्रा अप्येवमिति चेन्न । श्रुतिसिद्धसुखविशेषशक्तिकस्वःपदस्य निरूढलक्षणया नाकादिपर्यायत्ववन्मत्सरपदस्यापि निरूढलक्षणया नानार्थमध्यपठितत्वसंभवात् । कालादिपदवन्मत्सरपदस्य मत्सरसंबन्धित्वेन लक्षणा निष्प्रत्यूहेत्यपि बोध्यम् ।

स चान्यपदार्थप्रधानः । विग्रहवाक्याद्यत्पदार्थे यत्प्रतियोगिकसंबन्धाश्रयत्वं भासते तत्पदार्थवृत्तिसंबन्धप्रतियोगिनि तत्र लक्षणास्वीकारात् । तथाहि—चित्रा गौर्यस्येतिविग्रहवाक्याच्चित्राभिन्ना गौश्चैत्रादिस्वत्वाश्रय इत्यन्वयबोधाच्चित्रगुरित्यादिसमासे गोपदे चित्रगोवृत्तिस्वत्वप्रतियोगिनि लक्षणा । चित्रपदं तात्पर्यग्राहकम् ।। गोपदे गोस्वामिनि लक्षणा । एकदेशे गवि चित्राभेदान्वयो व्युत्पत्तिवैचित्र्यादित्यन्ये । गोपदादिना शक्त्या गवादिः, लक्षणया स्वाम्यादिर्बोध्यते । एकपदार्थयोश्चात्र परस्परमन्वयो व्युत्पत्तिवैचित्र्यादित्यपरे । चित्रापदं चित्रास्वामिपरम् । गोपदं गोस्वामिपरम् । चित्रास्वामी गोस्वामीति बोधः । चित्रात्वेन गोत्वेन चैकस्यैव भानम् । व्यक्तिवचनानामिति न्यायादिति नातिप्रसङ्ग इति तु तादृशबोधस्यानानुभविकत्वात्, शोभनचित्रगुरित्यादित्रिपदबहुव्रीहावसंभवाच्च न युक्तम् । अत्र हि चित्रापदस्य चित्रास्वामिनि लक्षणायां शोभनान्वयानुपपत्तिः । शोभनपदस्यापि शोभनस्वामिनि लक्षणायामत्यन्तमनुभवविरोध इति बोध्यम् ।

आरूढो वानरो यमित्यत्र आरुहेरूर्ध्वदेशावच्छिन्नसंयोगानुकूला क्रिया, तस्याश्रयो, द्वितीयाया आधेयत्वमर्थः । तथाच वृक्षवृत्त्युपरिदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानर इत्यन्वयधीः । आरूढवानर इति समासे तु आरोहणकर्तृवानरसंबन्धी वृक्ष इत्यन्वयधीः । संबन्धः स्वकर्तृकारोहणकर्मत्वम् ।

चैत्रेण दत्तं धनं यस्मै इत्यत्र तु चैत्रकर्तृकयत्संप्रदानकदानकर्म धनमित्यन्वधीः । चैत्रदत्तधन इति समासे चैत्रपदस्य चैत्रकर्तृकपरत्वा-

चैत्रकर्तृकदानकर्मधनसंबन्धी मैत्र इति बोधः । संबन्धः स्वकर्मकदानसंप्रदानत्वम् । एवमन्यत्रापि । एष समानाधिकरणबहुव्रीहिः ।

व्यधिकरणबहुव्रीहिस्तु चक्रपाणिरित्यादौ । चक्रं पाणौ यस्येति विग्रहवाक्याद्यत्संबन्धिपाणिवृत्ति चक्रमित्यन्वयधीः । समासात्तु चक्रयुक्तपाणिसंबन्धीति धीः ।

तद्गुणातद्गुणसंविज्ञानभेदादपि बहुव्रीहेर्द्वैविध्यम् । तत्राद्यो भूवादयो धातवः, चैत्रादीन्भोजयेत्यादौ । भूवाऽऽदिः प्रथमपठितो येषां ते, चैत्र आदिः प्रधानो येषामिति विग्रहवाक्याद्भूवाभिन्नः प्रथमपठितो यत्संबन्धी, चैत्राभिन्नः प्रधानो यत्संबन्धीत्यादिधीः । समासात्तु भूवाभिन्नप्रथमपठितसंबन्धी, चैत्राभिन्नप्रधानसंबन्धीति धीः, संबन्धः स्वपाठप्राथम्यस्य स्वनिष्ठप्राधान्यस्य च अवधित्वम् । अत्र भूवाभिन्नप्रथमपठितसंबन्धित्वचैत्राभिन्नप्रधानसंबन्धित्वादिना आदिपदे लक्षणा, लक्ष्यतावच्छेदकस्यापि भूवादेर्विशेष्यान्वयिधात्वादिनाऽन्वयात्तद्गुणत्वम्, लक्षणाया अजहत्स्वार्थत्वं च बोध्यम् ।

परे तु लम्बकर्णमानयेत्यादौ कर्णादेरप्रधानत्वेन भानस्यानुभविकत्वादस्तूक्ता रीतिः । भूवादय इत्यादौ तु गणपठितत्वनिमन्त्रितत्वादिनैव लक्षणा प्राधान्येनैव शक्यलक्ष्ययोर्विधेयान्वयानुभवात् । काकेभ्यो दधि रक्ष्यतामित्यादाविव । तद्गुणत्वं तु लम्बकर्णभूवादिसाधारणं लाक्षणिकपदतत्समभिव्याहृतपदान्यतरशक्ययोर्लक्ष्यान्वयिनाऽन्वयमात्रादेवेत्याहुः[1] ।

अन्त्यः चित्रगुमानयेत्यादौ । अत्र चित्रगवस्वामित्वादिना गवादिपदे लक्षणायां गवादेरन्वयप्रवेशेऽपि न विशेष्यान्वयिनान्वयो लम्बकर्णमानयेत्यादावन्वय इत्यत्र शब्दस्वाभाव्यमेव तन्त्रमिति दिक् ।

कचित्प्रथमान्तविग्रहवाक्योऽपि बहुव्रीहिः । यथा सह पुत्रेणागतः सपुत्रकः, सह लोम्ना वर्तते सलोमकः । ' सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ' इत्यत्र न समासोऽनभिधानात् ।

एवं केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्य प्रवृत्तं युद्धं दण्डादण्डीत्यादिरिति दिक् ।

---

१ शक्यलक्ष्ययोः विशेष्यान्वय्यन्वयमात्रादेवेत्याहुरिति पाठः ।

यत्र विग्रहवाक्येऽन्यपदार्थः प्रधानः सोऽपि तथा। यथा दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं सा दक्षिणपूर्वा दिक्। दक्षिणादिक्संबन्धिनी पूर्वदिक्संबन्धिनीत्यन्वयधीः। द्वौ वा त्रयो वा द्वित्रा इत्यादिकमपि बहुव्रीहिभेदः। वस्तुतो द्वित्रास्तिष्ठन्तीत्यादितो द्वौ वा त्रयो वा तिष्ठन्तीति न संशयः। शब्दस्य तत्रासामर्थ्यात्। द्वौ त्रयस्तिष्ठन्तीति च न निश्चयः, द्वयोः सत्त्वे भ्रमत्वापातादिति द्वित्र्यन्यतरे सन्तीति बोधः। एवं च द्विस्त्रिर्वा (?) परिमाणमेषामिति विग्रहवाक्ये द्वित्वत्रित्वान्यतरविशिष्टे, द्वित्रा इति समासे च द्वित्वत्रित्वान्यतरसंख्याविशिष्टे लक्षणा। [अत्रोत्तरत्र च परिमाणशब्दः संख्याबोधको बोध्यः।] एवं च पञ्च षड्वा परिमाणमेषां पञ्चषा इत्यादावपीति। अन्यपदार्थप्राधान्यमिति दिक्॥४॥

---

अथ द्वन्द्वः।

**द्वन्द्वव्यवहारविषयत्वं द्वन्द्वत्वम्। परस्परानन्वितसमस्यमाननिखिलपदार्थबोधकसमासत्वं वा तत्त्वम्।**

धवखदिरावित्यादौ खदिरादिपदस्य धवखदिरादिसाहित्याश्रये लक्षणा। धवखदिरादिपदशक्तिभ्यां वा परस्परानन्वितधवखदिरादिबोधकत्वाल्लक्षणसंगतिः। तथाहि—खदिरादिपदे धवखदिरादिसाहित्याश्रये लक्षणा। धवत्वेन खदिरत्वेन चोपस्थितौ धवखदिरादिवृत्तिद्वित्वबोधो न स्यात्। किंतु धवद्वयखदिरद्वयबोधः स्यात्। विभक्तेः प्रकृत्यर्थतावच्छेदकव्याप्यसंख्याबोधकत्वव्युत्पत्तेः। अन्यथा घटावित्यादितो घटपटादिवृत्तिद्वित्वबोधापत्तेः। साहित्यं चैकक्रियान्वयित्वम्। धवखदिरादिद्वयमात्रविशेष्यकबुद्धिविशेष्यत्वं वा। तद्व्याप्तं च न धवादिमात्रगतद्वित्वमित्यदोषः।

न च तादृशसाहित्याश्रये द्वन्द्वस्य शक्तिरस्तु, अन्यलभ्ये शक्तेरयोगादिति मीमांसकाः। धवत्वखदिरत्वादिनैव बोधः। अन्वयानुपपत्त्यभावाल्लक्षणानुपपत्तेः। सुपा प्रकृत्यर्थतावच्छेदकत्वेन प्रकृत्यर्थतावच्छेदकस्य तिङा च स्वार्थान्वयित्वस्य वा व्याप्या संख्या बोध्यते इति धवखदिरा-

---

१ यत्र समासघटकान्यपदार्थः सोऽपि तथेति पाठः। २ समासे च द्वित्र्यन्यतरत्वेन लक्षणा इति पाठः।

दिवृत्तिद्वित्वमेव तथा । द्वयोरेव प्रकृत्यर्थत्वात् । अत एव चैत्रो मैत्रश्च गच्छतः इत्यादावपि विना साहित्यलक्षणां चैत्रमैत्रवृत्तिद्वित्वबोधः । [ वस्तुतः सुपा प्रकृतिजन्यशाब्दबोधविषयत्वव्याप्यैव संख्या बोध्यत इति नियमस्तेन (न) धवद्वयवृत्तिद्वित्वबोधापत्तिरिति ध्येयम् । ] न-चाव्यवहितपूर्वपदस्यैव प्रकृतित्वात्प्रकृत्यर्थान्वितस्वार्थबोधकत्वाच्च प्रत्य-यानां खदिरादिपदार्थ एव विभक्त्यर्थान्वयसंभवो न धवादिपदार्थे [ अन्यथा राजपुरुषमानयेत्यादितो राजानमानयेत्यादिबोधापत्तेः ] इति वाच्यम् । अव्ययीभावस्य पूर्वपदार्थप्राधान्यात्पूर्वपदस्यैव प्रकृतित्ववत् द्वन्द्वस्य पदार्थद्वयप्राधान्यात्पदद्वयस्यैव प्रकृतित्वात्फलबलात्तथैव कल्पना-दिति । [ विभक्तिमात्रेण स्वार्थान्वयित्वव्याप्यसंख्या बोध्यते । प्रथमाया अपि पुंस्त्वाद्यर्थकत्वादित्यपि केचित् । ]

स च द्वन्द्वो द्विविधः—इतरेतरयोगसमाहारभेदात् । यत्रावयवार्थ-प्राधान्यं तत्रेतरेतरयोगः । प्राधान्यं विभक्त्यर्थान्वयित्वम् । अत एव द्वि-वचनबहुवचने तत्र । यथा धवखदिरौ धवखदिरपलाशा इत्यादौ । यत्र संहतिः प्रधानं तत्र समाहारः । संहतिः साहित्यम् । साहित्यस्यै-कत्वादेकवचनमेव । तत्र नपुंसकलिङ्गता चानुशासनात् । यथा हस्त्यश्वं, पाणिपादमित्यादौ । हस्तिनोऽश्वस्य च साहित्यमित्याकारिका चान्वयधीः । इत्थं च हस्त्यश्वमानयेत्यादौ साहित्ये सामानाधिकरण्यसंबन्धेन कर्म-त्वान्वय इति प्राञ्चः ।

नव्यास्तु हस्त्यश्वमित्यादौ हस्त्यश्वपदे शक्तिभ्यामेव हस्त्यश्वबोधके न तु साहित्ये लक्षणा । एकवचनं त्वनुशासनबलात् । समाहारसंज्ञा च नदीसंज्ञावत्पारिभाषिकी । अत एव हस्त्यश्वं द्रव्यमित्यादौ विना द्रव्य-पदे लक्षणामन्वयबोधः । यदि च हस्त्यश्वं प्रमेयमित्यादौ समाहारबो-धोऽनुभवसिद्धस्तदा तत्र लक्षणेत्याहुः ।

यत्तु यत्र समुच्चयार्थकचकारेण प्राधान्येन क्रियासंबन्धो विवक्षितो धवांश्छिन्धि खदिरांश्चच्छिन्धि पलाशांश्चच्छिन्धीत्यादौ, प्राधान्यं च छि-दाक्रियाभेदः, यत्र चान्वाचयार्थकचकारेण प्रधानगुणभावेन स विवक्षितो धवं छिन्धि सामर्थ्ये खदिरं चेत्यादौ, यत्र च सपुत्रो गच्छतीत्यादौ पुत्र-स्यैकक्रियान्वयित्वे विशेषणत्वेनैव तदन्वयस्तत्र द्वन्द्वाभावः । स हि साहित्यलक्षणायामेव निर्वहति तुल्यवदेकक्रियान्वयित्वस्य साहित्यस्योक्ते-

ष्वभावात् । अत एव चार्थे द्वन्द्व इत्यत्र चार्थः समुच्चयान्वाचयेतरो गृह्यते । अन्वाचयः समाहार इतरेतरयोगः समुच्चय इत्यर्थचतुष्टयस्य चार्थत्वात् । समाहारः साहित्यम्, इतरेतरयोगः साहित्यविशिष्टः । अत एव यत्कर्तव्यं तदनया सहेत्यादावपि पत्न्याः सहत्वं नतु साहित्यम् । पत्न्याः कथंचिदनुमतिद्वारैवोपयोगेन व्यापारे साम्याभावादिति । तन्न ।

चैत्रमैत्रौ स्थितिगतिमन्तावित्यादियथासंख्यस्थले एकक्रियान्वयित्वाभावेऽपि द्वन्द्वात् । नच तुल्यवत्सजातीयविजातीयविधेयान्वयित्वं साहित्यं वाच्यम् । तादृशसाहित्यलक्षणाया मानाभावात् । उक्तेषु क्रियाभेदविवक्षया प्रधानगुणभावविवक्षया विशेषणत्वविवक्षया च द्वन्द्वाकरणसंभवात् ।

एतेन विभिन्नदेशकालावच्छेदेन धवखदिरादीनां छिदायां धवखदिरौ छिन्धीत्याद्यप्रयोगात्, एकदेशकालावच्छेदेनैकक्रियान्वयित्वरूपसाहित्यावच्छिन्ने खदिरादिपदे लक्षणावश्यकीत्यपास्तम् । तत्र कालभेदविवक्षया द्वन्द्वाकरणसंभवात् । विभिन्नदेशकालावच्छेदेन छिदायामपि धवखदिरौ छिन्नावित्यादौ द्वन्द्वाच्चेति दिक् ।

पर्याययोर्घटकलशावित्यादिद्वन्द्ववारणाय पदार्थतावच्छेदकभेदस्यैव द्वन्द्वनियामकत्वात् नीलघटयोरैक्यं, शिवरामयोरभेदः, इत्यादौ न द्वन्द्वानुपपत्तिः । नचैवं घटश्च घटश्चेत्यादौ द्वन्द्वासंभवे तदपवादकसरूपैकशेषानुपपत्तिः द्वन्द्वविषय एव तत्प्रवृत्तेरिति वाच्यम् । घटावित्यादौ सरूपैकशेषानङ्गीकारादेकेनापि घटपदेन नानाघटोपस्थापनसंभवात्सकृदुच्चरित इति नियमाभावात् । अन्यथा पचन्तीत्यादावप्येकशेषापत्तेः । [ गङ्गायां घोषमत्स्यावित्याद्यनुरोधेन युगपद्वृत्तिद्वयविरोधस्याप्यनङ्गीकारात् ] एकेनापि हरिपदेन सिंहत्वविष्णुत्वाभ्यां बोधसंभवाद्धरी इत्यादावपि नैकशेषः । हरिहरी इत्यादिद्वन्द्वाभावस्तु पदासारूप्यस्यापि द्वन्द्वनियामकत्वात् ।

---

१ तुल्यवदेकक्रियान्वयित्वाभावादेवेत्यर्थः । २ तेन स्वर्गकामो यजेतेत्यादौ न द्विवचनापत्तिर्नवा एकवचनविरोध इति भावः । ३ वाच्येति पाठः । ४ घटावित्यादाविति पाठः । ५ 'हरी इत्यादावेव तदङ्गीकारात् सकृदुच्चरित इत्यादिनियमाभावात् । एकेनापि हरिपदेन सिंहत्वविष्णुत्वाभ्यां बोधसंभवात् नात्राप्येकशेषः । अन्यथा पचन्तीत्यादौ सर्वथैकशेषापत्तेः' इति पाठः ।

नचैवमेकत्वे च एकत्वानि चैकत्वानि, गुणौ च क्रिये च गुणक्रियाः, गुणक्रियाश्च गुणक्रिये च गुणक्रिया इत्यादावेकशेषो गुणदीधितिकान्यप्रकाशाद्युक्तो विरुध्येत । इष्टत्वात् । हंसी च हंसश्च हंसावित्यादौ लिङ्गभेदे एकशेषस्त्वनुशासनबलादिति शाब्दिकाः ।

वस्तुतः 'सरूपाणामेकशेष एकविभक्तौ' इतिसूत्रमेकविभक्तौ वचनभेदे एकशेषविधायकतया सार्थकम् । नच सविभक्तिकस्य द्वन्द्वो निर्विभक्तिकस्य चैकशेष इति नेदं युक्तम् । द्वन्द्वविषयेऽप्रवृत्तौ द्वन्द्वापवादकत्वायोगात् । प्रातिपदिकोत्तरं विभक्तेरावश्यकत्वेन निर्विभक्तिकप्रातिपदिकद्वयासंभवाच्च अन्यथा द्वन्द्वादिसमासोऽपि निर्विभक्तिकस्यैव स्यात् । पन्थानावित्यादावदन्तत्वाभावादेकशेषे समासत्वाभावेऽपि विभक्तिलोपस्तद्धितान्त इवेति दीधितिविद्योतने विस्तरः ॥ ५ ॥

---

अथाव्ययीभावः ।

## नियमतः पूर्वपदार्थविशेष्यकबोधजनकसमासत्वमव्ययीभावत्वम् ।

अब्राह्मणोऽर्धपिप्पलीत्यादिवारणाय नियमत इति । उपकुम्भं, निर्मक्षिकमित्यादौ कुम्भादिपदस्य कुम्भादिसंबन्धिनि लक्षणया कुम्भादिसंबन्धि समीपं, मक्षिकादिप्रतियोगिकोऽभाव इत्यादिधीः । चन्द्र इव मुखं, भूतलं न घट इत्यादाविवाद्यर्थे चन्द्रादेर्भेदेनाप्यन्वयात्, अव्ययनिपातातिरिक्तप्रातिपदिकार्थ एव तादृशप्रातिपदिकार्थस्याभेदेनान्वयात्, कुम्भादिपदवाच्यस्यैव सामीप्यादौ भेदेनान्वय इति तु नव्याः ।

नचोन्मत्तगङ्गमित्यादावन्यपदार्थप्रधानेऽव्याप्तिः । अव्ययीभावानुशिष्टनपुंसकलिङ्गत्वार्थं संज्ञाविषये बहुव्रीहौ गौणाव्ययीभावत्वस्वीकारात् । संज्ञान्यविषये तु उन्मत्तगङ्गो देश इत्येव भवति । मध्येगङ्गमित्यादौ मध्यादिशब्दे एदन्तत्वं निपात्यते । गङ्गासंबन्धि मध्यमित्याद्यन्वयधीः ॥ ६ ॥

---

उपपदसमासः ।

कुम्भकारः क्षीरपायी खट्वाशायी इत्याद्युपपदसमासे कुम्भादिपदं लक्षणया कुम्भविषयक–क्षीरकर्मक–खट्वाधिकरणकादिपरम् । नामार्थधात्वर्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् ॥

---

## एकशेषः ।

विरूपैकशेषे पितरावित्यादौ लुप्तमातृपदस्मरणान्मातृत्वपितृत्वाभ्या जनकशरीरत्वेन पितृपदलक्षणया वा मातापित्रोरन्वयधीः । पितृपदं शक्त्या पितुर्लक्षणया मातुर्बोधकमित्यन्ये । एवं श्वशुरावित्यादावपि पतिपत्नीजनकशरीरत्वादिना प्रातिस्विकरूपेण बोधः ।

सरूपैकशेषे दम्पतीपूजाप्रकरणे ब्राह्मणावानयेत्यादौ ब्राह्मणीपदस्मरणाद्ब्राह्मणत्वब्राह्मणीत्वाभ्यां ब्राह्मणत्वेनैव वा स्त्रीपुंब्राह्मणयोर्बोधः । पुंस्त्वमयोग्यत्वात्स्त्रियां नान्वेति । विभक्तिरेव वा (शक्त्या) पुंस्त्वस्य लक्षणया स्त्रीत्वस्यापि बोधिका । ब्राह्मणपदमेव वा शक्त्या ब्राह्मणत्वेन लक्षणया ब्राह्मणीत्वेन बोधकम् । एवं हंसावित्यादावपि । शिवौ नमस्कुर्यादित्यादौ शिवपदं लक्षणया शिवदुर्गान्यतरत्वेन किंवा शक्त्या शिवत्वेन लक्षणया दुर्गात्वेनैव बोधकम् । एवमन्यदप्यूह्यमिति ॥

इति श्रीमहामहोपाध्यायजयरामन्यायपञ्चाननभट्टाचार्यविरचितः समासवादः समाप्तः ।

श्रीगणेशाय नमः ।

# एवकारवादः ९

एवकारस्त्रिविधः विशेष्यसंगतः, विशेषणसंगतः, क्रियासंगतश्चेति ।

अत्र विशेष्यसंगतस्य एवकारस्यान्ययोगव्यवच्छेदोऽर्थः । पार्थ एव धनुर्धर इत्यादौ विशेषणे धनुर्धरे पार्थान्ययोगव्यवच्छेदबोधात् धनुर्धरपदस्योत्कृष्टधनुर्धरे लाक्षणिकत्वात् । तथैव तात्पर्यात् । पार्थान्यस्य योगस्तादात्म्यम् । विशेषणसंगतस्यैवकारस्यायोगव्यवच्छेदोऽर्थः । शङ्खः पाण्डुर एवेत्यादौ विशेष्ये शङ्खे पाण्डुरत्वायोगव्यवच्छेदबोधात् । क्रियासंगतस्यैवकारस्य चात्यन्तायोगव्यवच्छेदोऽर्थः । संभवाभिप्रायके नीलं सरोजं भवत्येवेत्यादौ अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजे नीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदबोधादिति संप्रदायः ।

तन्नेति दीधितिकृतः । तथाहि नात्यन्तायोगव्यवच्छेदोऽर्थः । स ह्यात्यन्तिकस्यायोगस्य व्यवच्छेदः, आत्यन्तिको व्यवच्छेदो वा । नाद्यः आत्यन्तिकत्वस्यान्वयितावच्छेदकव्यापकत्वरूपतया सरोजत्वव्यापकस्य नीलभवनकर्तृत्वायोगस्याप्रसिद्धत्वेन तद्व्यवच्छेदासंभवात् । न द्वितीयः सरोजनिष्ठनीलभवनकर्तृत्वायोगव्यवच्छेदस्याप्यप्रसिद्धत्वात् । अथायोगे आत्यन्तिकत्वव्यवच्छेदः, सरोजनिष्ठनीलभवनकर्तृत्वायोगे सरोजत्वव्यापकत्वस्य द्रव्यत्वादौ प्रसिद्धस्य व्यवच्छेदबोधसंभवादिति चेन्न, सरोजविशेषणत्वेनोपस्थितस्य सरोजत्वस्यात्यन्तिकत्वेऽन्वयासंभवात् । न च सरोजपदं सरोजत्वे लाक्षणिकं, तथा च नान्यविशेषणत्वेनोपस्थितिरिति वाच्यम् । ईदृशबोधस्य नीलभवनकर्तृत्वायोगव्यवच्छेदः किंचित्सरोजनिष्ठ इत्यत्रैव पर्यवसानात् । तत्सरोजत्वसामानाधिकरण्येन नीलभवनकर्तृत्वायोगव्यवच्छेद एवास्तु कृतमत्यन्तायोगव्यवच्छेदस्वीकारेण ।

अयोगव्यवच्छेदोऽपि नार्थः, शङ्खः पाण्डुर एवेत्यादौ पाण्डुरत्वादेः पाण्डुरादिविशेषणत्वेनोपस्थितस्यायोगेऽन्वयासंभवेन तदयोगव्यवच्छेदबोधादेरसंभवात् । न च पाण्डुरादिपदं पाण्डुरत्वादौ लाक्षणिकमिति वाच्यं, तथा सति शङ्खः पाण्डुरत्वमेवेति प्रयोगापत्तिः, पाण्डुर एवेत्यादिवदत्रापि पाण्डुरत्वायोगव्यवच्छेदबोधसंभवात् ।

तस्मादन्ययोगव्यवच्छेदमात्रमेवकारार्थः । शङ्खः पाण्डुर एवेत्यादावपि शङ्खे तत्त्वावच्छेदेन पाण्डुरान्ययोगव्यवच्छेदसंभवात् । नीलं सरोजं भवत्येवेत्यादावपि तिङो धर्मिणि लक्षणया नीलभवनकर्त्रन्ययोगव्यवच्छेदस्य सरोजत्वसामानाधिकरण्येन बोधे बाधकाभावः । ज्ञानमर्थं गृह्णात्येवेत्यादावपि तिङो धर्मिणि लक्षणया ज्ञानत्वावच्छेदेनार्थग्राहकान्ययोगव्यवच्छेदबोधः ।

न च सरोजादौ नीलभवनकर्तृत्वाद्ययोगव्यवच्छेदबोधोऽस्तु धर्मिणि लक्षणा वृथेति वाच्यम् । एकपदे शक्तिद्वयकल्पनायां गौरवात् । न चैवार्थत्रैविध्यप्रसिद्धिविरोध इति वाच्यम् । तस्य निर्युक्तिकत्वेनानुपादेयत्वात् ।

न चान्ययोगव्यवच्छेदस्य क्वचिदन्वयितावच्छेदकावच्छेदेन क्वचित्सामानाधिकरण्येनान्वये किं नियामकमिति वाच्यम् । नियमपरवाक्यस्यावच्छेदकावच्छेदेन तदन्वये, संभवपरवाक्यस्य सामानाधिकरण्येन तदन्वये नियामकत्वात् ।

अत्रैवकारशक्योऽन्ययोगव्यवच्छेदो विलक्षणप्रतियोगितयाऽन्ययोगविशिष्टव्यवच्छेदरूपो बोध्यः । विलक्षणेत्युपादानात्पार्थान्ययोगगगनोभयत्वावच्छिन्नव्यवच्छेदस्य मनुष्ये सत्त्वेऽपि पार्थ एव मनुष्य इत्यादेर्न प्रसङ्गः ।

यद्यप्ययं सामान्यतोऽन्ययोगघटितः शक्यस्तथाऽपि तात्पर्यवशात्पार्थ एव धनुर्धर इत्यादौ तादात्म्यरूपयोगघटित उपस्थाप्यते । अन्यत्र समवेतत्वादियोगघटितः । तथा हि—पृथिव्यामेव गन्ध इत्यादौ पृथिव्यन्यसमवेतत्वाभाववान्पृथिवीसमवेतत्ववांश्च गन्ध इति बोधः । अन्यथा सप्तम्युपस्थापितसमवेतत्वमनन्वितं स्यात् । पृथिवीपदार्थस्य सप्तम्यर्थैवकारयोरप्यन्वयो व्युत्पत्तिवैचित्र्यात् । एवं चैत्रस्यैवेदं धनमित्यादौ चैत्रान्यस्वत्वाभाववत् चैत्रस्वत्ववच्चेदं धनमिति बोधः । मैत्रस्यैवायं भ्रातेत्यादौ मैत्रान्यभ्रातृत्वव्यवच्छेदबोधो लक्षणयैव, अन्यभ्रातृत्वादेरन्यसंबन्धत्वाभावेन तद्व्यवच्छेदस्यैवकाराशक्यत्वादित्याद्यूह्यम् । क्वचिदेकदेशान्वयस्वीकारात् अन्ययोगव्यवच्छेदैकदेशेऽन्यत्वे पार्थादेः पदार्थस्यान्वयो निष्कलङ्कः । अधिकमस्मत्कृतपदार्थमालाप्रकाशे, इत्यलमतिविस्तरेण ॥

इत्येवकारवादः संपूर्णः ।

## 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

### श्रीमद्भगवद्गीता

**Bhagavat-Geeta with 7 commentaires**

१ **प्रथमो गुच्छः**—आनन्दगिरिकृतटीकासंवलितशांकरभाष्य-जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्व) भाष्य-रामानुजभाष्य-पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी-नीलकण्ठी-समेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ... ... ... ... ६-०-०

### श्रीमद्भगवद्गीता

**Bhagavat-Geeta with 8 other commentaries**

२ **द्वितीयो गुच्छः । प्रथमषट्कम्**—निम्बार्कमतानुयायिश्री-केशवकाश्मीरिभट्टाचार्यपादप्रणीता—'**तत्त्वप्रकाशिका**' श्रीमधुसूदनसरस्वतीकृता—'**गूढार्थदीपिका**' श्रीशङ्करानन्द-प्रणीता—'**तात्पर्यबोधिनी**' श्रीधरस्वामिकृता—'**सुबोधिनी**' श्रीसदानन्दविरचितः—'**भावप्रकाशः**' श्रीधनपतिसूरिविर-चिता—'**भाष्योत्कर्षदीपिका**' दैवज्ञपण्डितश्रीसूर्यविरचिता—'**परमार्थप्रपा**' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः—'**अर्थ-संग्रहः**' इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीतायाः प्रथमादिषडध्यायात्मकं प्रथमं खण्डम् । अत्र श्लोकाः स्थूलत-माक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिषतेति । पत्रसंख्या सार्धपञ्चशतानि । मूल्यम् रू. ... ... ३-१२-०

**द्वितीयो गुच्छः । द्वितीयं षट्कम् ।** षष्ठादिद्वादशा-ध्यायान्तम् । तत्त्वप्रकाशिकाद्यष्टटीकोपेतम् । मूल्यम् रू. ... २-१२-०

**Uttara-Geeta with a commentary**

३ **उत्तरगीता**—गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पा-दश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महि-मानमवगमयितुम् । मू. रू. ... ... ... ०-३-०

## श्रीमद्वाल्मीकिरामायणम्

### Valmiki Ramayana with 3 well-known commentaries Bal Kanda

४ बालकाण्डम्–सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिना-नानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविका-प्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितु-मारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च षड्भिः खण्डैः समापयिष्यामः । तत्रेदं प्रथमं खण्डम् । मूल्यम् रू. ... ३–०– ०

### Ayodbya Kanda

अयोध्याकाण्डम् । द्वितीयखण्डम्—उर्ध्वनिर्दिष्टटीकात्र-योपेतम् । मूल्यम् रू. ... ... ... ... ५–०– ०

### Stotra-muktahar containing 256 Stotras

६ स्तोत्रमुक्ताहारः–अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वममुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविण-व्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशि-तानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नम-स्माकममुमिति । मूल्यम् रू. ... ... ... ०–८– ०

### Samskar Mayukha

६ संस्कारमयूखः–मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः।मू. रू. ०–१२–०

### Manu Smriti

७ मनुस्मृतिः—कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लि-खितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. ... ... ... ... १–८– ०

### Vidura-Niti with a commentary

८ विदुरनीतिः–संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थि-नामतीवोपयोगिनी । मू. रू. ... ... ... ०–४– ०

**Vedanta Rahasya**

९ **वेदान्तरहस्यम्**–वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रू. ... ... ... ०–१–०

**Vishishtadvaita-Mata-Vijaya-Vada**

१० **विशिष्टाद्वैतमतविजयवादः**–नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मूल्यम् रू. ... ... ... ०–१–०

**Kumar Sambhav with 3 known commentaries**

११ **कुमारसंभवं महाकाव्यम्**–कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं ततं आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मूल्यम् रू. ... ... ... ... ... १–४–०

**Raghuvamsha Mallinatha's commentary**

१२ **रघुवंशमहाकाव्यम्**–श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू. ... ... ... ०–१०–०

## कारिकावली

**Karikavalee with Siddhanta-Muktavali and other notes**

१३ **सिद्धान्तमुक्तावलीसहिता**–न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित–जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मूल्यम् रू. ... ... ... ... ०–७–०

**Vaisheshika Darshana with several commentaries**

१४ **वैशेषिकदर्शनम्**–श्रीशंकरमिश्रकृत—वैशेषिकसूत्रोप-

स्कार—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत-विवृति-- चन्द्रकान्तभट्टाचार्यप्रणीत-भाष्यसहितम् । मू. रू. ... २-०-०

**Vadartha Samgraha**

१५ वादार्थसंग्रहः (प्रथमो भागः)—अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडवोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः। पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ... ... ... ०-६-०

**Maha Bhagavata**

१६ महाभागवतम्—देवीपुराणम् । अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी-गङ्गा-पार्वती-श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थानं च प्रधानतयोपवर्णितानि । प्रसङ्गाद्रामचरितं स्कन्दचरितं पाण्डवचरितं गणेशोत्पत्तिर्गङ्गावतरणं भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिताः । सार्धपञ्चसाहस्रीसंहितेयम् मू. ... २-०-०

**Taittiriya-Upanishat**

१७ तैत्तिरीयोपनिषत्—श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता। ... १-०-०

१८ चन्द्रालोकः—वैद्यनाथपायगुण्डेकृतरमाख्यटीकासहितः । ... ०-८-०

१९ अन्त्येष्टिदीपिका—सामगानाम् ... ... ... ०-१२-०

२० गोभिलीयगृह्यकर्मप्रकाशिका—सामवेदीयषोडशसंस्कार-नित्याह्निकसमेता ... ... ... ... ३-८-०

'गुजराती' मुद्रणालयाधिपतिः ।

कोट सासून बिल्डिंग-मुंबई.

# VADARTHA SAMGRAHA

CONTAINING

SPHOTA-TATWA-NIRUPANA, SPHOTA-CHANDRIKA,
PRATIPADIKA-SAMDNYA-VADA, VAKYA-VADA,
AND VAKYA-DEEPIKA

FIRST PART

EDITED BY

MAHADEVA SHARMA GANGADHAR BHATTA
BAKRE

Printed and Published by Manilal Itcharam Desai at
THE GUJARATI PRINTING PRESS
SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY

Price Six Annas.

A. D. 1913
SAMVAT 1969

# वादार्थसंग्रहः ।

स्फोटतत्त्वनिरूपण–स्फोटचन्द्रिका–प्रातिपदिक-
संज्ञावाद–वाक्यवाद–वाक्यदीपिकेति-
ग्रन्थपञ्चकात्मकः

( प्रथमो भागः )

बाक्रे इत्युपाह्वगङ्गाधरभट्टसुतमहादेवशर्मणा
संस्कृतः

' गुजराती ' मुद्रणालयाधिपतिना स्वीये मुद्रणालये
मुद्रयित्वा प्रकाशितः ।

विक्रमसंवत् १९६९ खिस्ताब्दः १९१३

मूल्यं षडाणकाः ।

# विज्ञापनम् ।

---

श्रीसद्गुरुचरणारविन्दाभ्यां नमः ।

यः शास्त्रप्रसिद्धं यं कंचिदेकमर्थमुपादाय तद्विचारपरो ग्रन्थः प्रवर्तते स वादार्थपदाभिधेयः । प्रयोजनं चैतादृशग्रन्थप्रणयनस्य आकरेषु महानिबन्धेषु वा इतस्ततः प्रकीर्णस्य तदभिसंबन्धवतो विषयजातस्यैकत्र संकलनं, सूचितस्य व्यक्तीकरणम्, अप्रपञ्चितस्य स्वरूपवैशद्याय प्रपञ्चनं, विमतस्य च वैमत्यहेतून्निराकृत्य व्यवस्थापनं वा । तच्च कचित्समस्तं कचि द्यस्तं यथासंभवं वा द्रष्टव्यम् । तेनाकरेऽकृतपरिश्रमाणामेतदध्ययनमनल्पमुपकरिष्यतीत्यविवादम् । आकरपरिशीलिनामप्यस्यांशत उपकारो भविष्यत्येव प्रकीर्णस्यैकत्र लाभात् । अतो वादार्थमुद्रणे मया प्रोत्साहितो गुजरातीमुद्रणालयाधिपतिः कतिचित्पुस्तकानि समाहृत्य तच्छोधने मामेव न्ययुङ्क्त । ततोऽहं स्फोटतत्त्वनिरूपणं स्फोटचन्द्रिका प्रातिपदिकसंज्ञावादः वाक्यवादश्चेति वैयाकरणसिद्धान्तानुसारिणश्चतुरो वादार्थान् यथामति पर्यशोधयम् । तत्र स्फोटतत्त्वनिरूपणस्य कर्ता भट्टोजिदीक्षितानां गुरुः काशीनिवासी शेषोपनामा कृष्णपण्डितः । एतत्कृतं प्रक्रियाकौमुदीप्रकाशः कंसवधनाटकं चेति ग्रन्थद्वयमपि प्रसिद्धम् । स्फोटचन्द्रिकाकर्ता काशीस्थ एव मौनिकुलावतंसगोवर्धनपण्डितस्य तर्कभाषाटीकाया न्यायबोधिन्याश्च प्रणेतुर्नप्ता । अनेनापि शब्दार्थतर्कामृतं लघुविभक्त्यर्थनिर्णयश्चेति ग्रन्थद्वयं प्रणीतमिति ज्ञायते । तत्र लघुविभक्त्यर्थनिर्णयोऽस्माभिरुपलब्धः । शब्दार्थतर्कामृतं तु अस्मिन्नेव पुस्तके स्फोटचन्द्रिकायाः षष्ठे पत्रे नवम्यां पङ्क्तौ ग्रन्थकृता स्वकृतत्वेन निर्दिष्टम् । तच्च नोपलब्धम् । प्रातिपदिकसंज्ञावादस्य

कर्ता गोडबोलेउपनामको नारायणपण्डितः । एतत्प्रणीतं ग्रन्थान्तरं न श्रूयते । अस्मदुपलब्धं प्रातिपदिकसंज्ञावादपुस्तकं विक्रमसंवत् १८८८ वत्सरे लिखितमिति ततः प्राचीनोऽयमिति ज्ञायते । वाक्यवादस्य कर्ता क इति न ज्ञायते । पुस्तकस्यातिजीर्णत्वात् प्राचीनः कश्चित् पण्डित इत्यनुमीयते । अत्र यद्यप्यन्ते 'अत्र नैयायिकाः प्रत्यवतिष्ठन्ते' इत्युपक्रम्य नैयायिकमतोपरि वैयाकरणैरुद्भावितान्दोषान्निराकृत्य ग्रन्थः समापितस्तथापि वैयाकरणमतस्यैव विशदतयोपपादनादेनमत्र समगृह्णाम् । वाक्यदीपिकाख्याया वाक्यवादटीकाया मुखपत्रमुद्रणावसरे प्राप्तत्वात्तामन्ते निवेशितवान् । स्फोटतत्त्वनिरूपणपुस्तके दृष्टाष्टिप्पणीरपि न्यवेशयम् । अत्र प्रातिपदिकसंज्ञावादे मुद्रणारम्भात्प्राक् पण्डितश्रीनिवासाचार्यकट्टीशास्त्री इत्येतैः, मुद्रणावसरे पण्डितरमापतिमिश्रैः, मुद्रणोत्तरं च पण्डितदत्तात्रेयशास्त्री निगुडकर इत्येतैः शुद्धपाठबोधनेनाहमनुगृहीत इति तेषामुपकारं भृशं स्मरामि ।

बाक्रे इत्युपाह्वो गङ्गाधरभट्टसूनुर्महादेवशर्मा.

शेषकृष्णविरचितं

# स्फोटतत्त्वनिरूपणम् ।



शब्दब्रह्मचिदानन्दमधिष्ठानमुपास्महे ।
यस्य वर्णाः पदं वाक्यं विवर्ताः संचकासति ॥ १ ॥
महाभाष्यमतं भर्तृहरिणापि प्रकाशितम् ।
आलोच्य सर्वतन्त्राणि स्फोटतत्त्वं निरूप्यते ॥ २ ॥
न प्रत्येकं न मिलिता न चैकस्मृतिगोचराः ।
अर्थस्य वाचका वर्णाः किंतु स्फोटः स च द्विधा ॥ ३ ॥

---

इह खलु पदाद्वाक्याचार्थप्रतीतिः सर्वानुभवसिद्धा सर्ववादिसंमता च । तत्र वर्णा न प्रत्येकमर्थमभिदधति, प्रथमवर्णादेवार्थप्रतीतौ वर्णान्तरवैयर्थ्यापत्तेः । नापि मिलिताः, उच्चरितप्रध्वंसिनां क्रमिकाणां मेलनाभावात् । नाप्येकस्मृतिगोचराः, नदी रस इत्यादौ दीन सर इत्येकस्मृतिविषयत्वेनाविशेषापत्तेः । अतो वर्णाभिव्यङ्ग्यः पदस्फोटो वाक्यस्फोटो वाऽनवयव एको नित्योऽर्थवाचक इत्याह—न प्रत्येकमिति । द्विधा पदस्फोटो वाक्यस्फोटो वा । तत्र पदस्फोटवादी पदस्फोट एव नित्योऽनवयवः परमार्थसन्नधिष्ठानं वर्णवाक्ययोस्तत्राध्यासात्ते तद्विवर्ते इति तद्विभाग आविद्यकः । केवलपदस्फोटेभ्य एवाकाङ्क्षादिमहिम्ना वाक्यार्थः समुल्लसतीति मन्यते । वाक्यस्फोटवादी तु वाक्यमेव नित्यमनवयवमधिष्ठानं वर्णपदे तु तद्विवर्ते इति तद्विभाग आविद्यक इति मन्यते । वाक्यस्फोटपक्षे कश्चित्तं सावयवं मन्यते तदा तत्तत्ताल्वादिस्थानोद्भववायवीयनादापरनामकध्वनिविशेषाभिव्यङ्ग्या नित्या विभवोऽपि वर्णा एवावयवाः । इयान्विशेषः । यन्निरवयवपक्षे ध्वनीनां, सावयवपक्षे ध्वनिव्यङ्ग्यवर्णानां, स्फोटव्यञ्जकत्वमिति । वस्तुतस्तु सावयवपक्षो न संभवति । तथाहि—वर्णाः स्फोटस्यावयवा भवन्तः किं भट्टमतमवलम्ब्य विभूनि द्रव्याणि भवेयुरथवा तार्किकमतमालम्ब्य गगनगुणा आहोस्विदेकदेशीयमतमवष्टभ्य वायवीयारब्धद्रव्याणि ?

---

१ अवयवत्वार्थं द्रव्यत्वम् ।

**वर्णानां प्रत्यभिज्ञानबलात्स्यान्नित्यता यदि ।**
**अनित्यतैव किं न स्यादुत्पादादिधियां बलात् ॥ ४ ॥**

न तावदाद्यः पक्षः—सर्वत्रावयवानामवयव्यपेक्षया न्यूनपरिमाणत्वं दृष्टं वर्णानां च परममहतां तदसंभवेऽवयवत्वाभावात् । न मध्यमः—वर्णानामाकाशगुणत्वे सत्यद्रव्यतया समवायिकारणत्वाभावे द्रव्यसमवायिकारणत्वरूपस्यावयवत्वस्याभावात् । नान्त्यः—आशुविनाशिनां क्रमिकाणामसहभुवामसंबद्धानामवयविनमविश्राणानामवयवत्वाभावादित्यनवयवः प्रत्यस्तमितवर्णपदविभागो वाक्यस्फोट एव श्रेयानिति तत्त्वम् ॥ ३ ॥

ननु वर्णाना नित्यतयास्ति समुदायः स चार्थं गमयतीत्यत आह—वर्णानामिति । योऽहं बाल्ये पितरावन्वभवं सोऽहमिदानीं नप्तॄननुभवामीति प्रत्यभिज्ञाबलादात्मनो नित्यत्वमिव स एवायं गकार इत्यादिप्रत्यभिज्ञानबलाद्वर्णानां नित्यत्वम् । न चैषा भ्रान्ता, बाधकाभावात् । अथ प्रत्यभिज्ञाबाधकं किंचिदुत्प्रेक्षणीयम् । तदुक्तम्—

उत्प्रेक्षेत हि यो मोहादज्ञातमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥ इति ।

तत्रैकस्मिन्बहूनामुच्चारयतामुदात्तोऽनुदात्तः, सानुनासिको निरनुनासिकश्चेति विरुद्धधर्माध्यासाद्बाधकाद्भेदो वर्णानाम् । न चोदात्तादयो वर्णव्यञ्जकधर्मा न वर्णधर्मा इति वाच्यम् । तद्व्यञ्जका वायवस्तेषामश्रावणत्वे तद्धर्माणामश्रावणत्वापत्तेरिति । उच्यते । गुण्यग्रहणेऽपीन्द्रियाणां गुणग्रहणमस्ति कथमन्यथा भूजलाकाशाग्राहकैर्घ्राणरसनश्रोत्रैर्गन्धरसशब्दा गृह्येरन् । एतेन तारत्वादयोऽपि विरुद्धधर्मा व्याख्याताः । भवेतां वा गुणगुणिनावेकेन्द्रियग्राह्यौ तथापि न दोषः । ध्वनीनामपि शब्दवच्छ्रावणत्वेन तद्गतोदात्तादिधर्मप्रतीतेः । अथ या प्रत्यभिज्ञा सा गत्वादिजातिविषया न गादिव्यक्तिविषया । अत एव शब्दभेदोपलम्भाद्वक्तृभेद उन्नीयते । सोमशर्माधीते न विष्णुशर्माधीत इति । सत्यम्, योऽयं गादिव्यक्तिभेदमङ्गीकृत्य गत्वस्यैकस्य परोपधानभेदकल्पनाप्रयासः स परं गादिव्यक्तावेवास्तु किमन्तर्गडुना गत्वेनाङ्गीकृतेन । तथाचाहुः—

१ तेभ्य एवार्थप्रतीतौ स्फोटवैयर्थ्यं तु न एकं वाक्यमिति प्रतीतेरौपचारिकत्वे सर्वत्रावयव्यसिद्ध्यापत्तेः । २ महापटारब्धरज्जौ तन्तूनामेवावयत्वं हेतुत्वं चेति न व्यभिचारः । ३ उत्तरोत्तरं पूर्वपूर्वस्य हेतुत्वम् । ४ क्वचिद्व्यभिचार(रा?)दर्शने तदुत्प्रेक्षायामिदमुच्यते भट्टैः । ५ गकाराद्युपहितत्वेन ब्रह्मसत्ताया गत्वादिरूपभेदकल्पनाप्रयासः ।

**नित्यानामपि वर्णानां तत्तद्व्यञ्जकवायुभिः ।**
**ध्वनिभिर्वा तिरोधाने न वर्णसमुदायधीः ॥ ५ ॥**

---

तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लप्स्यते ।
व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा ॥ इति ।

व्यक्तिलभ्य उदात्तादिभेदः । एवंचाबाधितप्रत्यभिज्ञाबलादेकत्वे निश्चिते तद्व्यञ्जकध्वनिविषयोऽयं विचित्रः प्रत्ययो न वर्णविषय इति । किंच वर्णभेदे दश गकारानुदचारयदिति प्रत्ययः स्यान्न दशकृत्वो गकारमिति । तथाचाह शारीरकभाष्ये भगवान् शंकराचार्यः—वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते द्विर्गोशब्द उच्चरित इति हि प्रतीतिः, न द्वौ गोशब्दाविति । यद्यपि सोऽयं गकार इति प्रत्यभिज्ञास्ति तथाप्युत्पन्नो गकारो विनष्टो गकारस्तारो गकारो मन्द्रो गकार इत्याद्यनेकप्रतीतिबलेन भेदे भासमाने प्रत्यभिज्ञायास्तज्जातीयत्वं विषयो नतु व्यक्त्यभेदः । न चैवं तज्जातीयोऽयमिति धीः स्यान्न तु सोऽयमितीति वाच्यम् । सैवेयं दीपशिखा, तानेव तित्तिडीनुपभुञ्जे, तदेवेदमौषधमन्यैः पीतं मयापि पीयते, इत्यादिषु तज्जातीयप्रतीतेरपि सोऽयमित्याकारदर्शनात्, तज्जातीयोऽयं न सोऽयमिति व्यक्त्यभेदाप्रतीतेश्च । नच गत्वादिजातावेव विवदितव्यं । गकारोऽयं, गकारोऽयमित्यनुगतगकाराकारप्रतीतिबलेन स्त्रीपुंसादिवक्तृविशेषानुमानबलेन च तत्सिद्धेः । अन्यथा जातिमात्रोच्छेदप्रसङ्गः । न च प्रमारूपप्रत्यभिज्ञाबलेन ध्वनिगत एवायमुत्पादादिप्रत्यय इति विनिगमनाविरह इति वाच्यम् । उभयप्रतीत्यप्रामाण्यकल्पनापेक्षयैकस्या एव प्रत्यभिज्ञाया अप्रामाण्यकल्पनालाघवस्य विनिगमकत्वात् । तस्मादुभयमते स्फोटरूपशब्दपरब्रह्मणो न ब्रह्मणाप्यपह्नवः कर्तुं शक्यत इति ॥ ४ ॥

ननु मा भूदाशुविनाशित्वं नित्या एव वर्णा इति दर्शने कथमसहभाव इत्यत आह—नित्यानामपीति । नित्यानामपि अपिशब्दाद्विभूनां च

---

१ येन वर्णेषु व्यक्तिभेदो न स्फुटस्तेन यत्प्रत्यभिज्ञानं जातेः प्रार्थ्यते व्यक्तिलभ्यः भेदप्रत्यय इत्यर्थः । प्रत्यभिज्ञानस्य वर्णैक्याद्विरुद्धधर्मवत्तायाश्च ध्वनिगतत्वादुपपत्तिरित्यर्थः । यद्वा जातेरेकत्वेन हेतुना यत्प्रत्यभिज्ञानं तद्वर्णैक्यादुपपाद्यम् । भेदप्रतीतिस्तु व्यञ्जकध्वनिगतभेदविषयत्वेनोपपाद्येति । २ साक्षाद्वर्णगतत्वेन प्रतीयमानोत्पत्तेर्नारोप इति भावः । ३ ध्वनिवैजात्यान्नरशुकोच्चारितगयोर्न प्रत्यभिज्ञाविषयत्वमुभयमतेऽपि । वक्त्रनुमानाच्च सिद्धं वैजात्यम् । ४ व्यक्तिसादृश्येनैकाकारप्रतीतिसिद्धौ ।

**पूर्वानुभूतसंस्कारकूटान्नान्त्यस्पृशोऽर्थधीः ।**
**स्वभावस्य विपर्यासात्कल्पनेऽन्यस्य गौरवात् ॥६॥**

वास्तवी संगतिरतिप्रसाङ्गिनी सर्वेभ्यः सर्वदार्थप्रत्ययप्रसङ्गादित्यनुभवानुसारिणी सा वक्तव्या तेषां चानेकत्वादनुभवकर्मतया अभिव्यक्तिरूपेण साहित्यं न संभवति । तथा तद्व्यञ्जका वायवो ध्वनयश्च बहवस्तैश्च व्यवधाने नित्यपक्षेऽपि नामीषां समुदाय इति ॥ ५ ॥

नन्वर्थप्रत्ययानुपपत्त्या योऽयं नित्यो निरवयवः स्फोटोऽङ्गीक्रियते स न संभवति अर्थप्रतीतेरन्यथोपपत्तेः। तथाहि—स्मरणफलोन्नीतसद्भावास्तावत्पूर्वपूर्ववर्णानुभवसंस्कारास्तेषां कूटोऽन्त्यवर्णानुभवसहकारी । तत एवार्थप्रतीत्युपपत्तिरित्यत आह—पूर्वेति । यो यद्विषयानुभवजन्यः स तद्विषयां स्मृतिं प्रसूत इति संस्कारस्य स्वभावः । अर्थप्रत्ययप्रसवे त्वसौ विपर्यस्येत् । किंच यदि वर्णानुभवजनितः संस्कारकूटोऽन्यस्मिन्नर्थे धियमादध्यात्तदा सर्वोऽपि जनो यं कंचिदेकमर्थमनुभूय सर्वं जानीयादित्यतिप्रसङ्गः। तथाच द्वितीयटीकायां वाचस्पतिमिश्राः—'भावनापरनाम्नः संस्कारस्य स्वोत्पादकानुभवगोचरस्मृतिजननादन्यत्र सामर्थ्यादर्शनात्। नहि गवानुभवजनितः संस्कारः करोति स्मृतिं तुरगे' इति । एतेन प्रत्येकवर्णानुभवजनितसंस्कारकूटेन तावद्वर्णगोचरैका समूहालम्बनरूपा स्मृतिर्जन्यते। सा चान्त्यवर्णसंगताऽर्थधियमाधत्त इति निरस्तम् । न च क्लृप्तस्मृतिजननशक्तौ तादृशसंस्काररूपायां लाघवादर्थधीजननशक्तिकल्पनमिति वाच्यम्। शक्तावपि शक्तिकल्पनायां वह्न्यादिशक्तावपि शक्तिकल्पनेऽनवस्थादूषणप्रसङ्गः । किंच यथा स्मृतिलक्षणकार्यान्यथानुपपत्तिकल्पिता संस्काराख्या शक्तिर्नान्तःकरणादौ कल्प्यते किंतु यत्रात्मनि तत्फलं स्मृतिलक्षणं समवेतं तत्रैव तथाऽर्थप्रत्ययानुपपत्तिकल्पितार्थप्रत्ययजननशक्तिस्तत्फलवत्यात्मनि कल्पयितुं युज्यते न पुनरतद्वृत्त्यां स्मृतिजननशक्तौ । न चात्मन्येवास्त्वियमिति वाच्यम्। एकैकवर्णानुभवेन स्वस्वविषयस्मृतिजननशक्तिरेका अर्थप्रत्ययजननशक्तिश्चापरेति कल्पनागौरवप्रसङ्गात्। किंच गादिरूषिते तदधिष्ठानभूते चिदात्मनि तामङ्गीकुर्वता भवताप्यागतमस्मदीये पथीति न नो विवादः ॥ ६ ॥

१ संयोगाभिव्यक्तिर्व्यञ्जकक्रमेणैव । २ स्मृतिवैयधिकरण्यात् ।

नित्यानां च विभूनां च क्रमो नास्त्येव वास्तवः ।
उपलब्धिनिमित्तोऽस्ति सा चेदेका कुतः क्रमः ॥७॥

ननु ये यथास्वं वर्णैराहिताः संस्कारास्ते संभूय निखिलवर्णविषयमेकमेव स्मरणं प्रसुवते । तथाचैकस्मृतिसमारोहिणो वर्णा अर्थस्य वाचका इति न गौरवं न च स्वभावविपर्यासः । तथाहि—संस्काराणां किं विजातीयोत्पादने सजातीयापेक्षा नास्तीत्युच्यते, किंवानेकविषयकैकस्मृतौ । नाद्यः । इदमेकमिदमेकमित्येकैकविषयकानुभवद्वयात् द्वाविति बुद्धिरुदेति सा च तदनुभवद्वयजनितसंस्काराभ्यामेव जन्यते । तदुक्तं भट्टपादैः—

सर्वेषु चैतदर्थेषु मानसं सर्ववादिनाम् ।
दृष्टं समुच्चयज्ञानं क्रमज्ञानेषु सत्स्वपि ॥
न चेत्तदभ्युपेयेत क्रमदृष्टेषु नैव हि ।
शतादिरूपं जायेत तत्समुच्चयदर्शनम् ॥ इति ।

नान्त्यः । ते घटा इत्यादावनेकविषयकैकस्मृतौ संस्काराणामन्योन्यापेक्षादर्शनात् । तथा चैकशः प्रत्येकस्मृतिजनकत्वेऽपि मिलितानां संस्काराणामनेकवर्णगोचरैकस्मृतिजनकत्वं न विरुध्यते । दृष्टं चैतत्—संस्कारश्चक्षुराद्यनपेक्षः स्मरणकारणं, चक्षुरादयश्च तन्निरपेक्षा आलोचनकारणं, प्रत्यभिज्ञाने तु संस्कारसापेक्षाश्चक्षुरादय इति ।

न चैकस्मृत्युपारूढवर्णानां वाचकत्वे नदी दीन इति सरो रस इति क्रमस्मरणनियमाभावादक्रमविपरीतक्रमाभ्यां विशेषो न स्यादिति वाच्यम् । यावद्भ्यो यादृशेभ्यश्चार्थः प्रतीयते तावतां तादृशानां चार्थावबोधकत्वाङ्गीकारात् । तदुक्तम्—

यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥ इति ।

यादृशा इत्यनेनैकवक्तृकाः क्रमिकाश्चेत्युक्तं, क्रमश्चानुपूर्वी, आनुपूर्वी च पूर्वपूर्ववर्णध्वंसो वा, पूर्वपूर्ववर्णज्ञानानन्तरमुत्तरोत्तरवर्णज्ञानं वा, पूर्वपूर्ववर्णोच्चारणानन्तरमुत्तरोत्तरवर्णोच्चारणं वा । एवं च यथा क्रमानुरोधिन्य एवं पिपीलिकाः पङ्क्तिबुद्धिमारोहन्ति तथा क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति । तथाच यद्यपि स्मरणलक्षणैकप्रतीतिवर्तिनां न विशेषस्तथापि यौगपद्यविपरीतक्रमाभिव्यक्त्यपेक्षया क्रमोच्चारितानामस्त्येव

नानुभूतिक्रमाद्वर्णाः क्रमिकाः स्मृतिगोचराः ।
गोचरोऽनुभवो नास्यास्तत्क्रमस्तु कुतस्तराम् ॥ ८ ॥
इदं पदमिदं वाक्यमिमे वर्णा इति त्रिषु ।
प्रत्ययेषु स्फुटं स्फोट एक एवानुभूयते ॥ ९ ॥

---

विशेष इत्यत आह—नित्यानामिति । वर्णानां नित्यविभूनां कालतो देशतश्च न वास्तवः क्रमो नियामकः, सत्तामात्रेण तदङ्गीकारेऽतिप्रसङ्ग इति प्रतिपत्त्युपाधिकोऽयमङ्गीकार्यः । सा चेदेका स्मृतिरूपा कुतस्तर्हि क्रम इत्येकस्मृत्युपारूढानां वर्णानां क्रमाक्रमविपरीतक्रमाभिव्यङ्ग्यानां न कश्चिद्विशेष इति ॥ ७ ॥

ननु पूर्वपूर्ववर्णानुभवाः क्रमवन्तस्तत्क्रमतया वर्णेष्वप्येकस्मृतिसमारोहिष्वौपाधिकः क्रमः स्वीकार्यः । तथाचाहुर्मीमांसावार्तिककारमिश्राः—

पदावधारणोपायान्बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीः ॥ इति ।

न केवलमेकार्थप्रत्यय एवैकं पदमिति व्यपदेशनिमित्तम्, किंतु क्रमादयोऽपीत्यर्थः । तत्र रसः सर इत्यत्र क्रमः । करः करञ्ज इत्यत्र न्यूनातिरिक्तत्वे । इन्द्रशत्रुरित्यत्र स्वरः । सा रङ्गमागता नर्तकीति वाक्यम् । परमे व्योमन्निति श्रुतिः । गृभ्णामीति 'हृग्रहोर्भश्छन्दसि' इति पाणिनिस्मृतिः । तथाच पूर्वानुभवक्रम एकस्मृतौ विशेषकः । तथाचाहुर्न्यायटीकाकारमिश्रा अपि—'अर्थप्रत्ययकारणत्वं च न वर्णमात्राणामपि तु क्रमन्यूनातिरिक्तत्वाद्युपहितानाम्' इत्यत आह—नानुभूतीति । इयं पूर्वपूर्ववर्णानुभवजन्या तावद्वर्णविषयिण्येका स्मृतिः पूर्ववर्णानुभवानेव न गोचरयति कुतस्तेषां क्रमम् ? एवं च प्राचीनानुभवोपाधिकोऽपि क्रमः स्मर्यमाणेषु वर्णेषु न विशेषक इति न तावद्वर्णसमूहावलम्बनस्मृत्यार्थप्रत्ययोपपत्तेरन्यथोपपत्तिरिति ॥ ८ ॥

ननु प्राभाकरमतेऽनुभवाः स्वप्रकाशा इति तत्क्रमः स्मृतौ भासते । सत्यं, नहि ज्ञानं स्वप्रकाशमिति तत्क्रमोऽपि स्वप्रकाशः, तस्याऽस्वरूपत्वादविषयत्वाच्च । अथ स्वरूपविषयातिरिक्त आत्मांशः स्फुरतीति चेत्, तानेवैतत्पृच्छ ये तदङ्गीकुर्वते न वयं त्रिपुटीप्रत्यक्षवादिनः । न च तैरपि ज्ञानक्रमः स्वप्रकाश इति स्वीक्रियत इति । ननु कार्यानुसारिणी कारणकल्पना, तथाचाज्ञातोऽपि वस्तुतः स्थितः क्रमो विशेषको वक्तव्य इति

**नित्या नावयवा वर्णा नाप्यनित्या इहोचिताः ।**
**विवर्ताः केवलं तस्य प्रपञ्चा ब्रह्मणो यथा ॥ १० ॥**

गामानयेति दृश्यमानेभ्य एव वर्णेभ्यश्चेदभिधेयप्रत्यय उपपद्यते तदा नैतानपहायादृश्यमानमनवयवकं स्फोटतत्त्वं कल्पनीयं प्रमाणाभावात् । या चार्थप्रतिपत्तिस्तत्प्रमाणत्वेनोक्ता साऽन्योन्याश्रयग्रस्ता । तथाहि अर्थप्रतिपत्तौ सत्यां तदनुपपत्त्या स्फोटप्रतिपत्तिः, स्फोटप्रतिपत्तौ चार्थप्रतिपत्तिरित्यत आह—इदमिति । न कल्पयाम्यहं स्फोटं, प्रत्यक्षमेव त्वेनमवगच्छामि । तथाहि गौरित्येकं पदं गामानयेत्याद्येकं वाक्यमिति सर्वजनसिद्धोऽयमनुभवो नापह्नवनीयः । तत्र पूर्वपूर्ववर्णग्रहणाहितसंस्कारायामनुसंहारबुद्धाववश्यमभिन्नं वस्त्वेकं समुल्लसतीत्येषणीयम् । न खल्वियमभिन्नवस्तुनिर्भासा बुद्धिः परस्परव्यतिरिच्यमानात्मनो वर्णानेव गोचरयितुमर्हति । एतादृशबुद्धिविषये वस्तुन्येकस्मिन्नेकत्वनानात्वयोरसमवायात् । न च वनमिति बुद्धेर्वृक्षा इव पदमितिवाक्यमितिबुद्धेर्वर्णा एव विषया भवन्तीति वाच्यम् । तत्रैकदेशस्येवात्रैकबुद्धिविषयत्वस्यैकार्थप्रत्यायकत्वादेर्वोपाधेरननुसंधानात् । अत्र पदस्फोटवादिनोऽपि मतसमर्थनाय पदमितिबुद्धेरित्युक्तम् । वस्तुतस्त्वनवयवः स्फोट एव वाक्यार्थवाचक इति मुख्यस्फोटवादिनो मतम् । तत्र चेदं तत्त्वं—कदाचिद्वाक्यमिति कदाचिदियन्ति पदानीति कदाचिदेतावन्तो वर्णा इति बुद्धिरुदेति । तत्राद्ये तावदेकबुद्धेरेकत्वावगाहिन्या एकमेव किंचिद्वस्तु प्रतीयमानं कारणमित्युपपादितम् । अन्त्यं द्वयमवशिष्यते । तत्र यदि देवदत्त गामानयेति त्रिभिः पदैः पारमार्थिकविशिष्टपौर्वापर्यैरारब्धं वाक्यं स्यात्तदा आनय गां देवदत्तेत्युक्ते तस्यावयविनो भङ्गात्तज्जन्यार्थप्रतीतिलक्षणाऽर्थक्रिया न स्यात्, ध्वस्तेषु कपालेषूदकाहरणादिवत् । तथा यदि देवदत्त गामानयेत्यत्र पारमार्थिकाः क्रमविशेषविशिष्टा अष्टौ वर्णा वाक्यारम्भकाः स्युस्तदा गां देवदत्तानयेत्यत्र सप्तवर्णा भिन्नक्रमाश्चेति ततो नार्थप्रत्ययः स्यात् । तस्माद्वर्णपदविभागमाविद्यकमङ्गीकृत्य सर्वेषूच्चार्यमाणेष्वनुस्यूतः कश्चिदर्थप्रत्ययौपयिको वाक्यात्माऽनवयवो नित्यः स्फोटोऽङ्गीकर्तव्य इति[1] ॥ ९ ॥

ननु मा भूवन्वाक्यमितिबुद्धेर्वर्णा विषयाः वाक्ये एते वर्णा इति तु बुद्धिः सर्वजनीना अनेकाकारा कथमस्या वाक्यात्मा स्फोटो विषयः । न च वने

१ आविद्यकवर्णाद्युपहितश्च वाचकः तेन न सर्वत्र सर्वबोधः ।

**यथा मणिकृपाणादौ मुखमेकमनेकधा ।**
**तथैव ध्वनिषु स्फोट एक एव विभिद्यते ॥ ११ ॥**
**स्फोटो वर्णातिरिक्तोऽपि तत्तादात्म्यमुपेयिवान् ।**
**प्रत्ययो जायते तस्मादसौ तद्वर्णरूषितः ॥ १२ ॥**

---

एते वृक्षा इतिवत् पटे एते तन्तव इतिवच्च वाक्ये एते वर्णा इति प्रत्यय इति वाच्यम् । अवर्णात्मन्यवर्णासमवेते वाक्ये वर्णोपरक्तबुद्धेरभावात् । दृष्टा हि तदात्मनि तदुपरागवती बुद्धिर्वने वृक्षा इति, तत्समवायिनि पटे तन्तव इति । नैतदुभयं प्रकृतेऽस्त्यनङ्गीकारादित्यत आह—नित्या इति । इह नित्ये स्फोटे नित्या विभवश्च वर्णा नावयवा उचिताः । अवयविन्यूनपरिमाणत्वादवयवानाम् । नाप्यनित्यास्तथा, अवयविनो नित्यस्यावयवासंभवात् । अतः केवलं तस्य स्फोटस्य विवर्ताः । एवं च प्रमारूपा वर्णोपरागवती धीर्माभूत् भ्रान्तिरूपा त्वस्त्येव । नच वस्तुतस्तद्रूपेण तत्समवायितया वा तदुपरक्तबुद्धिरिति नियमः । शुक्तेरपि रजतोपरक्तबुद्धिविषयत्वात् । तस्माद्विवर्ताधिष्ठानस्य परमार्थसतः स्फोटरूपस्याविद्याकल्पितेन वर्णविवर्तेन तत्तदुपरागवती प्रख्या न विरुध्यते । नच वर्णानां क्वचिदप्यभावान्न विवर्त इति वाच्यम् । क्वाप्यसतां घटादिप्रपञ्चानामिव ब्रह्मण्यवभासोपपत्तेरित्यन्यत्र विस्तर इत्याह—प्रपञ्चा इति ॥ १० ॥

ननु यदि वर्णैर्नित्योऽनवयवः स्फोटो व्यज्यते तदा कथमस्मादविलक्षणाद्विलक्षणतत्तदर्थप्रतिपत्तिरित्यत आह—यथेति । यथा मणिकृपाणदर्पणादौ मुखं नियतग्रीवास्थानमपि नियतगौरादिवर्णमपि नियतवितस्त्यादिपरिमाणमपि अनेकविधस्थानवर्णपरिमाणमिवाभिन्नमपि भिन्नमिव प्रतीयते तथा तत्तत्प्रयत्नभिन्नेषु ध्वनिषु स्फोट एकोऽपि नानावर्णात्मेव निरवयवोऽपि सावयव इव भिद्यमानः प्रतीयते । तथा च वाच्यस्य घटादेरर्थस्य, वाचकस्य स्फोटस्य भेद औपाधिकः । अत एव शब्दार्थयोरभेदमाद्रियन्ते ॥ ११ ॥

ननु गौरितिबुद्धिः पूर्वानुभूतान् गकारादीनेवावगाहते न तदतिरिक्तं स्फोटं, यदि गकारादिविलक्षणमवभासयेत्तदा न गकारादिरूषितः प्रत्ययः स्यात् । नहि वराहधीर्महिषरूषितं वराहमवगाहते । यदि चास्या धियोऽर्थान्तरो विषयः स्यात्तदा दकारादय इव गकारादयोऽपि व्यावर्तेरन्नित्यत आह—

---

१ मध्यमपरिमाणत्वेऽप्यनारम्यत्वादवयविनोऽवयवासंभवः ।

पूर्वपूर्वानुभूजन्यभावनासचिवेऽन्तिमे ।
चेतसि स्फुरति स्फोटो रत्नतत्त्वमिव स्फुटम् ॥१३॥
नाधिष्ठानं विनाध्यस्तप्रतीतिरुपजायते ।
तस्मात्परस्पराध्यास इति सर्वं समञ्जसम् ॥ १४ ॥

स्फोट इति । यद्यपि वर्णव्यङ्ग्यो वर्णातिरिक्तः स्फोटस्तथापि स्वाध्यस्ततत्तद्वर्णतादात्म्यमुपगच्छति तस्मात्तत्तद्वर्णरूषितः प्रत्ययो जायते न दकारादिरूषितः । वराहमहिषयोस्तु नाधिष्ठानविवर्तभाव इति नानयोस्तादात्म्यबुद्धिः ॥ १२ ॥

ननु प्रत्येकमभिव्यञ्जकत्वे ध्वनीनां प्रथमादेव ध्वनेः स्फोटप्रतीतेस्तन्मात्रनिबन्धनत्वाच्चार्थप्रतीतेरुपपत्तौ द्वितीयादीनामानर्थक्यमित्यत आह—पूर्वपूर्वेति । व्यञ्जयन्तोऽपि हि प्रत्येकमिमे ध्वनयो न द्रागेव स्फोटात्मानमवभासयितुमीशते अपि त्वीषद्रूपम् । तथाच पूर्वपूर्ववर्णाभिव्यक्तिजनितसंस्कारसहितचरमबुद्धौ स्फुटतरं चकास्ति स्फोटतत्त्वमिति प्रागनुत्पन्नायास्तदनन्तरमुत्पादोऽर्थधिय इति नोत्तरेषामानर्थक्यम् । न प्राचां, तदभावे तज्जनितसंस्कारपरिपाकाभावेनानुग्रहाभावादन्त्यस्य चेतसस्तद्व्यञ्जनेऽक्षमत्वात् । यदाह भर्तृहरिः—

नादैराहितबीजायामन्त्येन ध्वनिना सह ।
व्यावृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥ इति ।

यथा रत्नपरीक्षिणः पुनः पुना रत्नं वीक्षमाणस्य रत्नदर्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि न सहसैव समानासमानजातीयव्यावृत्तं तत्त्वमवभासयन्ति । किंतु पश्चपदर्शनजनितसंस्कारसचिवे चरमचेतसि चकास्ति रत्नतत्त्वम् ॥ १३ ॥

ननु पूर्वपूर्ववर्णबुद्धावीषत्, चरमबुद्धौ तु स्फुटतरं स्फोटो न संभवति चरमज्ञानकाले प्राचां प्रत्ययानामतीतत्वात्तत्काले चरमज्ञानस्यानागतत्वादिति नासतां प्राचामसता चरमवर्णेनोपकारः । न च निर्भागे पदात्मनि वाक्यात्मनि वा स्फोटे गृहीते किंचिदस्याऽगृहीतमवशिष्यते यदग्रहणादव्यक्तत्वम् । नापि समारोपः सामान्यविशेषभावविरहात् । नहि सामान्यात्मनाप्यगृहीता शुक्ती रजतसमारोपविषयः । तस्माद्गौरित्यनुसंहारबुद्धिः परस्पर-

१ वाक्यपदीये 'आवृत्त' इति पाठः । २ पूर्वपूर्ववर्णानुभवाहितसंस्कारसहिता अन्त्यवर्णबुद्धिः ।

**सत्यस्फोटप्रमोदेति मिथ्यावर्णावभासतः ।**
**आराद्वनस्पतौ हस्तिबुद्धेरिव तरुप्रमा ॥ १५ ॥**
**प्रत्यक्षज्ञाननियता व्यक्ताव्यक्तावभासिता ।**
**न जायते जायते चेद्व्यक्तैवेतरमानधीः ॥ १६ ॥**

---

व्यावृत्तवर्णरूपावगाहिनी न वर्णानुविद्धैकवस्तुगोचरेत्यत आह—नाधिष्ठानमिति। वर्णौ गादयोऽपि विवर्तास्ते चाधिष्ठानचैतन्यरूपे शब्दब्रह्मण्यध्यस्तास्तज्ज्ञाने स्फोटज्ञानमेव किंतु नासावर्थप्रतिपादक इत्यस्फुट इत्युच्यते । यदा तु प्राचीनप्रत्ययप्रचयरचितभावनापरिपाकसंवलिते चरमे चेतसि स्फुरति तदार्थप्रतिपत्तिहेतुरिति स्फुटतरमभिव्यक्तः स्फोट इत्युच्यते इति । यद्वा पूर्वपूर्ववर्णैरीषत्संदिग्धश्चरमवर्णबुद्ध्या तु नितरां निश्चयेन ग्राह्यः । तथाहि कमलमित्युक्ते ककारमकारानुभवेऽपि किं कमलीयः स्फोटः कमनीयो वेति संदेहो नापगच्छति तावद्यावन्न चरमो लो नो वानुभूयते । तस्मादीषत्त्वं संदिग्धत्वं, निश्चितत्वमेव स्फुटतरत्वम् । अत एवान्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमस्वरूपं स्फोटमाहुरालंकारिका ध्वनिकारादयः । एतेनानंशस्य निखिलसामान्यविशेषविरहिणः स्फोटस्य स्फुटास्फुटावभासो न संभवतीति निरस्तम् । अर्थप्रतीत्यनुरोधेन तत्कल्पनस्याविद्यकस्यावश्यकत्वादिति ॥१४॥

ननु यदि वर्णा विवर्ता उक्तास्तदा मिथ्याभूतैरमीभिः कथं परमार्थभूतस्य स्फोटस्य प्रमारूपो निश्चयः, मिथ्याभूतात्परमार्थभूतस्य निश्चयादर्शनादित्यत आह—सत्यस्फोटप्रमेति । दूरे वर्तमाने वनस्पतौ वृक्षे तद्दोषवशाज्जाताया मिथ्याभूताया अपि हस्तिबुद्धेर्यथा प्रवृत्तिद्वारा तरुप्रमोदेति तथा मिथ्याभूतवर्णावभासादपि सत्यस्फोटप्रमेति भावः ॥ १५ ॥

ननु यथा प्राञ्चो वर्णा अव्यक्तं चरमस्तु तज्ज्यन्यभावनासहितः स्फुटतरं स्फोटमवभासयति तथा पूर्वे वर्णाः प्रत्येकमव्यक्तां चरमस्तु तज्जन्यसंस्कारसहितो व्यक्तामर्थधियमेव किं नाधत्ते, किं तादृशानवयवस्फोटकल्पनयेत्यत आह—प्रत्यक्षेति । गौरित्येकं पदमिति प्रत्यक्षस्य स्फोटस्य व्यक्ताव्यक्तावभासित्वमभिव्यक्तितारतम्यं संभवति न परोक्षस्याभिधेयज्ञानस्य । तथाहि शुक्तिसंपुटात्पृथक्कृते मुक्ताफले भवति परीक्षकाणां प्रथममव्यक्तं दर्शनं, ततो व्यक्तं, ततो व्यक्ततरं ततो व्यक्ततममित्यनुभवमार्गागतं, शुक्तिसंपुटान्तःस्थिते त्वमुष्मिन्ननुमेये नेदमभिव्यक्तितारतम्यमित्यप्यनुभव-

**यत्रानुवृत्ते व्यावृत्तिर्यस्य तस्मात्स भिद्यते ।**
**नदीदीनजरेत्यादिष्वेव वर्णेषु तद्भिदा ॥ १७ ॥**
**प्रमा न जायते तावद्यावन्न ज्ञायते पदम् ।**
**पदं हि ज्ञातं करणं सर्वे स्वीकुर्वते बुधाः ॥ १८ ॥**

सिद्धं, प्रत्यक्षेतरप्रमाणस्य प्रमेयसद्भावमात्रनिर्भासाय प्रवृत्तत्वात् । एवं च प्रमाणान्तरजन्या बुद्धिरसति कारणे न जायत एव सति तु कारणे जायते चेत्तदा व्यक्त्यैवेति न स्फोटार्थधियोः समानयोगक्षेमतेति । एतेन स्फोटव्यञ्जकत्वेऽपि वर्णानां प्रत्येकसमुदायविकल्पावकाशः । तदुक्तम्—

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥[1]

इति निरस्तं, स्फोटार्थधियोः प्रत्यक्षपरोक्षतया तद्व्यञ्जकत्वे वर्णानां समत्वाभावात् ॥ १६ ॥

ननु 'ते विभक्त्यन्ताः पदम्' इति न्यायसूत्रम् । अस्यार्थः—त एव वर्णा एव विभक्त्यन्ताः पदं न स्फोटाख्यमिति ततो न वर्णभिन्नः पदात्मा स्फोट इत्यत आह—यत्रेति । यस्मिन्ननुवर्तमाने यद्व्यावर्तते तस्मात्स भिद्यते यथा सुवर्णावयवेष्वनुवर्तमानेष्वेव व्यावर्तते कटकमुकुटादिः । एवमनुवर्तमानेष्वेव वर्णेषु व्यावर्तन्ते पदात्मानो नदी दीन जरा राजेत्यादयः स्फोटा अतस्तेऽपि पदेभ्यो भिन्ना इति ॥ १७ ॥

ननु तथाप्येकं पदमित्येकत्वधीर्नैकवस्तुव्यवस्थापकं प्रमाणमपि तु व्यपदेशमात्रनिमित्तमिति यथा करितुरगादिषु चम्पकाशोककिंशुकादिषु कश्चिद्वैरिविध्वंसादिरेकदेशादिश्चोपाधिः, सेनावनमितिव्यपदेशमात्रजनकः, तथात्राप्येकार्थप्रत्ययहेतुत्वमेकार्थसंबन्धाख्यानं वाऽस्तूपाधिः[2] । न चैकपदत्वे एकार्थप्रतीतिहेतुत्वमवगन्तव्यमवगते च तस्मिन्नेकपदत्वमित्यन्योन्याश्रय इति वाच्यम् । पूर्वमेकपदत्वावधारणानभ्युपगमात् । नहि पदावधारणाधीनः संबन्धबोधः, किंतु तदधीनं पदज्ञानं, तथाचाहुर्द्वितीयटीकायां वाचस्पतिमिश्राः—एकस्मृतिसमारोहिणां वर्णानामसत्यप्यर्थावबोधे सुज्ञानत्वादिति । एकस्मृतिविषयानेकवर्णस्य च स्वार्थेन संकेतग्रहस्यापि सुकरत्वं, तदुत्तरकालं च पदमिति कारकशब्दप्रवृत्तिः । इतरथा सर्वेष्वेव

१ नैकेनापि विमुच्यते इति पाठः । २ एकार्थसंबन्धाख्यानबोधो वेति पाठान्तरम् ।

कारकपदेषु दुर्वारमितरेतराश्रयत्वं स्यात् । तस्माद्व्यपदेशमात्रानुरोधेनानेकवर्णमात्रावभासिनीषु श्रोत्रजासु बुद्धिषु तदाहितवासनालब्धजनुषि चानुभूतवर्णसंकलनात्मिकायां स्मृतावप्रथमानः प्रथमानवर्णोपमर्देन न शक्यः पदात्मा स्फोट इति वक्तुम् । किंच गौरित्येकं पदमित्यत्र भासमानमौपाधिकमेकत्वमस्यामेव भासमानं स्वाभाविकं वर्णनानात्वं न बाधितुमुत्सहते । नह्यौपाधिकं सिंहत्वं स्वाभाविकं नरत्वं बाधते । अत एव नैकत्वनानात्वयोर्विरोध इत्यत आह—प्रमेति । न खल्वज्ञातपदस्वरूपावधिः पदार्थमवबुध्यते, सा रङ्गमागतेत्यादौ सेति पदमजानतोऽभिमतार्थप्रतिपत्तिविरहादिति ज्ञातैकपदस्वरूपावधिः पदार्थमवबुध्यते, हि यतः सर्वे वादिनः पदं ज्ञातं सत्प्रमां प्रति करणमिति मन्यन्ते । तथा एकार्थसंबन्धाख्यानमप्येकपदत्वं नापादयति । तथाहि—वर्णानां केवलानां पदभावमनापन्नानामर्थप्रत्यायकत्वे व्युत्क्रमोच्चारितानामपि तत्प्रतिपादकत्वं स्यात् । असंबद्धानां तु प्रत्यायकत्वे यतः कुतश्चिद्यस्य कस्यचिदर्थस्य प्रतीतिः स्यादित्यवश्यं संबन्धो वाच्यः । स च पदत्वमापन्नत्वे वर्णानां संभवति । तच्च पदत्वं न तादृशस्फोटमन्तरेण । संबन्धाख्यानात्पदत्वकल्पने ध्रुवमन्योन्याश्रयः—पदत्वात्संबन्धित्वे सति आख्यानमाख्यानाच्च पदत्वमिति । चक्रकं च—पदत्वे सति संबन्धित्वं संबन्धित्वे च सति संबन्धित्वाख्यानं संबन्धित्वाख्यानाच्च पदत्वमिति । व्यवस्थितमेव तु वाचकत्वमाख्यायत इति ।

यत्तु लीलावतीकारेणोक्तम्—एकं पदमिति धीरेकसुप्तिङन्तत्वावच्छेदेनोपपद्यते । तत्रैकसुप्तिङन्तत्वावच्छेदः पदत्वे, नानासुप्तिङन्तत्वावच्छेदो वाक्यत्वे प्रयोजकः स्वीकरणीय एव । अन्यथा स्फोटत्वाविशेषे अयं पदस्फोटोऽयं वाक्यस्फोट इति विचित्रव्यवहारस्त्वन्मते कथं स्यादिति । तन्न ।

सुबन्ततिङन्तयोरनुगतस्यैकस्य पदत्वावच्छेदकस्य वक्तुमशक्यत्वात् । अन्यतरत्वस्य गौरवेणावच्छेदकत्वाभावात् । न च संख्यावाचकप्रत्ययत्वमेवानुगतमिति वाच्यम् । प्रत्ययत्वस्यैकस्यानुगतस्याभावात् । प्रतीयते येनार्थ इत्यन्वर्थस्य प्रकृत्यादिसाधारणतयातिप्रसङ्गात् । एक एव एकक इत्यादौ स्वार्थप्रत्ययेऽव्याप्तेश्च । विभक्त्यन्तवर्णाभिव्यङ्ग्यत्वस्य पदस्फोटव्यवहारजनकत्वाद्विभक्त्यन्ततत्तद्वर्णाभिव्यङ्ग्यपदस्फोटेभ्य एवाकाङ्क्षादिमहिम्ना वाक्यार्थसमुल्लासे पदस्फोटवादिमते वाक्यस्य न विवर्तत्वाङ्गीकारः । नित्यनिरव-

**गौरित्येकावभासेऽस्मिन्नुपाधिं कंचिदिच्छताम् ।**
**न भवेत्किंचिदप्येकं न च नानापि तद्विना ॥ १९ ॥**

---

यववाक्यस्फोटवादिमते विभक्त्यन्तवर्णरूपपदस्य विवर्तत्वे दोषाभावात् ।

तस्मादेकत्वबुद्ध्या अनौपाधिक्या बाधितेयं वर्णनानात्वबुद्धिर्विवर्ततामालम्बमाना अधिष्ठानं स्फोटमेवालम्बत इति युक्तमुत्पश्यामः ॥ १८ ॥

किंच गौरित्यत्राबाधिताप्येकत्वधीर्यदि प्रत्यक्षापलापिनां तत्तत्स्वसिद्धान्तश्रद्धाव्यामोहापस्मारिणौमापाधिकी स्यात्तदा सर्वत्र यत्किंचिदेकोपाधिसंभावनया काप्येकत्वबुद्धिः पारमार्थिकी न स्यात् । तद्विरहे तन्निबन्धनद्वित्वादिप्रतीतेरपि विरहे शून्यमेवेदं जगदापद्येतेत्यत आह—गौरितीति । इच्छतां वादिनां किंचिद्वस्तु तद्विना एकं विना ॥ १९ ॥

---

## अथ न्यायमतानुसारेण पदप्रक्रिया ।

तत्र प्रथमवर्णज्ञानस्योत्पादस्तत्संस्कारस्योत्पद्यमानतेत्येकः कालः१ । ततः संस्कारस्योत्पादस्ततो द्वितीयवर्णज्ञानस्योत्पादस्तेन च द्वितीयवर्णज्ञानेन पूर्ववर्णानुभवजनितसंस्कारसहितेन द्वितीयवर्णसंस्कारस्योत्पद्यमानता पूर्ववर्णज्ञानविनश्यत्तेत्येकः कालः २ ।—यद्यप्युत्पद्यमानता उत्पत्तिकारणसान्निध्यं विनश्यत्ता च विनाशकारणसान्निध्यं तच्च ज्ञानं द्वितीयवर्णस्यैवेति न कार्यकारणभावस्तथापि पूर्वपूर्ववर्णसंस्कारोत्पाद(ज्ञान?)विनाशौ प्रति कारणत्वमस्त्येव—। ततो द्वितीयवर्णसंस्कारस्योत्पादः, द्वितीयवर्णज्ञानविनश्यत्ता, प्रथमवर्णज्ञानस्य विनाशः, अन्त्यवर्णानुभवस्योत्पादः, पूर्ववर्णद्वयानुभवजनितसंस्कारद्वयेनान्त्यवर्णानुभवसहकारिणा पूर्ववर्णद्वयविषयस्मरणस्योत्पद्यमानतेत्येकः कालः ३ । ततो वर्णद्वयस्मरणस्योत्पादः, अन्त्यवर्णानुभवस्य विनश्यत्ता, द्वितीयवर्णज्ञानस्य विनाशः, ततः संकेतस्मृतेरुत्पद्यमानतेत्येकः कालः ४ । ततः संकेतस्मृतेरुत्पादस्तद्वर्णद्वयस्मरणस्य विनश्यत्ता, अन्त्यवर्णानुभवस्य विनाशः, पदार्थप्रतिपत्तेरुत्पद्यमानतेत्येकः कालः ५ । ततः पदार्थप्रतिपत्तेरुत्पादस्तत्स्मरणस्य विनाशः, संकेतस्मृतेर्विनश्यत्ता, पदार्थसंस्कारस्योत्पद्यमानतेत्येकः कालः ६ । ततस्तत्संस्कारस्योत्पादः, पदार्थप्रतिपत्तेर्विनश्यत्ता, संकेतस्मृतेर्विनाश इत्येकः कालः ७ । ततः पदार्थप्रतिपत्तेरपि संस्काराद्विनाशः ८ ॥

यद्यप्यस्यां प्रक्रियायां संकेतस्मृतिसमय एवान्त्यवर्णानुभवस्य स्मरणेन

विनाशितत्वान्न पदार्थप्रतिपत्तिं प्रति कारणत्वसंभवस्तथाप्यन्त्यवर्णानुभवस्य पदस्मरणादिः सर्वो व्यापार एवेति न दोषः।

## अथ वाक्यप्रक्रिया।

अन्त्यवर्णानुभवस्योत्पादः, स्मरणस्य विनश्यत्ता, ततः संस्कारपदप्रतिसंधानयोरुत्पद्यमानतेत्येकः कालः १। अथ तयोरुत्पादः, स एव पदप्रतिसंधानात्मा समयसंस्कारस्योद्बोधः, संबन्धस्मरणस्योत्पद्यमानता, संस्काराद्विचित्रप्रत्ययविनश्यत्तेत्येकः कालः २। अथ [1]संबन्धस्मरणस्योत्पादः, विचित्रप्रत्ययस्य विनाशः, पदप्रतिसन्धानस्य विनश्यत्तेत्येकः कालः ३ इति। एवं च पूर्वपूर्ववर्णस्मृतिनिचयसहितान्त्यवर्णानुभवस्य विनश्यदविनश्यदवस्थयोश्च स्मृत्यनुभवयोर्बलेन श्रोत्रसंस्काराभ्यां सन्नन्त्यवर्णोऽसन्तः पूर्वे वर्णास्तदवगाही स्मृत्यनुभवरूपो विचित्रः प्रत्यय एव वाक्यार्थप्रत्ययहेतुरिति। तथाच तार्किकमतं भट्टवार्तिककारेण दर्शितं—

चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम्।
केचिदाहुर्यथा वर्णो गृह्यतेऽन्त्यः पदे पदे॥ इति।

तत्र पदप्रक्रियायां पूर्वपूर्ववर्णानुभवभावितभावनाकूटस्य तज्जन्यस्मृतीनां च तावद्वर्णविषयसमूहावलम्बनस्मृतिद्वारा नार्थप्रत्यायकत्वमित्यसकृदुपपादितम्।

वाक्यप्रक्रियापि न प्रामाणिकी। अन्त्यवर्णानुभवात्प्राचीनस्मृतिनिचयसहितादपि युगपत्स्मृत्यनुभवरूपविचित्रप्रत्ययानुत्पत्तेः। यथोक्तं श्रीवाचस्पतिमिश्रैस्तत्त्वबिन्दौ—'नचान्त्यवर्णोद्बोधितसंस्काराधीनजन्मा स्मृतिरनुभवेन सह युगपदुत्पत्तुमर्हति। न च न्याय्यो युगपदुत्पादः प्रत्ययानां करणस्य प्रत्ययापर्यायेऽसामर्थ्यात्' इति। तथाच तत्त्वबिन्दौ त एव तत्संग्रहमाहुः—

नान्त्यवर्णश्रुतिः स्मृत्यतीता वाक्यार्थबोधिनी।
न स्मृतिस्तदपेक्षत्वाद्यौगपद्यं न चानयोः॥ इति।

प्राचीनस्मृतिसमयेऽन्त्यवर्णानुभवो नास्ति अनागतत्वात् अन्त्यवर्णानुभवसमये प्राचीनस्मृतिरेव नास्ति अतीतत्वादिति तस्यार्थः। द्वितीयटीकायामप्युक्तं वाचस्पतिमिश्रैः—'अपि चेयमन्त्यवर्णश्रुतिः स्वार्थसंकेतस्मृतिसापेक्षा तदनपेक्षा वार्थधियमाधत्ते। आद्ये संकेतस्मृतिकालेऽन्त्यवर्ण-

[1] समयेति पाठः।

श्रुतिरुपरता क्षणिकत्वेनेति कथा स्मृतिरपेक्षेत । अन्त्यवर्णश्रुतिसमये च संकेतस्मृतिरनागतेति किमन्त्यवर्णप्रत्ययोऽपेक्षते । संकेतस्मृत्यनपेक्षत्वे त्वगृहीतसंकेतस्यापि प्रथमवर्णश्राविणोऽर्थप्रत्ययप्रसङ्ग इति ।

तस्मात्पदस्फोटाद्वाक्यस्फोटाद्वार्थप्रत्यय इति स्थितम् । अत एव शब्दप्रभवत्वमाख्यायते जगत इत्यन्यत्र विस्तरः ।

अत एव चागमेऽपि—

शब्दब्रह्म यदूचिरेसुकृतिनश्चैतन्यमन्तर्गतं
तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः ।

इत्याद्युक्तमित्यलमतिविस्तरेण ।

प्राक्तन्त्रसूक्तिमुक्तानां माला कृष्णविनिर्मिता ।
विदुषामद्विषां कण्ठे भासतामसतामपि ॥ १ ॥
क्रियाकारकभावेन यत्सर्वत्रानुभूयते ।
स प्रत्यगात्मा जयति शब्दब्रह्ममयं महः ॥ २ ॥
शब्दब्रह्माभिधं श्रीमद्भाष्यकारस्य संमतम् ।
श्रीकृष्णशेषविदुषा स्फोटतत्त्वं निरूपितम् ॥ ३ ॥
विद्वद्भिः सदसद्व्यक्तिकारिभिः सारहारिभिः ।
रागविद्वेषरहितैर्दूषितं वाऽस्तु भूषितम् ॥ ४ ॥

इति श्रीशेषकृष्णविरचितं स्फोटतत्त्वनिरूपणं संपूर्णम् ॥

# स्फोटचन्द्रिका ।

पित्रोः पादयुगं नत्वा जानकीरघुनाथयोः ।
मौनिश्रीकृष्णभट्टेन तन्यते स्फोटचन्द्रिका ॥ १ ॥

शाब्दिकानां वाच्यलक्ष्यव्यङ्ग्यार्थप्रतिपादकानां वाचकलाक्षणिकव्यञ्जकानां शब्दानां तन्निष्ठजातेर्वा स्फोट इति व्यवहारः । स्फुटति अर्थो यस्मादिति व्युत्पत्त्या पङ्कजादिपदवद्योगरूढः स्फोटशब्दः । केवलयोगस्वीकारे वाच्यलक्ष्यव्यङ्ग्यानां चेष्टायाश्च व्यङ्ग्यार्थप्रतिपादकत्वेन तत्रातिव्याप्तेः । न च वाचकपर्यायः स्फोटशब्दोऽप्रसिद्धः । 'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः' इति हरिवंशे दृष्टत्वात् ।

तथा च वर्णपदवाक्याखण्डपदाखण्डवाक्येति पञ्च व्यक्तिस्फोटाः । शक्यतावच्छेदिकाया जातेर्वाच्यत्ववच्छक्ततावच्छेदिकाया जातेर्वाचकत्वमिति मते वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोटः । एवं चाष्टौ स्फोटाः ।

यथाऽऽनन्दवल्ल्यां शुद्धब्रह्मज्ञानार्थमन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेति पञ्चसु कोशेषु अपारमार्थिकब्रह्मत्वप्रतिपादनमुपायः, यथा वाऽरुन्धतीज्ञानार्थं स्थूलनक्षत्रे अपारमार्थिकारुन्धतीत्वबोधनम्, तथा पारमार्थिकाखण्डवाक्यबोधार्थमेते वर्णपदवाक्याखण्डपदस्फोटा उपायाः । तदुक्तम्—

उपायाः शिक्षमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ इति ।

'सुप्तिङन्तं पदम्' इति 'एकतिङन्तार्थमुख्यविशेष्यकं वाक्यम्' इति पदवाक्यलक्षणानाक्रान्तवर्णसमूहस्य वर्णस्य वा प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच् तिप् इत्यादिकस्य वाचकत्वे वर्णस्फोटः । ते च प्रयोगसमवायिनः विसर्गतिबादयः, न तु तत्स्थानित्वेन कल्पिताः सकारलकारादयः, तेषामनियतत्वात् । तथाहि । विसर्गेण रोःस्मरणं तेन सोः । एवं णला तिपः स्मरणं तेन लकारस्य, एवं च गौरवं स्पष्टमेव । किं च स्थान्यादेशज्ञानशून्यस्यावैयाकरणस्यादेशमात्रादबोधापत्तेश्च । एवं च

---

१ ते च ।

स्थान्येव वाचको लाघवात्, न त्वादेशो गौरवादिति तार्किकोक्तमपास्तम्। विपरीतगौरवापत्तेः।

अयं तार्किकाणां पदस्फोटत्वेनाभिमतः। शक्तं पदमिति तैः स्वीकृतत्वात्। तच्च मानाभावात्फलाभावात्स्वग्रन्थविरोधाच्चायुक्तमिति शाब्दिकाः।

तथाहि। शक्तं पदं चतुर्धा—रूढं यौगिकं योगरूढं यौगिकरूढं चेति। गौः पाचकः पङ्कजमश्वकर्ण इति क्रमेणोदाहरणानि।

तत्र पाचक इति यौगिकोदाहरणे यच्छक्तं पदं पच् अक इति न तद्यौगिकं, समुदायस्तु यद्यपि यौगिकस्तथापि न शक्तः। एवं च शक्तं पदं यौगिकमित्यविचारिताभिधानम्। विशिष्टशक्त्यभावे सति व्याकरणबोधितार्थप्रकृतिप्रत्ययसमुदायरूपसुबन्ततिङन्तपदत्वं यौगिकपदत्वम्। सत्यन्तं योगरूढेऽतिव्याप्तिवारणाय। तत्र विशिष्टे शक्तिग्रहात्।

एवं गौरिति रूढयुदाहरणमप्यसङ्गतम्, व्याकरणकल्पितप्रकृतिप्रत्ययार्थप्रत्ययाभावे सति तत्समुदायसुबन्तस्यार्थबोधकत्वं रूढपदत्वं; यथा मणिनूपुरादीति रूढिलक्षणानाक्रान्तत्वात्। शास्त्रकल्पितावयवार्थानुसंधानपूर्वकसमुदायशक्त्यार्थबोधकपदत्वं योगरूढत्वं, यथा पङ्कजादीति तदाक्रान्तत्वाद्योगरूढत्वं युक्तम्।

यौगिकरूढ इति तार्किकोक्तो भेदोऽपि न युक्तः। सकृदुच्चरितः शब्दः सकृदर्थं प्रत्याययतीति न्यायान्मण्डपपदं गृहविशेषे रूढं भिन्नं, मण्डपानकर्तरि भिन्नमिति अतिरिक्तभेदस्वीकारे मानाभावात्।

एवं रूढिलक्षणायाः कर्मणि कुशल इत्युदाहरणमप्ययुक्तम्। उक्तरीत्या कुशले रूढत्वस्य, कुशादानकर्तरि यौगिकत्वस्य संभवात्।

द्विरेफपदं भ्रमरे रूढमेव, कोशे भ्रमरपर्यायेषूपादानात्। नहि कोशे लाक्षणिकोपादानं पर्यायेष्वस्ति। एवं च स्ववाच्यपदवाच्यत्वसंबन्धेन द्विरेफपदस्य भ्रमरे लक्षणेति तार्किकोक्तमपास्तम्। अक्रूरेऽपि उक्तसंबन्धसत्त्वेन तत्रातिव्याप्तेश्च।

यद्वा एकाक्षरकोशावधृतशक्तिकानां सर्वेषां वर्णानामेव स्फोटत्वम्, अर्थवन्तो वर्णा इत्यनेन भाष्ये तथा प्रतिपादनात्। न चैवं धनं वनमित्यादौ (प्रतिवर्णं) प्रातिपदिकसंज्ञापत्तिः। समुदायशक्तेः स्वाश्रयशक्ततावच्छेदकानुपूर्वीभञ्जनकार्थकार्यं प्रति प्रतिबन्धकत्वात्।

१ बोधकत्वे इति पाठः।

यत्तु भूषणे स्फुटति अर्थो यस्मादिति स्फोटः वाचक इति यावदिति केवलयौगिकः स्फोटशब्द उक्तः । तन्न सम्यक् । साधुशब्दानामिवासाधुशब्दानामपि शक्तिसत्त्वेन वाचकत्वाविशेषात्स्फोटत्वापत्तेः । न चेष्टापत्तिः। शाब्दिकैस्तथानङ्गीकारात् । लाक्षणिकव्यञ्जकयोरसंग्रहापत्तेश्च । न च 'शब्दोऽत्र व्यञ्जकस्त्रिधा' इति अत्रग्रहणात्काव्य एव व्यञ्जकः, न व्याकरणे इति भ्रमितव्यम् । पदेन स्फोटोऽखण्डो व्यज्यत इति वदद्भिस्तत्स्वीकारात् ।

ननु तार्किकमते ईश्वरेच्छा शक्तिः, मीमांसकमते अतिरिक्ता पदार्थान्तरं, नवीनतार्किकैरीश्वरेच्छा ज्ञानं वा कृतिर्वेति विनिगमनाविरहान्मीमांसकमतमेवाङ्गीकृतम् । उभयथापि साधुष्वेव सा नासाधुषु । अन्यथा शक्तिमत्त्वं साधुत्वम्, इति साधुत्वलक्षणाक्रान्तत्वेनासाधूनामपि साधुत्वापत्तेः । शक्तिग्राहकव्याकरणकोशादेरभावाच्चेति चेन्न । तत्र शक्त्यभावे तेभ्यो बोधानापत्तेः ।

न च शक्तिभ्रमात्साधुशब्दस्मरणाद्वा बोध इति तार्किकोक्तं युक्तम् । साधुशब्दस्मरणं विनापि व्युत्पन्नानामपि बोधस्यानुभवसिद्धत्वात्, गौरवाच्च ।

भ्रमाद्बोध इत्यपि न । रजतभ्रमाद्गृहीतायाः शुक्ते रजतव्यवहारानाधायकत्ववच्छक्तिभ्रमाज्जातस्यापि बोधस्य व्यवहारानाधायकत्वापत्तेः। सन्मात्रविषयिण्या ईश्वरेच्छायास्तत्र अभावस्य वक्तुमशक्यत्वाच्च । किंच शक्तिभ्रमः कस्य, सर्वव्यवहारकर्तुरीश्वरस्योतान्यस्य । नाद्यः । ईश्वरस्य भ्रमित्वानुपपत्तेः । नान्त्यः । सर्गादौ प्रयोज्यप्रयोजकस्वरूपसाध्वसाधुशब्दव्यवहारकर्त्रीश्वरादन्यस्याभावात् । यथा पुण्यपापोभयजनिकार्थसृष्टिरीश्वरकर्तृका तथैव साध्वसाधूभयविधशब्दसृष्टिरपीश्वरकर्तृकैव । तथा च भ्रम इति अयुक्तमेव । न च तटस्थबालस्यानुमितिभ्रमः, साधुशब्देष्विवासाधुशब्देष्वपि शक्त्यनुमापकसामग्रीसत्त्वेन बाधकाभावेन च भ्रमत्वायोगात् ।

नन्वसाधुशब्देष्वपि शक्तिस्वीकारे शक्तिमत्त्वं साधुत्वमिति तार्किकलक्षणाक्रान्तत्वात्साधुत्वापत्तिः । तथा च न म्लेच्छितवै नापभाषितवै इति निषेधानवकाश इति चेन्न । लाक्षणिकानामसाधुतापत्तेः । न च वृत्तिमत्त्वं तत् । शक्तिलक्षणान्यतरत्वनिवेशे गौरवात् । तस्मात्पुण्यजनकतावच्छेदकजातिविशेषः साधुत्वं प्रत्यवायजनकतावच्छेदकश्चासाधुत्वम् ।

यद्वा व्याकरणबोध्यत्वं साधुत्वं तद्भिन्नत्वमसाधुत्वम् । तथा च 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति' इति

व्याकरणेनार्थविशेषे प्रकृतिप्रत्ययेन व्युत्पादित इति ज्ञातः। तादृशार्थविशेषे प्रयुक्तः। तेन गोणीशब्दस्य गोण्यामेव साधुत्वं न गवि। विनिगमनाविरह इत्यपि न युक्तम्। अन्यतरपक्षपातिनी युक्तिर्हि विनिगमना सा च ज्ञानस्य पूर्वाभिव्यक्तिरूपा प्रकृतेऽस्ति। अत एवेश्वरज्ञानं शक्तिरिति वर्धमानोपाध्यायाः।

शाब्दिकास्तु बोधजनकत्वं शक्तिः। तच्चानादिबोधजनकतावच्छेदकधर्मवत्त्वम्। तदुक्तं हरिणा—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः संबन्धः शब्दानां योग्यता तथा॥ इति।

तज्जनकतावच्छेदकधर्मवत्त्वरूपा योग्यता। न चागृहीतशक्तिकस्य शाब्दबोधानुदयाच्छाब्दबोधे शक्तिग्रहस्य हेतुत्वाद् बोधोत्तरं शक्तिग्रहः शक्तिग्रहोतरं बोध इति अन्योन्याश्रयः। व्याकरणकोशादिना शक्तिग्रहात्। अन्यथेश्वरेच्छाशक्तिरिति पक्षेऽपि शक्तिग्रहोतरं बोधः बोधोत्तरं शक्तिग्रह इति अन्योन्याश्रयस्य तुल्यत्वात्।

यद्वा शब्दार्थयोरनादिसंबन्धः शक्तिः। मम तु प्रतिभाति शक्तिः सामर्थ्यं यथा दीपादौ तेजसि ग्राह्यत्वग्राहकत्वसामर्थ्यं वह्न्यादौ दाहकत्वसामर्थ्यमिन्द्रियादौ विषयप्रकाशनं, तत्स्वरूपसदेवोपयुज्यते न तु ज्ञातम्। एवं शब्देऽपि ग्राह्यत्वग्राहकत्वसामर्थ्यं स्वरूपसदेवोपयुक्तं न तु ज्ञातम्। न चागृहीतशक्तिकस्यापि बोधापत्तिः। सन्निकर्षादिवद्बोधाभावप्रयोजकीभूताभावप्रतियोगितात्पर्यग्रहाभावात्। ननु नानार्थेष्वेव तात्पर्यग्रहस्य कारणत्वमिति चेत्। सत्यम्। शाब्दिकमते सर्वेषां नानार्थत्वात्। अत एव वृद्धिरादैजिति सूत्रे भाष्येऽनेकशक्तिः शब्दस्येत्युक्तम्। अनेकेष्वनेका वा शक्तिरस्येति विग्रहः।

अवच्छेदकभेदे शक्तिभेद इति तार्किकादिसिद्धान्तः। लाघवाच्छक्तिरेकैवेति शाब्दिकराद्धान्तः। न चान्यायश्चानेकार्थत्वमिति वाच्यम्। भवन्मतेऽपि तुल्यत्वात्।

एतावान् परं भेदः—त्वन्मते वृत्तिभेदेन, मन्मते तु एकया वृत्त्या। न च लक्षणोच्छेदापत्तिः। इष्टत्वात्। यथा भवद्भिः सर्वानुभवसिद्धापि व्यञ्जना लाघवान्न स्वीक्रियते। तत्र च व्यञ्जनोच्छेदापत्तेरदूषकत्ववन्मन्मतेऽपि लाघवाच्छक्त्यैव निर्वाहे लक्षणोच्छेदापत्तेरदूषकत्वात्।

१ जानाति इच्छति यतते करोतीत्येवं क्रमेणानुभवादिति भावः।

वस्तुत एकवृत्त्यैव निर्वाहे अनेकवृत्तिकल्पनमन्याय्यमित्येव तदर्थः । अर्थपदस्य वृत्तिपरत्वात् । अन्यायश्चेत्यस्य लाघवमूलकत्वात् ।

न चानन्यलभ्यः शब्दार्थ इति वाच्यम् । तस्य लक्षणया लभ्ये शक्तिकल्पनमन्याय्यमिति नार्थः, किंतु संसर्गमर्यादया सिद्धे शक्तिकल्पनमयुक्तमिति तदर्थात् । एवं च शाब्दिकानां शब्दवद्वह्नौ अतिरिक्तशक्तिस्वीकारः । तार्किकाणां तु शब्दे शक्तिस्वीकारः वह्नौ तु नेत्यर्धजरतीयस्वीकारोऽनुचितः । न चोत्तेजकाभावविशिष्टमण्यभावेनोपपत्तौ तत्स्वीकारो व्यर्थ इति वाच्यम् । गुरुभूतविशिष्टस्य कारणताच्छेदकत्वस्वीकारापेक्षया लघुभूतस्वीकृतातिरिक्तशक्तिसंबन्धस्यैवोचितत्वात् ।

किंच शाब्दिकमते भेदसहिष्णुरभेदस्तादात्म्यम् । गुणत्वद्रव्यत्वादिना भेदेऽपि गुणं विना द्रव्यानुपलम्भाद्द्रव्यं विना गुणानुपलम्भाच्च तयोस्तादात्म्यम् । एवं च समवायो यत्र तत्र तादात्म्यमिति व्यवहारः । तथा च तैः गुणं प्रति घटस्य पूर्ववर्तित्वासंभवेन कारणत्वाभावादन्यथानुपपत्त्या विशिष्टस्यैव कारणतावच्छेदकत्वमङ्गीकृत्य गुणविशिष्टघटं प्रति गुणविशिष्टकपालस्य कारणत्वमिति स्वीकृतम् । तार्किकैस्तु विशिष्टस्य कारणतानवच्छेदकत्वाद्विशिष्टस्य कारणत्वासंभवान्निर्गुणघटोत्पत्तिः स्वीकृता, तत्र च गुणाश्रयत्वरूपद्रव्यत्वलक्षणानाक्रान्तत्वाद्गुणसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वमिति निष्कर्षः कृतः सोऽयुक्त इति मम प्रतिभाति ।

तथाहि । प्रतिबन्धकोत्तेजकाभ्यां वह्नौ ज्ञातापि शक्तिरुत्तेजकाभावविशिष्टमण्यभावस्य कारणत्वं स्वीकृत्यातिरिक्ता शक्तिः खण्डिता, शब्दे च सा स्वीकृता । एवं विशिष्टस्य तत्र अवच्छेदकत्वं स्वीकृत्येह नेत्युक्त्वा खपुष्पवन्निर्गुणघटोत्पत्तिः स्वीकृता । सर्वेषामनुभवानारूढत्वादेतत्सर्वमयोग्यमिति दिक् ।

शाब्दिकैस्तु शब्दवद्वह्नौ कर्णविवरवर्तिनभसि चातिरिक्ता शक्तिः स्वीकृता सैव श्रोत्रं शक्तिविशिष्टं नभो वा । एवं च दूरस्थभेरीशब्दस्य स्वस्थानस्थितस्यैव श्रोत्रस्य दीपवत्प्रकाशनसामर्थ्यम् । एवं च वीचीतरङ्गन्यायेन भेरीशब्दस्य श्रवणदेशागमनमिति न मनोरमम् । साक्षाद्भेरीशब्दं शृणोमीत्यनुभवापलापापत्तेः । अनेकशब्दकल्पने गौरवाच्च । न च श्रोत्रमेव तत्र गच्छतीति युक्तम् । आकाशस्य गमनासंभवात् । कर्णविवरे आकाशाभावप्रसङ्गाच्च । श्रोत्रेन्द्रियं गुणमात्रसाक्षात्कारजनकम् ।

केचित्तु श्रोत्रेन्द्रियवद्रसनेन्द्रियघ्राणेन्द्रिययोरपि गुणमात्रसाक्षात्कारजनकत्वमिति वदन्ति । तदयुक्तमित्यपरे । तथाहि । शब्दस्याकाशगुणत्वात्समवायेन साक्षात्संबन्धसत्त्वेन केवलप्रत्यक्षसंभवेऽपि रसगन्धयोस्तु संयुक्तसमवायः संनिकर्षः स च द्रव्यसंबन्धे घटत इति परम्परासंबन्धः । तत्र द्रव्यसाक्षात्कारसंन्निकर्षसत्त्वेन द्रव्यं विना केवलगुणस्यासत्त्वेन च केवलगुणसाक्षात्कारासंभवः । तस्माद्द्रव्यविशिष्टगुणसाक्षात्कारजनकत्वं तयोः, न तु गुणविशिष्टद्रव्यसाक्षात्कारजनकत्वम् । अनुभवेन तथैव शक्त्युन्नयनात् । चक्षुरिन्द्रियत्वगिन्द्रिययोस्तु गुणविशिष्टद्रव्यं द्रव्यविशिष्टो वा गुण इत्युभयविधसाक्षात्कारजनकत्वम् । विस्तरस्तु मत्कृतशब्दार्थतर्कामृते द्रष्टव्यः । गौरवभयान्नेह तन्यत इति दिक् ।

प्रकृतमनुसरामः । असाधुशब्दस्य वाचकत्वेऽपि व्याकरणप्रतिपाद्यत्वाभावात्स्फोटत्वाभावः । तदन्तर्गतवर्णानां तु एकाक्षरकोशावधृतशक्तिकानामर्थान्तरप्रकाशकत्वे पदस्फोट इति पदस्फोटे विवेचयिष्यते । अनुकरणशब्दानां तु अनुकार्यानुकरणयोर्भेदविवक्षयाऽनुकार्यरूपार्थप्रतिपादकत्वात् स्फोटत्वम् । ननु साध्वनुकरणस्य साधुत्वेन स्फोटत्वेऽप्यसाध्वनुकरणस्यासाधुत्वात्कथं स्फोटव्यवहार इति चेन्न । असाध्वनुकरणस्यापि साधुत्वस्वीकारात् । दैत्यैर्हेऽरय इति प्रयोक्तव्ये हेऽलय इति प्रयुक्तं, तदनुकरणं हेलयो हेलय इति कुर्वन्तो न[१] परावभूवुरिति वाक्येऽपि न तस्यासाधुत्वम् । तथा यद्वा नः तद्वा नः भवतु इत्यर्थे यर्वाणस्तर्वाणः भवतु इति प्रयुक्तं तदनुकरणं कुर्वन्तो यर्वाणस्तर्वाणो नाम ऋषयो बभूवुरिति वाक्येऽपि तस्यासाधुत्वं न कस्यापि संमतम् । तस्मादसाधोरनुकरणस्य साधुत्वं सर्वसंमतम् । तत्र यदा तयोरभेदविवक्षा तदार्थप्रकाशकत्वाभावान्न स्फोटत्वम् । शुद्धब्रह्मज्ञानाय सर्वबहिर्भूतान्नमयकोशवदखण्डवाक्यबोधनाय वर्णस्फोट इति दिक् ।

इति वर्णस्फोटः ।

अथ पदस्फोटो वर्णस्फोटापेक्षया अन्नमयकोशापेक्षयान्तरङ्गप्राणमयकोशवदन्तरङ्गो निरूप्यते । अन्तरङ्गत्वं तु साक्षाद्वाक्यघटकत्वेन । वर्णस्य बहिरङ्गत्वं पदनिष्पत्तिद्वारा तद्घटकत्वम् । पदस्फोटो द्विधा सखण्डोऽखण्डश्च । व्यवहारादिना पदे एव शक्तिग्रहात् । तत्र योऽस्माकं सख-

१ कुर्वन्तः परावभूवुरिति वाक्येऽपि तस्य साधुत्वमिति पाठः ।

ण्डपदस्फोटः पचति राम इत्यादिसुबन्ततिङन्तरूपः, शक्तं पदमिति मते स एव वाक्यस्फोटस्तार्किकाणाम् ।

अथाखण्डपदस्फोटो निरूप्यते । स च सर्वैः पदस्थितवर्णैर्व्यज्यते । स चार्थप्रत्यायक इति शाब्दिकसिद्धान्तः । न च प्रतीतस्य प्रत्यायकत्वं नास्ति अन्यथा शब्दं वेत्तीत्यत्रार्थं वेत्तीति प्रत्ययापत्तेरिति अणुदित्सूत्रस्थभाष्यविरोधः । तस्य सामान्यतः प्रतीतस्य प्रत्यायकत्वं नास्तीति नार्थः किंतु शब्दसंज्ञया प्रतीतस्य शब्दस्येति । प्रकरणानुरोधेन तस्य संकोचात् । एवं च रहसि पुस्तकमीक्षमाणस्यार्थप्रत्ययानापत्तिमाशङ्क्य तत्रापि सूक्ष्मोच्चारणमस्त्येवेति नव्योक्तमपास्तम् । अनुभवविरोधाच्च ।

यत्त्वत्र तार्किकवेदान्तिनः । यावद्वर्णव्यङ्ग्यो वा यत्किंचिद्वर्णव्यङ्ग्यो वा चरमवर्णव्यङ्ग्यो वा सः । न तावदाद्यः । आशुविनाशिनां मेलनासंभवात् । न द्वितीयः । पशब्देनैव व्यञ्जिते स्फोटे टवर्णवैयर्थ्यम् । न तृतीयः । पूर्वपूर्ववर्णानुभजन्यसंस्कारसहितचरमवर्णेनैवार्थप्रतीतिसिद्धौ किं स्फोटेनेति । तन्न ।

वर्णानामाशुविनाशित्वे मानाभावात् । न चोत्पन्नो गकारः नष्टो गकार इति प्रतीतिर्मानम् । तस्माद्वाकाशः संभूत इतिवदाविर्भावतिरोभावेनाप्युपपत्तेः । अनन्तप्रागभावध्वंसकल्पने गौरवाच्च । अनित्यत्वेऽपि वर्णानुभवजन्यसंस्कारजन्यस्मृतौ मेलनसंभवात् ।

द्वितीयमपि न द्वितीयादिवर्णवैयर्थ्यम् । पशब्दोच्चारणे किं पटस्फोट उत पद्मस्फोट उत पयःस्फोट इति संदेहनिवर्तकत्वेन सार्थक्यात् ।

तृतीये यथा पटपदशक्यः विजातीयतन्तुसंयोगविशिष्टचरमसंयोगस्यैव पटकार्यकारित्वेऽपि अतिरिक्तोऽवयवी स्वीक्रियते तथा मयापि स्वीक्रियते । न च तथानुभवादतिरिक्तः पट इत्युच्यते । पदस्फोटेऽपि तुल्यत्वात् । गौरवाच्च ।

स्फोटे तु लाघवं कथमिति चेच्छृणु । ध्वनिभिरेव स्फोटो व्यज्यते । एवंचानन्तवर्णतत्प्रागभावध्वंसकल्पना नदी दीन सरो रस जरा राजेत्यादौ भिन्नार्थप्रतीत्यर्थमानुपूर्व्याः पूर्ववर्णानुभवजन्यसंस्कारसहितचरमवर्णस्य कारणता च न वाच्येत्यातिलाघवम् । त्वया तु तद्वाच्यमिति गौरवम् । एतावत्प्रघट्टकेन वर्णातिरिक्तः वर्णव्यङ्ग्यः [1]'चैतन्ये सर्वभूतानां शब्द-

---

१ क्वचं वेत्ति ।

ब्रह्मेति मे मतिः' इति शब्दब्रह्मरूपोऽतिरिक्तः स्फोटस्तार्किकादिदूषणाभासनिरसनपूर्वको व्याख्यातः ।

प्रकारान्तरेणाप्युच्यते । अखण्डपदस्फोटो नाऽतिरिक्तः । यत्र तार्किकादिभिर्यौगिकं योगरूढं च पदमित्युच्यते पाचकः पङ्कजमित्यादि तदेवास्माभिः सखण्डपदस्फोटत्वेन व्यवह्रियते । खण्डशक्त्यनुसंधानपूर्वकं कोशादिना समुदायशक्तिग्रहात् । यस्य तु व्याकरणज्ञानशून्यस्य केवलव्यवहारेण समुदायशक्तिग्रहस्तस्य स एवाखण्डपदस्फोटः ।

यत्तु रूढं पदं मणिनूपुरादि वः न इत्यादि तत्सर्वेषामपि अखण्डपदस्फोटत्वेनाभिमतम् । तत्र सर्वेषामपि अवयवार्थज्ञानाभावविशिष्टव्यवहारेण समुदाये शक्तिग्रहात् । एवंच रूढयौगिकपदयोः सखण्डाखण्डस्फोटयोश्च पर्यायत्वे नाममात्रे विवाद इति दिक् ।

एवंच तार्किकादीनां दूषणाभासा गर्भस्रावेणैव पराहता इति दिक् ।

नहि तार्किकादितर्का एव सत्तर्का इति नियमः । तत्रापि बहुशोऽनुभवाविषयासत्तर्कदर्शनात् । तथाहि । विशिष्टस्य कार्यत्वकारणत्वेनैव सिद्धौ निर्गुणघटोत्पत्तिरयुक्तेति पूर्वमुक्तम् । तथा रूपस्य व्याप्यवृत्तित्वनियमाद्धटस्य प्रत्यक्षान्यथानुपपत्त्या स्वीक्रियमाणातिरिक्तं चित्रं रूपमिति कल्पनाप्ययुक्तैव । तादृशनियमे प्रमाणाभावात् । अस्तु वा नियमः । तथापि तत्तद्रूपावच्छिन्नतत्तदवयवसंनिकर्षसहितचरमरूपावच्छिन्नचरमावयवसन्निकर्षेणैव घटसाक्षात्कारसिद्धौ अतिरिक्तचित्ररूपस्वीकारे गौरवात् । एवं विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्तस्य चायं घट इत्यादावसंभवाद् घटघटत्वयोः संबन्धानवगाहि निर्विकल्पकज्ञानकल्पनाप्ययोग्यत्वादयुक्तैव । नित्यसंबन्धातिरिक्तसंयोगसंबन्धादावेव तत्कल्पना दण्डीपुरुष इत्यादौ, न तु अयं घट इत्यादौ । तत्र विशिष्टज्ञानस्यैव जायमानत्वात् । एवंच निर्विकल्पकज्ञानं न स्वीकार्यमिति महल्लाघवम् । एवमखण्डसखण्डभेदेन कालद्वैविध्यकल्पनमप्ययुक्तमेव । अखण्डस्य व्यवहारानाधायकत्वात् । न च 'जन्यानां जनकः कालो जगतामाश्रयो मतः' इति जगदाधारत्वेन जनकत्वेन च तत्स्वीकारः । ईश्वरस्यैव तत्प्रसिद्धत्वात् । न च पदार्थखण्डने दिक्कालौ नेश्वरादतिरिच्येते इत्यादिनाऽस्माभिस्तदुक्तमिति वाच्यम् । तत्र दिक्कालयोरेव विशिष्येश्वराभेद उक्तः । स च सर्वं खल्विदं ब्रह्मेति श्रुतिविरुद्धः । तथा यतो वा इमानि भूतानि जायन्ते, तस्मिन्सर्वं प्रतिष्ठितमित्यादिश्रुतिभिर्जगत्कर्तृत्वं जगदाधारकत्वं चेश्वरस्यैव न तु कालस्य । तेन जन्यानां

जनकः काल इत्यस्य पृथिव्यादिसप्तपदार्थानामपीश्वराभेदेन विशिष्योभयोरेव तदभेदप्रतिपादनस्य चायुक्तत्वात् । एवं खण्डकालोऽप्ययुक्तः । सूर्यगतिविशेषरूपोपाधिभेदेन हि खण्डकालः । एवंच सूर्यगतिविशेषस्यैवास्तु खण्डकालत्वं किं तदतिरेकेण । तथा च खण्डकालस्य क्रियात्वम् । एवं पीलुपाकवादिभिः परमाणौ पाकं स्वीकृत्य श्यामघटनाशः रक्तघटोत्पत्तिः स्वीकृता, तत्र चक्रदण्डादिनिमित्तकारणाभावात्कथमुत्पत्तिः । निमित्तकारणं विनापि तत्स्वीकारे दण्डचक्रादीनां निमित्तकारणतैवोच्छिद्येत । एवंविधानेकानुभवानारूढगुरुभूततर्काश्रयणं लाघवमूलातिरिक्ताखण्डस्फोटखण्डनं दूषणाभासैरनुचितमिति दिक् ।

वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य कारणत्वात्पदस्फोटं निरूप्य वाक्यस्फोटो निरूप्यते । स चाखण्डसखण्डभेदेन द्विधा । तत्राखण्डः पदातिरिक्तोऽखण्डपदव्यङ्ग्यो लाघवात्स्वीक्रियते । तच्चाखण्डपदस्फोटे निरूपितम् । अन्यच्चाकाङ्क्षायोग्यतासत्तीनां कारणता न वाच्येति महल्लाघवम् । सखण्डस्तु प्रसिद्ध एव ।

यद्वा हरेऽवेत्यादौ एकादेशे कृते पदविभागो दुर्वारस्तत्राखण्डवाक्यस्फोटोऽन्यत्र सखण्ड इति विवेकः । एवंच दूषणानां गर्भस्राव एव ।

तत्र वाक्यं नामैकतिङन्तार्थमुख्यविशेष्यकम् । यथा पचति भवतीति । तत्रापि पचतीत्यस्य विशेष्यत्वेऽपि मुख्यविशेष्यत्वाभावान्नाव्याप्तिः । तार्किकैस्तु पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तये 'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति मीमांसासूत्रमुपन्यस्य विशेष्यभूतभावनैकत्वादिति अर्थैकत्वादित्यस्य तेषामर्थं त्यक्त्वा तात्पर्यविषयैक्यमिति स्वयं तदर्थं व्याख्याय प्रत्यक्षानुमानयोरेकवाक्यत्वमुक्तम् ।

स्वातन्त्र्ये(ण?) यद्यत्सङ्गतिमत्तत्तदेकं ( तत्तेन सहैकं ? )वाक्यमिति वक्तव्यं न तु यत्किंचिदर्थकल्पनमुचितं दोषदुष्टं च । तथाहि । पठनतात्पर्ये यथैव देवदत्तः पठति तव पुत्रस्तथैव पठतीत्यत्राप्येकवाक्यत्वापत्तिः । न चेष्टापत्तिः । समानवाक्यत्वात्तेआदेशापत्तेः । तथा स्योनं ते सदनं करोमि घृतस्य धारया सुषेवं कल्पयामीति सदनप्रतिपादको मन्त्रः प्रत्यक्षग्रन्थवत् । तस्मिन्त्सीदामृतेप्रतितिष्ठ व्रीहीणां मेधसुमनस्यमान इति सादनप्रतिपादको मन्त्रः अनुमानग्रन्थवत् । प्रमाणनिरूपणवद्यागाङ्गनिरूपणं तात्पर्यविषयः । एवमनुमानस्य प्रत्यक्षापेक्षत्वेऽपि प्रत्यक्षस्य तदनपेक्षत्ववत् सादनप्रतिपादकमन्त्रस्य सदनप्रतिपादकापेक्षत्वेऽपि सदनप्रतिपादकस्य न तदपेक्ष-

त्वम्। एवं चानयोरप्येकवाक्यत्वापत्तिः। न चेष्टापत्तिः। अर्थैक्यादित्यस्य भवदुक्तप्रत्युदाहरणविरोधात्।

किं चेयं पदैकवाक्यता उत वाक्यैकवाक्यता उत ग्रन्थैकवाक्यता। नाद्यः। क्रियाकारकाणामेव तत्संभवात्। तयोरेव परस्परमाकाङ्क्षासंभवात्। उभयाकाङ्क्षायामेव तत्संभवेनान्यतराकाङ्क्षायां तदसंभवाच्च। न द्वितीयः। इतरनिरपेक्षतया सिद्धेनैकवाक्येन सापेक्षेतरवाक्यस्यान्वये हि सा। प्रकृते च वाक्यसंदर्भरूपग्रन्थयोरेव सा न तु वाक्ययोः। अनुमानस्थितवाक्यानां परामर्शजन्यं ज्ञानमनुमितिरित्यादीनां प्रत्यक्षवाक्याकाङ्क्षाभावात्। आसत्त्यभावाच्च। किं च वाक्यैकवाक्यता हि प्रकरणम्। अन्यतराकाङ्क्षाप्रकरणमिति तल्लक्षणात्। तस्याप्येकवाक्यत्वस्वीकारे वाक्यात्प्रकरणस्य दुर्बलत्वप्रतिपादकश्रुतिलिङ्गवाक्यप्रकरणेत्यादिबलाबलाधिकरणविरोधः। न तृतीयः। प्रत्यक्षानुमानयोराकाङ्क्षा आर्थी न तु शाब्दी। तस्मादत्र सूत्रलिखनं यत्किंचिदर्थकल्पनमनुचितम्। शिरोमणिग्रन्थस्तु यद्यत्सङ्गतिमत्तत्तदेकवाक्यमित्यनेनैव सिद्धत्वादिति दिक्।

प्रकृतमनुसरामः। व्यवहारेण वाक्ये शक्तिग्रहाद्वाक्यस्यैव वाचकत्वाद्वाक्यस्फोटः। न च पूर्वं गृहीतापि वाक्ये शक्तिरावापोद्वापाभ्यां त्यक्त्वा पदे गृह्यत इति वाच्यम्, एवं सति पदार्थज्ञानं प्रति वाक्यार्थज्ञानस्य हेतुतापत्तौ वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य हेतुत्वमिति सर्वसिद्धान्तभङ्गापत्तेः। वाक्यस्फोटो द्विधा सखण्डोऽखण्डश्च। अखण्डो द्विधा। वर्णातिरिक्तोऽनतिरिक्तश्च। यदा वर्णा न स्वीक्रियन्ते गौरवात्, लाघवात् ध्वनिभिरेवाखण्डो वाक्यस्फोटो व्यज्यते इति मतं, तदातिरिक्तः। अस्मिन्पक्षे वर्णाभावेन यावद्वर्णव्यङ्ग्यस्य इत्यादिदूषणाभासा गर्भस्रावेणैव पराहताः। यदा तु ध्वनिभिर्वर्णा व्यज्यन्त इति मतं तदा घटमानयेति सखण्डवाक्यस्फोटः। क्रियाकारकयोर्विभागस्य कर्तुं शक्यत्वात्। हरेऽव विष्णोऽवेत्यादौ एकादेशे कृते प्रातिपदिकाख्यातयोर्विभागाशक्यतयानतिरिक्तः वाक्यस्फोटः। क्रियाकारकज्ञानशून्यस्यावैयाकरणस्य घटमानयेत्ययमपि अनतिरिक्ताखण्डवाक्यस्फोट एव।

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन॥

इत्ययमखण्डातिरिक्तवाक्यस्फोटप्रकाशः। यथा वर्णे अवयवा न सन्ति तथेत्यर्थः। पश्य मृगो धावति, पचति भवतीत्यादावपि अखण्डसखण्डातिरिक्तानतिरिक्तत्वं पूर्ववदेव बोद्धव्यम्। मृगकर्तृकवर्तमानधावनक्रियायाः दृशिक्रियायां कर्मतासंबन्धेनान्वयः। देवदत्तकर्तृकपचिक्रियाया वर्तमानभवनक्रियायामन्वयः। तदुक्तम्—

सुबन्तं हि यथानेकं तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥ इति।

यत्तु धावनानुकूलकृतिमान् मृग इति प्रथमान्तविशेष्यकशाब्दबोध इतिपक्षे मृगस्य दृशिधात्वर्थनिरूपितकर्मत्वाद्द्वितीयापत्तिः। तमित्यध्याहारे च वाक्यभेदापत्तिरित्याशङ्क्य—

पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः।

इत्यादाविव वाक्यार्थस्य कर्मत्वान्न वाक्यभेद इति कैश्चित्समाहितं तन्मुधैव। अन्तरङ्गधावनक्रियानिरूपितत्वान्मृगस्य कर्तृत्वात्तस्य चाख्यातेनोक्तत्वात्प्रथमोत्पत्तौ बहिर्भूतदृशिधात्वर्थनिरूपितकर्मत्वेऽपि अन्तरङ्गत्वाज्जातसंस्कारबाधे मानाभावेनैव, शक्यं च श्वमांसादिभिः क्षुदुपहन्तुमितिवदुपपत्तेः।

एवं चात्र प्रथमान्तविशेष्यकपक्षेऽपि शाब्दिकदूषणाभावेऽपि एकदेवदत्तकर्तृकपचिक्रियाकर्तृकं भवनमित्यर्थे पचतिभवतीत्येकवाक्यतानापत्तेः। न च पाकानुकूलकृतिमान्देवदत्तो भवतीत्यर्थे निष्पन्ने 'सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायेन क्रियाया एव कर्तृत्वं भविष्यति। एकवाक्यतायां फलाभावाच्च। न च 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति निघातः फलम्। 'तिङ्ङतिङः' इति अतिङ्ग्रहणेन तदभावात्। सत्यम्। त्वत्संबन्धिनी देवदत्तकर्तृका पचिक्रिया भवतीत्यर्थे देवदत्तः पचति ते भवतीति प्रयोगे समानवाक्यत्वाभावेनादेशानापत्तेः। अनेकदेवदत्तकर्तृकैका पचिक्रियेत्यर्थे देवदत्ताः पचन्ति भवतीति प्रयोगोऽपि न स्यात्। अनेककर्तृत्वेन भवतीत्यत्र बहुवचनापत्तेः। पश्य मृगो धावतीत्यत्र निघातरूपप्रयोजनसत्त्वाच्च।

किंचात्र वाक्यार्थस्य कर्मत्वमिति तार्किकोक्तं न युक्तिमत्। तथाहि। वाक्यार्थोऽतिरिक्तोऽनतिरिक्तो वा। नाद्यः। तस्य वृत्त्यनुपस्थापितत्वेन दृशिक्रियायां कर्मतयान्वयानुपपत्तेः। वृत्त्युपस्थापितस्यैव शाब्दबोधविषय-

त्वनियमात् । अन्यथा घटपदात्समवायेनोपस्थिताकाशस्यापि शाब्दबोधविषयत्वापत्तेः । न द्वितीयः । विभक्त्यर्थमद्वारीकृत्य नामार्थस्य धात्वर्थेन समं भेदसंबन्धेनान्वयोऽव्युत्पन्नः । अन्यथौदनः पचतीत्यापत्तेः । न च तत्र वाक्यार्थस्य कर्मत्वं न नामार्थस्येति वाच्यम् । रमणीय ओदनः पचतीत्यस्याप्यापत्तेः । पश्य लक्ष्मण पम्पायामित्यादौ तमिति पदाध्याहारेण वाक्यभेद एव । एवं च वाक्यार्थस्य कर्मत्वमित्यविचारिताभिधानम् ।

एवं नीलो घटो भवतीति वाक्ये नीलकर्तृकभवनाश्रयो घट इति व्युत्पत्तिवादोक्तमपि न युक्तिमत् । नामार्थस्येत्यादिव्युत्पत्तिबाधे मानाभावात् । नीलो घटो भवनाश्रय इति बोधसंभवाच्च । 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति विशेषणे नीले एव भवनस्यान्वयो भविष्यतीति दिक् ।

एवं तत्त्वमसि, सोऽयं देवदत्त इत्यादौ सखण्डाखण्डत्वं पूर्ववदेव बोध्यम् । तत्त्वमसीत्यत्र तत्पदवाच्यसर्वज्ञत्वादिविशिष्टचैतन्यस्य त्वंपदवाच्येनान्तःकरणविशिष्टचैतन्येनैक्यासंभवादैक्यसिद्ध्यर्थं स्वरूपे जहदजहल्लक्षणेति सांप्रदायिकाः ।

नन्वनयो रैक्ये किं मानम् । न च नामार्थेति व्युत्पत्तिः । तस्याः किं नामार्थयोरेवाभेदान्वय उत नामार्थयोरभेद एवेति । नाद्यः । स्तोकं पचति वैश्वदेवी आमिक्षेत्यादौ व्यभिचारात् । नान्त्यः । घटपटौ इत्यादौ व्यभिचारात् । तस्मात्संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति लाघवमूलको हि सः ।

सत्यम् 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति भेदनिन्दापूर्वकाभेदप्रतिपादकश्रुतिर्मानम् । न च तत्रापि यः नाना इव पश्यति स मृत्योर्मृत्युमाप्नोति यस्तु वस्तुतः नानात्वं पश्यति स नेतीतीवशब्दात्प्रतीयमानार्थेन भेदस्यैव प्रतीतेः । किंच राजपुरुष इत्यत्रेव तस्य त्वमिति षष्ठीसमासेनापि भेदस्यैव प्रतीतेरिति वाच्यम् । छान्दोग्येपि 'सदेव सौम्येदमग्र आसीत्' इत्यारभ्य तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहारेणोपक्रमोपसंहारयोरेकरूपेण वेदतात्पर्यनिर्णायकेनैक्यस्य निर्णीतत्वात् । 'ब्रह्म तं परादाद्योन्यत्रात्मनो ब्रह्म वेद' इति श्रुत्यापि ऐक्यावधारणात् । अस्मिन्पक्षे लाक्षणिकवाक्यस्फोटः ।

वस्तुतस्तु अयं वाचकवाक्यस्फोट एव । तथाहि । विशिष्टशक्त्युपस्थापितयोस्तत्त्वंपदार्थयोरभेदान्वयानुपपत्तावपि विशेष्ययोः शक्त्युपस्थापितयोर-

भेदान्वये बाधकाभावः । यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः। यद्वा विशेष्य एव शक्तिः विशेषणं तूपलक्षणम् । अस्मिन्पक्षे न कोऽपि दोषः ।

यद्वा यथा नानार्थस्थले संयोगादिनाभिधानियमनं तथाभेदान्वयानुरोधाद्विशेष्ये एवाभिधानियमनम् । अस्तु वा लक्षणा सा च जहल्लक्षणा । तया च विशेषणांशत्यागमात्रं न तु विशेष्येऽपि तस्या उपयोगः। शक्त्यैव तदुपस्थितिसंभवात् एवं सोयं देवदत्त इत्यत्रापि । तथा च जहदजहल्लक्षणोदाहरणमसंगतमिति दिक् ।

एवमेको वृक्षः पञ्च नौका भवन्तीति वाक्ये सखण्डाखण्डत्वे पूर्ववदेव बोध्ये ।

अत्र तार्किकाः—

गृह्णाति वाचकः सङ्ख्यां प्रकृतेर्विकृतेर्नहि ।

इति वचनात्प्रकृत्यर्थवृक्षगतमेकवचनमेव भूधातूत्तरं भवतीत्याहुः ।

तदयुक्तम् । गृह्णातीत्यस्य च्व्यन्तविषयत्वात्। यथा संघीभवन्ति ब्राह्मणाः त्वद्भवाम्यहं मद्भवसि त्वमित्यादौ वचनपुरुषयोः प्रकृतिगतयोरेव दर्शनात् । ननु संकोचे किं मानम् । सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति भाष्यप्रयोग एव । उद्देश्यविधेयभावस्थले तु उद्देश्यगता सङ्ख्याऽऽख्यातप्रत्यये 'शास्त्राणि चेत्प्रमाणं स्युः' इत्यादिषु ।

पुनरपि वाक्यं द्विधा । काव्यात्मकमकाव्यात्मकं च । द्वितीयं तूक्तम् । आद्यंतु—

तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ।

इत्यनेन लक्षितम् । अत्र यावद्दोषाभावो वक्तुमशक्यः । असंभवात् । यत्किंचिद्दोषाभावे अदोषपदवैयर्थ्यम् । तस्मान्नञोऽल्पत्वमर्थः । अनुदरा कन्येतिवत् । अल्पत्वं च स्फुटप्रतीयमानदोषराहित्यम् ।

इदं काव्यलक्षणं रसगङ्गाधरे दूषितम् । शब्दार्थयोर्व्यासज्यवृत्तिकाव्यत्वे काव्यं श्रुतमर्थो न ज्ञात व्यवहारासंभवात् । तदसमञ्जसम् । पटैकदेशे दग्धेऽपि पटो दग्ध इतिवदेकदेशेऽपि प्रयोगसंभवात् । समुदायवृत्ताः शब्दाः क्वचिदेकदेशेऽपि वर्तन्ते इति भाष्यात् । तल्लक्षणमेव तु न समञ्जसम् । तथाहि। रमणीयार्थप्रतिपादकशब्दः काव्यम् । रमणीयत्वं च लोकोत्तराह्लादजनकज्ञानविषयत्वमिति तल्लक्षणम् । इदंच तत्त्वमसीत्यादावति-

व्याप्तम् । न वाह्लादे वैजात्यम् । किं ततः । लोकोत्तराह्लादजनकज्ञानविषयत्वस्योभयत्र तुल्यत्वात् । ब्रह्मण आनन्दत्वेन सर्वैर्वर्णितत्वाच्च ।

किंच रमणीयपदस्य रमणीयार्थप्रतिपादकत्वमस्ति न वा । नाद्यः । रमणीयशब्दस्यापि रमणीयार्थप्रतिपादकशब्दत्वेन काव्यत्वापत्तेः । इदं च भाष्ये 'अपशब्दार्थकः शब्दोऽपशब्द इति चेन्न । अपशब्दस्यापि अपशब्दत्वापत्तेः' इत्यनेन ध्वनितम् । नान्त्यः । रमणीयार्थप्रतिपादकत्वाभावे लक्षणत्वानुपपत्तेः । तस्मात्प्रकाशोक्तमेव लक्षणं सम्यक् ।

एवं वह्निना सिञ्चतीति वाक्यस्फोट एव । ननु वाक्यार्थबोधेऽयोग्यतानिश्चयस्य प्रतिबन्धकत्वं तार्किकादिसिद्धं प्रकृते च वह्निः सेककरणं नेति विषयबाधरूपायोग्यतानिश्चयरूपबाधकसत्त्वाद्विषयाबाधरूपयोग्यताज्ञानासत्त्वात्कथमेतस्य वाक्यस्फोटत्वमिति चेत्सत्यम् । तात्पर्यविषयाबाधो हि योग्यता । तदभावोऽयोग्यता । प्रकृते चात्युष्णजलेन सिञ्चतीति तात्पर्यविषयः । यथा—

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृता संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणबधिरप्रख्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरा-
न्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥ १ ॥

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ २ ॥

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ३ ॥

पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ।

इत्याद्यालङ्कारिकवाक्येषु, गङ्गायां घोष इत्यादौ तत्त्वमसीत्यादौ च तात्पर्यविषयाबाधो योग्यत्वमिति सर्वसिद्धान्तः । तथात्रापि ।

यद्वा शाब्दबोधेऽयोग्यतानिश्चयस्य न प्रतिबन्धकत्वं तत्सत्त्वेऽपि त्वं बृहस्पतिरिति स्तावकवाक्यात्संतोषोपलब्धेः । नाहं रण्डापुत्र इति बाधनिश्चये सत्यपि त्वं रण्डापुत्र इति वाक्यात्क्रोधोपलब्धेश्च । शाब्दबोधाभावे एतदनुपपत्तेः ।

किंच पश्य नीलोत्पलद्वन्द्वादित्यादिसाध्यवसानादिलक्षणास्थले—शरा नीलोत्पलद्वन्द्वापादानकाः नेत्ययोग्यतानिश्चये सति तद्वाक्यश्रवणानन्तरं वाक्यार्थबोधोत्तरमयोग्यतानिश्चयः पूर्वं वा। नाद्यः। बाधनिश्चये सति बोधाभावात्। नान्त्यः। बोधाभावेऽन्वयानुपपत्तेरभावात्। नहि स्वरूपसती अन्वयानुपपत्तिर्लक्षणाबीजम्। किंतु ज्ञाता। न च पूर्वमयोग्यतानिश्चयसत्त्वेन तज्ज्ञानमप्यस्त्येवेति वाच्यम्। वाक्यार्थबोधजन्यान्वयानुपपत्तिज्ञानस्य पूर्वमभावात्। गङ्गा घोषाधिकरणं नेति लौकिकज्ञानसत्त्वे गङ्गायां घोष इति वाक्याद्गङ्गाधिकरणको घोष इति बोधोत्तरमन्वयानुपपत्तिर्हि अनुभवसिद्धा। न च तस्याः पूर्वं ज्ञानं संभवति। न च भ्रमात्मको बोध इति तार्किकोक्तं युक्तिमत्। अयोग्यतानिश्चयस्य प्रतिबन्धकत्वं योग्यताज्ञानस्य कारणत्वं प्रकल्पनीयम्। भ्रमात्मको बोधश्च कल्पनीय इति महद्गौरवम्। स्फोटवादिनां त्रितयमपि न कल्प्यमिति लाघवम्। वाक्यार्थबोधजन्यप्रवृत्तावेव तत्स्वीकारात्।

किंच नाहं परमेश्वर इति बाधनिश्चये सति तत्त्वमसीति वाक्याद्बोधाभावे भ्रमात्मकबोधे वा न प्रमात्मकं ज्ञानं संभवति भ्रमात्मकबोधस्य प्रमात्मकबोधजननायोग्यत्वात्। एवं दशमस्त्वमसीत्यत्रापि।

ननु अनेकवर्णातिरिक्तोऽनेकध्वनिव्यङ्ग्योऽखण्डवाक्यस्फोटः कः पदार्थ इति चेत्, शृणु। यथा तार्किकैः पूर्वोक्तमद्रीत्या गत्यन्तरसंभवेऽपि चित्ररूपमतिरिक्तं स्वीक्रियते, यथा शाब्दिकै रेफद्वयाज्भागविशिष्ट एको वर्णः ऋति ऋवा ऌति ऌवेत्यत्र वार्तिके स्वीक्रियते, यथा वा सिद्धमेतत् सस्थानत्वादैचोश्चोत्तरभूयस्त्वादिति वार्तिकेऽनेकाचामेकवर्णात्मकत्वमुक्तं तथा मयापि अनेकध्वनिव्यङ्ग्यः वाक्यात्मक एको वर्ण इति स्वीक्रियते। स च शब्दब्रह्मरूपः। तत्र मतत्रयं—

शब्दब्रह्मेति शब्दार्थः शब्दमित्यपरे जगुः।
चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः॥ इति।

शब्दब्रह्मेति निर्वचनेनापि तस्य वर्णत्वं सिद्धम्। अनुमानादपि तथाहि। अखण्डवाक्यस्फोटः एकवर्णरूपः श्रावणत्वात्, ध्वनिव्यङ्ग्यत्वाद्वा। यन्नैवं तन्नैवं, यथा पृथिव्यादि। अन्वयदृष्टान्तस्तु मतान्तरसिद्धवर्णादिः।

वस्तुतस्तु अन्वयव्यतिरेक्यनुमानं व्यर्थम्, उपनीतभानेनैव गतार्थत्वात्। तथाहि। यथा चन्दनखण्डस्य लौकिकप्रत्यक्षं सौरभस्यालौकिकं तथा धूमस्य लौकिकं वह्नेरलौकिकमिति अस्मिन्पक्षे उपनीतभानेनेति विवेकः।

यद्वा लाघवाद्दोषाभावाद्ध्वनिव्यङ्ग्यस्यान्यस्याभावाच्च वर्णत्वस्वीकारः। न च ध्वनिव्यङ्ग्यत्वस्य गुणीभूतव्यङ्ग्यप्रभेदे काकाक्षिप्तस्यापि अन्यस्य संभव इति वाच्यम्। तस्य ध्वनिविकारकाकुव्यङ्ग्यत्वेऽपि ध्वनिव्यङ्ग्यत्वाभावात्।

किंच 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा भीः ह्रीः इत्येतत्सर्वं मन एव' इति श्रुत्या कामादीनां मनोधर्मत्वे प्रतिपादितेऽपि तार्किकैरात्मधर्मत्वमुक्तं तच्च सर्वैरप्यङ्गीकृतं, तत्तु भ्रमात्मकं तद्बीजं तु यथा जपाकुसुमसंनिधाने स्फटिको लोहित इति ज्ञानम्। प्रकृते तु मनःसांनिध्यमात्मधर्मे बीजं श्रुतिबाधश्च। स्फोटे तु न तथा। तस्मादेकवर्णात्मकोऽखण्डवाक्यस्फोटो वाचक इति सिद्धम्॥

इति श्रीमन्मौनिकुलतिलकायमानगोवर्द्धनभट्टात्मजजानकीजानिरघुनाथभट्टात्मजश्रीकृष्णकृतस्फोटचान्द्रिका संपूर्णा।

---

# प्रातिपदिकसंज्ञावादः ।



श्रीगणेशाय नमः

हेरम्बभानुवाग्देवीफणीन्द्राणामहर्निशम् ।

तथा गुरोः पदाब्जानि प्रणिपत्य पुनः पुनः ॥ १ ॥

विचार्यतेऽर्थवत्सूत्रे किंचिदेव कुतूहलात् ॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।

अभिधेयवचनोऽत्र अर्थशब्द आश्रीयते इति कैयटः । अभिधेयसामान्यवचन एवेति तदर्थः । धातुप्रत्ययपर्युदासवैयर्थ्यापातादभिधेयविशेषवचनस्याग्रहणमिति स्फोटयितुं सामान्येत्युक्तम् । प्रयोजनवदभिधेयवचनग्रहे कूचीमध्यादिष्वप्यतिप्रसङ्गः । न चेष्टापत्तिः । साधुत्वेन प्रयोगार्हत्वप्रसङ्गात् । व्याकरणनिष्पन्नत्वस्यैव तत्त्वात् । प्रमात्मकशाब्दबोधजनकत्वस्यापि सत्त्वात् । न च पुण्यजनकतावच्छेदकरूपवत्त्वमेव तत्त्वं, तच्चात्र नास्तीति वाच्यम् । व्याकरणनिष्पाद्यत्वस्यैव तत्सत्तागमकत्वात् । एवं तद्व्यवच्छेदबोधनायैवकारोपादानम् ।

इहार्थवदिति विशिष्टसंज्ञिव्यपदेशार्थं, तत्फलं तु दश दाडिमानि षडपूपा इत्यादेरनर्थक–पदघटित–समुदायस्य तदितरघटकवर्णसमुदायस्य च संज्ञातिप्रसङ्गभङ्ग इति भगवद्भाष्यकारचरणाः ।

समासोभयकृतनियमेनोभयवाक्यकरणादिह न कश्चिद्दोष इति कश्चित् ।

ननु संख्याकर्मादिषु सुपा विधानादर्थवद्भ्य एव स्वाद्युत्पत्तिर्भविष्यति इत्यनर्थकानां प्रातिपदिकत्वेऽपि न कश्चिद्दोष इत्यर्थवद्ग्रहोऽनर्थक एवेति चेन्नैवम् । अविशेषेण स्वाद्युत्पत्तौ तत्तदर्थानां तत्तत्प्रत्ययान्तरसंबन्धव्यवच्छेदफलकस्य तत्तत्प्रत्ययानां तत्तदर्थान्तरसंबन्धव्यवच्छेदफलकस्य च नियमस्याभ्युपगमात् । अर्थवद्वर्णघटितसमुदायघटकेभ्य एकाजुद्विर्वचनन्यायेन समुदायोत्तरविभक्त्यैव यावदवयवैकत्वबोधनसंभवान्न प्रत्येकं विभक्तिरिति वर्णानामर्थवत्तानिरूपणप्रस्तावे 'संघातस्यैकार्थ्यात्सुबभावो वर्णात्' इति वार्तिकव्याख्यावसरे हयवरट्सूत्रस्थभाष्यकैयटयोः स्फुटतरं द्रष्टव्यम् ।

नन्वनर्थकाना प्रातिपादिकत्वे का क्षतिरितिचेत् वनं धनमित्यादौ जश्त्वादिप्रसङ्ग इत्यवेहि। समुदायस्य पृथक्प्रातिपदिकत्वाद्विभक्तेः श्रवणं न स्यादिति तु विशेषः।

ननु धातुप्रत्ययपर्युदासादर्थवतो लाभेऽर्थवद्ग्रहणमनर्थकम्। न च प्रसज्यप्रतिषेधः, वाक्यभेदात्समासदोषप्रसङ्गात्। सादृश्यं त्वर्थवत्त्वेनैवेति चेन्मैवं वोचः। पर्युदासाश्रयणे केन रूपेण सादृश्यमित्यप्रतिपत्तिप्रसङ्गात्। असत्त्ववचनत्वस्यापि सादृश्यप्रयोजकधर्मत्वात्तद्धर्माणां हिरुगादीनामेव संज्ञाप्रसङ्गात्। न च कारकान्वयितावच्छेदकरूपवत्त्वरूपासत्त्वभूतत्ववद्बोधकत्वान्न तद्धर्मेण सादृश्यमिति वाच्यम्। लिङ्गसंख्याद्यन्यतरानन्वयित्वरूपस्य तस्य भर्तृहर्यादिसिद्धान्तव्यवस्थापकैर्बुधैः सिद्धान्तितत्वादत्र च सत्त्वात्। अर्थवत्त्वेनैव सादृश्यमिति वदतां तु धातुप्रत्ययपर्युदासाश्रयणादर्थवत एव संज्ञा भविष्यति नार्थोऽर्थवद्ग्रहणेनेत्याशङ्क्याह इत्यर्थवदिति ग्रन्थावतारणं कैयटोक्तमलग्नकं स्यात्। एतेन नञिवयुक्तन्यायानित्यत्वज्ञापकमर्थवद्ग्रहणमित्थं चोषधेश्चेत्यादौ विभक्तिकारकग्रहणयोरेव प्रत्याख्यानसंभव इति परास्तम्।

यदपि पर्युदासेनार्थवत्त्वं यद्यपि लभ्यते तथाप्युत्तरार्थं तदित्युक्तं तदप्येतेन प्रत्युक्तम्। पर्युदासादर्थवत्त्वे लब्धेऽर्थवद्ग्रहणमुत्तरार्थमिह तु स्पष्टार्थमिति कौस्तुभस्तु चिन्त्य एव।

न च पूर्वसूत्रस्थार्थवद्ग्रहणस्य सार्थक्यापत्त्या कृत्तद्धितसूत्रे तदन्तविधिज्ञापकता न स्यात्। तदन्तविध्यभावस्तु संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति वचनादिति वाच्यम। तस्य सार्थक्येऽपि तदंशे स्वरितत्वप्रतिज्ञासामर्थ्यात्तदन्तविधिज्ञापकतासंभवात्।

न च सुप्तिङ्सूत्रस्थभाष्यविरोधः 'अर्थवदिति वर्तते कृत्तद्धितान्तं चैवार्थवत्। न केवलाः कृतस्तद्धिता वा' इति हि तत्र भाष्यम्। तस्य च कृत्तद्धितानामर्थवत्त्वाव्यभिचारादनुवृत्तस्यार्थवत्पदस्याव्यावर्तकतायामपि स्वरितत्वप्रतिज्ञासामर्थ्याद्विशिष्टार्थवत्युपसंहारवदित्याशयात्। एतेन उत्तरार्थमेवेति सुप्तिङन्तमिति सूत्रे भाष्ये ध्वनितमित्यपास्तम्। स्वरितत्वप्रतिज्ञायां त्वर्थवदिति वर्तत इति भाष्यमेव मानम्।

यत्तु न च पूर्वसूत्रे चरितार्थता धातुप्रत्ययपर्युदासेनैव तल्लाभादित्युक्तं तच्चिन्त्यम्। उक्तभाष्यविरोधादिति ध्येयम्।

धातुपर्युदासोऽहन्नित्यादौ नलोपवारणार्थः । यथोद्देशपक्षे विशेषविहितैस्तिबादिभिर्बाधान्न सत्यपि प्रातिपदिकत्वे सुबाद्युत्पत्तिर्न वा नलोप इति धातुपर्युदासस्याप्रयोजकत्वेऽपि कार्यकालपक्षे विशेषविहितानां लोपेन लोपविध्येकवाक्यतापन्नप्रातिपदिकत्वेन नलोपो दुर्वार इति तद्वारणाय धातुपर्युदास आवश्यक एव । न च प्रत्ययलक्षणेन प्रत्ययान्तप्रतिषेधेनैव निर्वाहे मास्तु धातुपर्युदास इति वाच्यम् । न ङिसंबुद्ध्योरितिज्ञापकात् नलोपे विधीयमाने प्रत्ययलक्षणेनाऽप्रत्यय इति निषेधाभावात् ।

यत्तु प्रत्ययलक्षणेन प्रत्ययान्तपर्युदास इत्युक्तं तच्चिन्त्यं, प्रत्ययान्तभिन्नकार्यत्वेन प्रत्ययलक्षणाभावात् । अत एव सूत्रशेषभाष्ये राजा तक्षा प्रत्ययलक्षणेन प्रत्ययो नेति प्रतिषेधः प्राप्नोतीत्युक्त्वा तदापि दूषणखण्डनाय 'अथवा पुनरस्तु पर्युदासः' इत्युक्तम् ।

पर्युदासेऽपि प्रत्ययलक्षणे तूक्तदूषणतादवस्थ्यादथवेतिग्रन्थोऽसंगत एव स्यात् । इह 'अधातुरिति शक्यमवक्तुम् । कस्मान्न भवति अहन्वृत्रहन्निति । आचार्यप्रवृत्तिर्ज्ञापयति न धातोः प्रातिपदिकसंज्ञा भवतीति । यदयं सुपो धातुप्रातिपदिकयोरिति धातुग्रहणं करोति । नैतदस्ति ज्ञापकं प्रतिषिद्धार्थमेतत्स्यात्' इति भाष्यं प्रत्ययान्तखण्डनपरं न धातुपर्युदासखण्डनपरमिति कृत्तद्धितान्तस्यैवेति नियमो भविष्यति इत्यादिभाष्यानुवादेन स्फुटीकरिष्यामः ।

अत्र भाष्ये प्रतिषिद्धार्थमेतत्स्यादित्यस्योदाहरणं श्येनायत इति । अत्राप्रत्यय इति प्रातिपदिकसंज्ञाया निषिद्धत्वादन्तर्वर्तिसुब्लोपार्थं धातुग्रहणस्यावश्यकतैवेति भावः ।

यद्यपि शक्यमवक्तुमिति ग्रन्थात्कुशकाशावलम्बेनेहैव धातुपर्युदासखण्डनपरमिदमिति प्रतीयते । तथा हि प्रत्ययान्तस्य प्रातिपदिकत्वे न किंचिदनिष्टम् । न च काण्डे कुड्य इत्यादौ ह्रस्वो नपुंसक इति ह्रस्वप्रसङ्गः, नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मत्वेन नपुंसके च वर्तमानस्येत्यर्थेनैव सिद्धे प्रातिपदिकग्रहणस्य सत्वप्रधानप्रातिपदिकग्रहणार्थत्वज्ञापनात् । न च सुबुत्पत्तिः, संख्याकर्मादेरभावात् । नाऽपि हुंफडादिवत्प्रातिपदिकत्वसामर्थ्यादौत्सर्गिकैकवचनापत्तिः, सुप्तिङन्तसूत्रस्थ तिङ्ग्रहणेन तदनुत्पत्तिबोधनात् । न च सुपो धात्विति लुगापत्तिः, धातुसाहचर्येण विभक्तीतरसमभिव्याहृतस्यैव तेन लुग्विधानात् । पचेरन्सर्वस्मिन्नित्यादौ तूच्चारणसामर्थ्यान्न लोपः ।

एवं स्थिते श्येनायत इत्यादेः प्रातिपदिकत्वेनैव सुब्लुकि सिद्धे सुपो-धात्वित्यत्र क्रियमाणं धातुग्रहणमेव ज्ञापयति न धातोः प्रातिपदिकत्वं भवतीति धातुपर्युदासो मास्त्विति । तथाप्युत्तरग्रन्थविरोधान्न स्थिरमेतत् । यत्तु उक्तरीत्या प्रत्ययान्तपर्युदासो न कार्य इति सूत्रशेषे भाष्ये ध्वनितमित्युक्तं तच्चिन्त्यम् । अप्रत्यय इति पर्युदासप्रसज्यप्रतिषेधपक्षयोरुभयोरपि पूर्वान्तवत्त्वेन प्रातिपदिकत्वेन ह्रस्वत्वे प्रसक्ते विभक्त्येकदेशस्य पूर्वान्तवत्त्वाभावे ह्रस्वसूत्रगतप्रातिपदिकग्रहणस्य ज्ञापकत्वेनोदाहरणात् । अन्यथा ज्ञापकत्वे प्रत्युक्ते पूर्वभाष्यग्रन्थस्यालग्नकतापत्तेः । पूर्वभाष्यदूषणतात्पर्यककैयटग्रन्थस्तु प्रामादिक एवेत्यनुपदं वक्ष्यते इति सहृदयैर्विवेचनीयम् ।

'प्रत्यय इति किं काण्डे कुड्येऽप्रत्यय इति शक्यमवक्तुम् । कस्मान्न भवति काण्डे कुड्ये इति । कृत्तद्धितग्रहणं नियमार्थं भविष्यति कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्य' इति भाष्यम् । इदं च प्रत्ययान्तपर्युदासखण्डनपरम् । तथा हि अप्रत्यय इत्यत्र प्रत्ययपदं प्रत्ययान्तपरं पर्युदासपक्षे संज्ञाविधौ तदन्तविध्यभावेऽपि विभक्तीतरानपेक्ष्यार्थबोधकत्वरूपार्थवत्त्वग्रहात्प्रत्ययपर्युदासवैयर्थ्यात्तात्पर्यानुपपत्त्या प्रत्ययान्ते लक्षणासत्त्वात् । स च प्रत्ययान्तपर्युदासो न कार्यः । प्रत्ययान्तस्य चेत्कृत्तद्धितान्तस्यैवेति नियमाश्रयणात् । इह कृद्ग्रहणनियामकत्वकथनेन धातुपर्युदासखण्डनमप्यभिप्रेतम् । तद्धीति(?)धातोः प्रातिपदिकत्वे न कापि क्षतिः ।

यथोद्देशेऽहन्नित्यादौ धातोः प्रातिपदिकत्वेन सुबापादनं दुर्वचम् । येन नाप्राप्तिन्यायेन तिबादीनामपवादकत्वात् । तल्लोपाव्यवहितोत्तरक्षणेऽपि न तत्प्राप्तिः अपवादविषयपरिहारेणोत्सर्गस्य प्रवृत्तेः । परिहृत्यापवादविषयमुत्सर्गोऽभिनिविशत इति स्मरणाच्च । न च यत्रापवादश्रुतिस्तत्र नोत्सर्गोऽत्र तु नापवादश्रुतिः । देवदत्तहन्तृन्यायेन सुपउन्मज्जनात् । न च 'तौ सत्' इत्यादिनिर्देशैस्तन्न्यायस्यानित्यत्वम् । हते देवदत्ते तद्धन्तरि हतेऽपि नोन्मज्जनम् । देवदत्तस्य हतत्वारोपे तु सुतरां हन्तुमुद्यतस्य हनने तूज्जीवनं भवत्येवेति न्यायशरीरम् । तावित्यादौ वृद्धिहन्तुः पूर्वसवर्णस्य हननोद्यमसजातीयप्रसङ्गमात्रं न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति न तत्रैतन्न्यायविषय इति (न) तेनास्यानित्यत्वबोधनमित्यभिधानात् ।

अन्यथा जश्त्वशास्त्रप्रवृत्त्युत्तरकाले चर्त्वशास्त्रस्य चारितार्थ्यान्नापवादकत्वं स्यात् । तत्र हि जश्त्वशास्त्रप्रवृत्तिकाले नियतप्राप्तत्वेन तत्प्राप्तिविषये चारितार्थ्याभावमात्रेण येननाप्राप्तिन्यायेन तदपवादकत्वम् । अन्यथा ब्राह्मणत्वावच्छेदेन विहितदधिदानस्य कौण्डिन्योद्देश्यकतक्रदानेन बाधो न स्यात् । तद्दानात्पूर्वं तदुत्तरं वा चारितार्थ्यात् ।

कौण्डिन्यस्य दधिदानप्राप्तिस्तु न, ब्राह्मणेभ्यो दधि देयं न कौण्डिन्याय देयमित्यत्र न देयमिति विशेषनिषेधश्रुत्या ब्राह्मणेभ्यो दधीत्यादौ ब्राह्मणपदस्य कौण्डिन्यातिरिक्तब्राह्मणपरत्वेन तद्वाक्यस्य कौण्डिन्यातिरिक्तब्राह्मणसंप्रदानकदधिदानबोधकत्वादिति दीधितिकारादयः ।

किंच पादोन्यतरस्यामित्यस्य टाबृचीत्यपवादो न स्यात् । तदभावपक्षेऽस्य चारितार्थ्यात् । तस्मादुक्तमेव रमणीयम् । सत्यपि संभवे बाधनं भवतीति मिदचोन्त्यादिसूत्रस्थं भाष्यमप्यत एव संगच्छते ।

लविधौ तिबादिविधौ च भूवादय इत्यस्योपस्थितेर्निरवकाशतया न सुबुत्पत्तिरित्यपि केचित् । न चैवमपि नलोपो दुर्वारः, नलोपसूत्रे प्रातिपदिकग्रहणस्य सत्वप्रधानप्रातिपदिकग्रहार्थत्वात् । रामानित्यादौ तु विधानसामर्थ्यान्न लोप इति ।

एवं स्थिते कृद्ग्रहणस्य नियामकत्वमपि संगतम् ।

कैयटस्तु कृत्तद्धितग्रहणमिति प्रतीकमुपादाय तद्धितग्रहणमत्र नियमार्थं कृद्ग्रहणं प्रतिषेधार्थं भिद् छिद् इति । अत्र त्वधातुरिति प्रतिषेधप्रसङ्ग इत्याह ।

यत्तु प्रत्ययपर्युदासे सात्पदाद्योरिति सूत्रे सातिग्रहणं व्यर्थं स्यादिति मनोरमायामुक्तं तच्चिन्त्यम् । सोढदूसमरीसजर्थत्वात् । आचक्षाणःणिजन्तात् क्विप्यनिष्टरूपप्रसङ्गात् । सोढे दोषस्य दुरुद्धरत्वात् । आदेशप्रत्यययोरित्यत्र साद्ग्रहणाद्रुसिग्रहणाच्च नोभयत्र सामानाधिकरण्यं वैयधिकरण्यं च, तत्र प्रत्ययावयववृत्तित्वात्प्रत्ययशब्दस्य सामानाधिकरण्येऽपि वैयधिकरण्यफललाभ इति कैयटेनार्थवत्ताध्वननाच्च ।

गुरुचरणास्तु प्रत्ययान्तं चेति प्रतीकमुपादाय, ननु प्रत्ययान्तपर्युदासो व्यर्थः कृत्तद्धितेतिसूत्रे लिङ्ध्वुगित्यादावधातुपर्युदासबाधाय कृद्ग्रहणस्य विधायकत्वेऽपि तद्धितग्रहणस्य प्रत्ययान्तस्य चेत्प्रातिपदिकत्वं तर्हि तद्धितान्तस्यैवेति नियमार्थतया तद्धितेतरप्रत्ययान्तस्य प्रातिपदिकसंज्ञाव्यावृत्तिसिद्धेरिति चेदित्याशङ्क्य कर्त्ता कारक इत्यादावपि संज्ञानिवृत्तिप्रसङ्गः स्यात् ।

कृद्ग्रहणस्य तद्धितनियमेन परेण बाधात्। न च बाध्यसामान्यचिन्तायां परस्यापि तद्धितनियमस्य कृद्ग्रहणेनैव बाधः सुवचः, समासनियमस्यापि बाधापत्तौ मूलकेनोपदंशमिति वाक्यस्य निवृत्तिप्रसङ्ग इति दीक्षितानामाशय इत्युत्तरयांचक्रुः।

अत्र नामग्रहणादरुचिर्ध्वन्यते कृद्ग्रहणस्य नियामकत्वादयं दोषो दुर्वचः। तद्धितग्रहणस्यैव नियामकत्वे ह्ययं दोषः।

अस्तु वा कैयटानुसारात्कृद्ग्रहणस्य विध्यर्थत्वं तथापि न दोषः। बाध्यसामान्यचिन्तायां परस्यापि तद्धितनियमस्य बाधात्। मूलकेनोपदंशमित्यादौ तु शब्दाधिकारमाश्रित्यार्थवद्ग्रहणानुवृत्तावेकार्थीभावविवक्षणान्न दोषः। स्वीकृतं चैवमेव कौस्तुभ इति।

यत्तु सात्पदाद्योरिति सातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे पूर्वसूत्रस्थप्रत्ययग्रहणं सामर्थ्यात्तदन्तपरमित्युक्तम्। तच्चिन्त्यम्। प्रत्ययप्रातिपदिकत्वाभावज्ञापकताया दूषितत्वात्। न च ङ्याब्ग्रहणमेव प्रत्ययप्रातिपदिकत्वाभावज्ञापकमस्तु, अस्तु कृत्तद्धितग्रहणं विध्यर्थमिति शङ्कनीयम्। लिङ्गविशिष्टपरिभाषया सिद्धेरज्ञापकत्वात्। न चाप्रत्यय इति बहुव्रीहिरेवास्त्विति चेन्मैवं, तथा सति बहुपटु इत्यस्य संज्ञाभावप्रसङ्गात्। एवं स्थिते प्रत्ययान्तपर्युदासो मास्त्विति सिद्धम्।

इहार्थवत्यनेकपदप्रसङ्ग इति वार्तिकम्। तत्रानेकं च तत्पदं चेति विग्रहः। अनेकस्यापि पदस्येति व्याख्यानुरोधात्। अत्र च समुदितस्येति बोध्यम्। अप्रत्यय इत्युक्ते प्रतिपदप्रसङ्गात्।

कैयटस्त्वनेकं पदमस्मिन्नित्यनेकपदं समुदाय इति व्याख्यत्। न च समुदायस्याप्रसङ्गः। प्रत्ययग्रहणे यस्मात्स विहित इति वचनात्समुदायस्याप्रत्ययान्तत्वात्। गवानदित्यादेराचक्षाणणिच्प्रकृतिकक्विबन्तसमुदायस्य प्रत्ययान्तत्वेऽप्यवाक्यत्वान्न दोषः। न च स्वस्वार्थप्रातिपदिकपदानामाकाङ्क्षासन्निधियोग्यता च संसृष्टतदर्थानां च वाक्यवाक्यार्थत्वे वाक्यस्य नित्यध्वनिव्यङ्ग्यत्वात्, पदार्थसंसर्गरूपविशिष्टार्थस्य च तद्वाच्यत्वात्। अन्यथा शब्दजन्यप्रतीतिविषयताशालित्वानापत्तेः।

न चाशक्योऽपि संसर्गो वाक्यसामर्थ्याद्भासते अननुगमात्। परेषां तु वाक्यस्याशक्यत्वात्समासग्रहो व्यर्थ एव स्यात्। न चेष्टापत्तिः अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति ग्रन्थानवतारप्रसङ्गात्। अर्थव-

त्यनेकपदप्रसङ्ग इति पूर्वपक्षवार्तिकोदाहरणत्वेनोपन्यस्तं दशदाडिमादि परिहृत्यैवमपि वाक्यप्रतिषेधोऽर्थवत्त्वादित्युत्तरवार्तिकव्याख्यावसरे देवदत्त गामभ्याज शुक्लां देवदत्त गामभ्याज कृष्णामित्युदाहृत्यार्थवद्धयेतद्वाक्यमित्युक्तेः । तुल्यन्यायेन कृत्तद्धितान्तयोरप्येकार्थीभावाभावप्रयुक्तानर्थक्ययोः प्रातिपदिकत्वाप्राप्तेः प्रत्ययान्तपर्युदासखण्डनपरकृत्तद्धितनियमप्रातिपदिकभाष्यग्रन्थासंगत्यापत्तेश्च । अतिङ् प्रातिपदिकमिति न्यासेन समासग्रहणस्य नियमार्थत्वं तु तन्न्याय(स?)स्य प्रतिवर्णं प्रसक्तत्वादकिंचित्करम् । इत्थं चान्यथानुपपन्नप्रातिपदिकत्वमेव समासादावर्थवत्त्वानुमापकमित्यर्थवदित्यादिन्यास एव समञ्जसः ।

न च स्वघटकपदवृत्त्यार्थबोधकत्वमेवार्थवत्त्वं, न तु वृत्त्यार्थबोधकत्वम् । अनर्थकदशदाडिमादिसमुदायेऽतिप्रसङ्गात् । न चेष्टापत्तिः । अनर्थकत्वेन वारणस्याकराभिहितस्यासंगतिप्रसङ्गात् । समासादावनेकार्थीभावे हि तन्निष्ठप्रकारतानिरूपितविशेष्यतापर्याप्त्यधिकरणत्वमूलक—'पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेन' इति व्युत्पत्तेः प्राप्तोदकादौ भग्नतया राजपुरुषादौ राज्ञि सुन्दरत्वादिविशेषणापत्तिप्रसङ्गः । तद्वारणार्थं च वृत्तस्य विशेषणयोगो नेति वचनारम्भे गौरवम् । राजपुरुषोऽश्वश्चेत्यादिवारणाय वृत्तौ सजातीयविशेष्यान्तरयोगो नेत्यपि वचनं कार्यं स्यात् । साजात्यं चेहैकपदबोध्यत्वेन । तेन राजगोपुरुषाविसादौ विशेष्यान्तराव्यवच्छेदः ।

एवं राजपुरुषो भार्यायाश्चेत्येतद्वारणाय सजातीयविशेषणान्तरयोगो नेत्यपि वचनं कार्यं स्यात् । राजदेवदत्तपुरुष इत्यादेरत्राव्यवच्छेदः । द्वन्द्वे चशब्दप्रयोगवारणायापि वचनमारभ्यं स्यात् । एवं निष्कौशाम्ब्यादौ क्रान्तादिप्रयोगवारणायापि महाविभाषाधिकारश्चारम्भणीयः स्यात् ।

न चैकार्थीभाववादिमते निषादस्थपत्यधिकरणविरोधः । पूर्वपक्षाभावेन सिद्धान्तस्य निर्दलत्वात् । न च शक्तितज्ज्ञानहेतुतयोरिव लक्षणातज्ज्ञानहेतुतयोरपि क्लृप्तत्वात् षष्ठीसमास एव युक्तः । तथा सति निषादानां स्थपतेर्लब्धविद्यस्य त्रैवर्णिकस्य याजनसंभवान्नापूर्वविद्याप्रयुक्तिकल्पनं न वा स्त्रीशूद्रौ नाधीयातामिति निषेधसंकोच इति वाच्यम् । एवमपि सिद्धान्तभङ्गापत्तेरिति वाच्यम् । वेदे कर्मधारयसंभवे नान्यसमास इति नियमाङ्गीकारात् । न चातिरेकः तुल्यत्वात् । न च क्लृप्तत्वान्नातिरिच्यतेऽसमत्कृतनियमः । वचनान्तरातिरेकवदशेषत्वात , सिद्धान्ते तु समानाधिकरणप्राति-

पदिकार्थयोरभेदान्वय इत्यादीनां व्युत्पत्तिकदम्बाना भिन्नोपस्थिति-विषयत्वात्। एकार्थीभावस्य च प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतानां पदानां विशिष्टैकार्थोपस्थितिजनकत्वरूपत्वादशेषः। विवेचितं चैतद्विस्तरेण ग्रन्थान्तरेषु।

व्यपेक्षावादिमते हि 'नित्यं समासेऽनुत्तरपदस्थस्य' इति सूत्रगतभाष्य-मसंगतं स्यात्। तत्र हि समासग्रहात्पूर्वसूत्रे व्यपेक्षालक्षणे सामर्थ्ये गृहीते वाक्ये एव षत्वविकल्पो न समासे नित्यग्रहात्तु न विकल्पानुवृत्तिः। व्युत्पत्तिपक्षे च इदम्।

अव्युत्पत्तिपक्षे त्विदुदुपधस्येति नित्ये सिद्धेऽनुत्तरपदस्थस्येति षत्वप्रति-षेधमात्रार्थम्।

वस्तुतो व्युत्पत्तिपक्ष एव ससंश (?) आदरणाय सर्पिषा यजुषेत्यादिसि-द्धय इति तत्रोक्तम्। व्यपेक्षापक्षे त्वाश्रीयमाणे 'इसुसोः सामर्थ्ये' इत्यनेन विकल्पे प्राप्ते नित्यार्थमिदमित्यर्थः स्यात्। तच्च भाष्यकृतामनभिप्रेतमेव।

किं च परमसर्पिः कुण्डिकेत्यादौ विकल्पप्रसङ्गः स्यात्। तथा चानुत्तर-पदस्येति किं परमसर्पिःकुण्डिकेत्युदाहृत्येदानीमनेन मुक्ते पूर्वेण षत्वं वि-भाषा कस्मान्न भवति इसुसोः सामर्थ्ये इतीत्याशङ्क्य—

नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः।
तस्मिन् षत्वं कार्यं तद्युक्तं तच्चमेते ह(?)॥

इतिवार्तिकव्याख्यायां व्यपेक्षासामर्थ्ये पूर्वयोगः न चात्र व्यपेक्षासाम-र्थ्यमिति समाधाय किं पुनः कारणं पूर्वस्मिन् योगे व्यपेक्षासामर्थ्यमाश्री-यते न पुनरेकार्थीभावो यथान्यत्रेति पुनराशङ्क्यैकार्थे सति वाक्ये षत्वं न स्यात् सर्पिष्करोति सर्पिःकरोतीत्युक्तं तदसंगतं स्यात्। अपि चानेन ग्रन्थेन कण्ठरवेणैव भाष्यकृद्भिरुक्तम् 'समासे व्यपेक्षा नास्तीति' तत्कथं महर्षिवचनमनादृत्य समासे व्यपेक्षामङ्गीकुर्वते तार्किका इति सहृदयैराक-लनीयम्।

नन्वस्तु समासादावेकार्थीभावः, तथापि वाक्यस्य प्रातिपदिकत्वं कुतो नेति चेत्। अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति भाष्यात्। अ-र्थवतां सुबन्तानां समुदायोऽत्र विवक्षितः। तुल्यजातीयस्य नियमः कश्चित्तु-ल्यजातीयः यथाजातीयकानां समासः कथं जातीयकानां समासः सुब-न्तानामित्यग्रिमभाष्यस्वरसात्। अन्यथा बहुरवा(?)दावतिप्रसङ्गात्। समासस्य सुबन्तकृदन्तघटितत्वेऽपि प्राचुर्यादेवमुक्तम्।

भेदसंसर्गद्वारकार्थवत्त्वयुक्तसुबन्तासुबन्तानामश्वक्रीतीत्यादौ गतिकारकेत्यादिवचनात्समासदर्शनात्सुबन्तानामित्युपलक्षणमिति कैयटः। सजातीयत्वाभावेऽप्यर्थवत्समुदायानां समासेत्यत्रार्थवत्पदस्य स्वातन्त्र्येण प्रयोगार्हार्थवदित्यर्थः । गवित्ययमित्यादावनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तत्त्वमस्त्येव। प्रकृतिप्रत्ययसमुदायस्य तु न व्यावृत्तिः। प्रत्ययस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात् ।

सरूपसूत्रे भाष्ये सुबन्तानामित्यनेनेदमेवोपलक्ष्यत इति बोध्यमित्यपि केचित् । न चैवं सुप्तिङ्समुदायस्य प्रसङ्गः । जहि कर्मणा बहुलमाभीक्ष्ण्ये इत्यनेन नियमात् । न चैवमपि तिङ्समुदायस्य प्रसङ्गः, आख्यातमाख्यातेनेति नियमेन निर्वाहात् ।

यत्तु यत्र संघाते पूर्वो भागः पदमुत्तरस्तु प्रत्ययो नेत्याद्याकारको नियमः, जन्मवानित्यादिवारणायोत्तरेति, राज इयानित्यादौ तु पूर्वभागप्रकृतिकप्रत्ययाभावविवक्षणाददोष इत्याहुः । तच्चिन्त्यम् । गवित्ययमाहेत्यादौ दोषस्य स्फुटतरत्वात् । वृषण्वसुरित्यादिसमासे पूर्वभागस्य भत्वेन तत्साजात्याभावेन पूर्वो भागः पदमित्यर्थलाभासंभवात् ।

यदपि प्रकृतिप्रत्ययभावानापन्नसंघातविषयको नियम इत्युक्तं, तदपि चिन्त्यम्। एकैकस्मै देहीत्यादौ द्विरुक्तैकशब्दस्यैकं बहुव्रीहिवदिति बहुव्रीहिवद्भावेऽपि प्रातिपदिकसंज्ञानिवृत्तिप्रसङ्गात् । अतिदेशस्य स्वाश्रयाविरुद्धकार्यप्रतिपादकत्वमिति क्षियोदीर्घादिति सूत्रे भाष्येऽभिधानात् ।

न च बहुव्रीहौ दृष्टस्य प्रातिपदिकत्वस्यानेनैव विधिः । एवमपि नियमवारणात् । न चासावर्थवत्सूत्रस्यैव नियमः । जन्मवानित्यादौ तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वानिवृत्तये यत्र संघातेत्यादिनियमशरीरेऽधिकप्रक्षेपस्य वैयर्थ्यप्रसङ्गात् । नाप्यतिदेशसामर्थ्यम् । स्वरपुंव(द)तिदेशेन सार्थक्यात् । न चापि पक्षान्तरे प्रातिपदिकत्वं सुतरां नियमप्रसङ्गात् । तस्मान्नायं नियमो युक्तः ।

किंचास्मिन्सति समुदायप्रातिपदिकत्वाभावात्सुबनापत्तिः । स्थानेद्विर्वचनपक्षेऽप्याश्रीयमाणे स्थानिवत्त्वेन प्रातिपदिकत्वं दुर्वचम् । स्थानिनः सुबन्तत्वेन समुदायस्यापि सुबन्तत्वात् ।

किंचैवं प्रातिपदिकात्तद्धिता इति पक्षे पौनःपुनिकं इत्यादि(?)सिद्धिप्रसङ्गः । श्रूयमाणप्रत्ययान्तस्यैव प्रातिपदिकत्वनिषेधेऽपि प्रकृतनियमेन तद्वारणात् । अपि चैवम्(?)। वस्तुतस्तु द्विःप्रयोगपक्षो दुर्बलः। पौनःपुन्यं,

पौनःपुनिकः, इति समुदायात् ष्यञ्ठञोरनुपपत्तिप्रसङ्गात् । तत्र हि अन्तरङ्गत्वात्सुब्लुकि द्वित्वं ततश्च समुदायस्य सुबन्तत्वाभावात्प्रातिपदिकत्वाभावाच्च तदुत्पत्तिः । प्रातिपदिकत्वं तु समासकृतनियमान्नेति द्विरुक्तप्रक्रियास्थग्रन्थासंगतिप्रसङ्गः । स्थाने द्विर्वचनपक्षेऽपि दोषात् ।

न च समुदायादेकविभक्तौ परत इति पक्षस्योक्तिसंभवायायं नियमः सुबन्तानामित्यादिनियमेनाऽपि निर्वाहादित्यलमाकरोक्तनियमविरुद्धनियमवचनचातुरीचणत्वेनेत्युपरम्यते ।

यत्तु समासस्य लुप्तविभक्त्यन्तत्वात्कृदादिसूत्रे समासग्रहणे तत्सूत्रस्यार्थवदादिप्रपञ्चत्वं मिश्राद्युक्तं विरुध्येतेत्याशङ्क्य तत्र प्रत्यासत्त्या प्रत्ययपदस्य कृत्तद्धितान्तसमासेतरप्रत्ययान्तभिन्नपरत्वमित्युक्तं तच्चिन्त्यम् । समासस्याप्रत्ययान्ततया विध्यर्थत्वायोगात् ।

यदपि कृत्तद्धितेति व्यर्थम् । ते देवानित्यादिप्रकृतिप्रत्ययसमुदायवारणार्थवदादिसूत्रेऽप्रत्ययपदस्य प्रत्ययतदन्तान्यपरत्वेऽपि विभक्तिविभक्त्यन्तोभयभिन्नपरत्वाङ्गीकारात् । समासस्य तु स्वघटकपदवृत्त्यार्थबोधकत्वरूपार्थवत्त्वादेव निर्वाह इति तदपि व्यर्थमित्यूचुः । तदपि चिन्त्यम् । प्राग्दिशीयाधिकारपठितविभक्तिसंज्ञकप्रत्ययान्तकानां संज्ञानापत्तेः । तेषु च त्यदाद्यत्वाद्यनापत्तेश्च समासग्रहणस्य नियमार्थत्वान्न वैयर्थ्यमिति न किंचिदेतत् ।

खपुष्पशशशृङ्गादेरपि बुद्धिपरिकल्पितसंबन्ध आरोपितखादिसंबन्धवत्पुष्पादौ च शक्तिरस्त्येवेति न तदर्थं समासग्रहः । न च बाधबुद्धेः प्रतिबन्धकत्वान्न शाब्दबुद्धेरुदयः ।

यस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः ।
गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरात्
मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ॥

इत्यादेस्तदुदयेन तस्याप्रतिबन्धकत्वात् । उक्तं च खण्डनकारैः—

"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति ।

नन्वेवमप्यसमर्थसमासार्थं तत्स्यादिति चेत्, धर्मिग्राहकमानादेव तत्सिद्धिरित्यवेहि । न च त्वन्मते वाक्यस्य शक्तत्वेन घटमानयेत्यादौ नीलादिविशेषणयोग इति भ्रमितव्यम् । विशेषणविशेष्यभावांशे तच्छक्तावपि तद्घटकपदानां स्वस्वार्थशक्तिक्षत्यभावात् । समासस्य त्वनेवंविधत्वान्न तदर्थैकदेशे

विशेषणादियोगः । वाक्यस्य स्फोटरूपतया नीलघटमानय, घटमानयेत्यादेर्भेदएव वेत्यदोषः । न चैवं बहुगोमत्केत्यादौ विभक्तेः पुरस्तात्समास इति पक्षे विशिष्टस्य सुबन्तत्वाभावेन सुबन्तात्तद्धित इति सिद्धान्तविरोधः। तेषामतिरिक्तार्थाभावेन परिपूर्णं पदमिति न्यायाविषयतया तत्सिद्धान्तस्य समासान्तेऽभावादित्याहुः ।

वस्तुतः समासार्थककल्प्यमानालौकिकप्रक्रियावाक्यस्य प्रातिपदिकत्वादेव तद्धितः सुलभः । प्रशंसायां रूपबितिसूत्रस्थभाष्यप्रामाण्यादयमपि पक्षः संमत इति ग्रन्थान्तरे प्रतिपादितत्वात् । यदि विशिष्टस्य प्रातिपदिकत्वात्सुपि सुबन्ता इति तद्धितः संभवतीत्युच्यते तर्ह्यस्तु सोऽपि, न किंचिदनुपपन्नम् ।

अनर्थकस्य प्रातिपदिकत्वं त्वधिपरी अनर्थकाविति ज्ञापकादिति भाष्यकृतः । कृत्तद्धितसमासाश्चेत्यनुक्तसमुच्चयार्थेन चेन संग्राह्यमित्यपि कश्चित् । तत्संज्ञाफलं स्वर इति सर्वं शिवम् ।

आकरोक्तां दिशं गत्वा मया कनकमीप्सता ।<br>
अलम्भि हीरमुक्तालो वाग्देवी वदनाम्बुजात् ॥ १ ॥<br>
मणिग्रन्थनचातुर्यं पन्नगेन्द्रात्प्रभोर्मया ।<br>
कालेन भूयसा लब्धमर्थवत्सूत्रमेव तु ॥ २ ॥

इति श्रीगोडबोलोपाख्यनारायणकृतः प्रातिपदिक-<br>
संज्ञावादः समाप्तिमगमत् ।

---

# वाक्यवादः ।

श्रीगणेशाय नमः ।

अथ किमिदं वाक्यं नाम । 'एकतिङ् वाक्यम्' इति भाष्यात् 'एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमूहो वाक्यम्' इति वैयाकरणाः । तेन पचति भवतीत्यादौ पश्य मृगो धावतीत्यादौ च क्रियापदस्यानेकत्वेऽपि न एकवाक्यताव्याघातः ।

'नहि क्रियाविनिर्मुक्तं वाक्यमस्ति' इति भाष्यात् 'अस्तिर्भवन्तिपरः प्रथमपुरुषः' इत्यादिकात्यायनस्मरणाच्च सर्वत्र समुचितः क्रियापदाध्याहारः । न चास्तु क्रियापदाध्याहारस्तथाऽपि बोधविशेष्यकत्वं प्रथमान्तार्थस्यैवेति वाच्यम् । पश्य मृगो धावतीत्यादावगतेः प्रथमान्तार्थयोर्विशेष्यत्वे वाक्य भेदप्रसङ्गात् । मृगस्य दर्शनक्रियायां कर्मतयान्वये मृगपदोत्तरं द्वितीयापत्तेः । द्वितीयायां च सत्यां "लटः शतृशानचावप्रथमासमानाधिकरणे" इत्यनुशासनाल्लटः शत्रादेशे धावन्तं मृगं पश्येत्येव स्यात्तथा च पश्य मृगो धावतीति वाक्यस्योच्छेदः स्यात् । तमिति अध्याहारे वाक्यभेदो गौरवं च ।

न च वाक्यभेदे क्षतिविरह इति वाच्यम् । तथा सति 'तिङ्ङतिङः' इति सूत्रेऽतिङ इत्यस्य व्यावर्त्याभावेन वैयर्थ्यापत्तेः । निघातस्वरस्य च एकवाक्यताधीनत्वात् । एकवाक्यत्वाभावे तदनुपपत्तेः । न च हरेर्दशावतारा इत्यत्र का क्रिया अध्याहार्या । भवन्तीत्यवेहि । परं तु यत्रायोग्यता न तत्र लडर्थवर्तमानत्वान्वयः, अविवक्षितत्वात् । वर्तमानसामीप्ये वा लट् । सामीप्यं च भूतभविष्यद्रूपमत एव जयन्ति कृष्णस्य दशावतारा इति मुकुटः ।

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।

इत्यादौ न लडर्थविवक्षेति मिश्राः । वर्तमानार्थकलट्प्रत्ययान्तत्वेनेत्यस्यालोकस्य तत्सामीप्यार्थकलट्प्रत्ययान्तत्वेनेति कण्टकोद्धारे मधुसूदनठक्कुराः ।

अत्र नैयायिकाः–निःक्रियस्यापि वाक्यस्य सत्त्वात्त्रिविधं वाक्यम् । तथा

हि सुबन्तसमूहः, तिङन्तसमूहः, सुबन्ततिङन्तसमूहश्च । यथा त्रयः कालाः, पचति भवति, चैत्रः पश्यति इत्यादि । एकवाक्यता त्वेकमुख्यविशेष्यकबोधजनकत्वेन, पश्य मृगो धावतीत्यादावपि तस्याक्षतेः । तथा हि धावनकर्तृमृगकर्मकदर्शनाश्रयस्त्वमित्यन्वयबोधाद्वाक्यार्थस्यात्र कर्मतासंसर्गेण दृशिक्रियायां भानं, वाक्यस्य चार्थवत्त्वाभावेन न प्रातिपदिकप्रयुक्तद्वितीयाद्यापत्तिः । न च वाक्यभेदप्रसङ्गः ।

किं च नहि क्रियाविनिर्मुक्तं वाक्यमस्तीति फणिनो धरणीभारविजृम्भणभणतिरेव ।

तथा हि—त्रयः काला इत्यादौ क्रियाविनिर्मुक्तवाक्यस्य सर्वजनीनत्वात् । नह्यत्र काऽपि क्रियाऽध्याहर्तुं शक्या । अपि च क्रियाविशेष्यत्वे 'प्रयाति पुरुषस्तस्य चरणावभिवादय' इत्यादौ तच्छब्देन पुरुषस्य परामर्शो न स्यात् । तस्य विशेषणत्वेनोपस्थितत्वात् । अन्यथा—

देशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ।

इत्यादेरपि साधुत्वापत्तेः । इत्याद्यनल्पं जल्पन्ति स्म ।

अत्रेदं भावयामः—पश्य मृगो धावतीत्यत्र तादृशमृगस्य दर्शनक्रियायां कर्मतासंसर्गेणान्वयो न भवति । नामार्थधात्वर्थयोरभेदातिरिक्तसंबन्धेन साक्षादन्वयबोधस्याव्युत्पन्नत्वात् । अन्यथा तण्डुलः पचतीत्यादेरपि साधुत्वापत्तेः । न च धावनविशिष्टमृगस्य वाक्यार्थत्वेन नामार्थत्वाभावान्न दोष इति वाच्यम् । तथा सति मृगपदोत्तरं प्रथमापि न स्यात् । तस्या अपि प्रातिपदिकाश्रयत्वात् । किंच मृगकर्तृकोत्कटधावनस्य दृशिक्रियाया कर्मत्वेन विवक्षास्थल एव प्रयुक्तस्य पश्य मृगो धावतीत्यस्यैकवाक्यत्वं फणिसंमतं तच्चानुपपन्नमेव ।

फणिसंमतिस्तु हेलाराजेन स्पष्टीकृता । तथा हि—

सुबन्तं हि यथानेकं सुबन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥

इत्युक्त्वा तेन धावनक्रियाया एव (कर्मत्व) विवक्षायां न प्रतीकार इत्याशयः । अन्यथा धावन्तं मृगं पश्येत्येव ब्रूयात् ।

किं च त्रयः काला इत्यत्र ज्ञायन्ते इति क्रियान्वयसंभवात् क्रियाविनिर्मुक्तवाक्योदाहरणस्यासंगत्यापत्तेः ।

किं च शृणु गर्जति मेघः, नटो गायति शृणु, घटोऽनश्यत् पश्येत्यादावप्यगतेश्च । एतेन प्रथमार्थ एव कर्मत्वमित्यपास्तम् ।

किं चैवं मृगे संख्यान्वयो न स्यात् । आख्यातोपस्थाप्यसंख्याप्रकारकान्वयबोधं प्रति मुख्यविशेष्यतया प्रथमान्तपदजन्योपस्थितेर्हेतुत्वात् । अन्यथा 'हंसीव धवला कीर्तिः' इत्यत्र हंस्यामपि संख्यान्वयप्रसङ्गः । मृगे संख्यानन्वये इष्टापत्तौ च 'पश्य धावति मृगाः' इत्यादेरपि साधुत्वापत्तेः ।

किं च 'पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा' 'चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना' इत्यादिप्रयोगदर्शनात्तच्छब्देन विशेषणस्यापि परामर्शः । परं तु पदार्थतावच्छेदकरूपविशेषणस्य क्वचिन्न परामर्शः । तेन दृश्यैते राजमातङ्गा इत्यादौ न काऽप्यनुपपत्तिः । अत एवोत्सर्गोऽयं न नियमः । तदुक्तम्—' सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वम् ' इति दिक् । विवेचितं चेदमधस्तादवशिष्टं चोपरिष्टात्स्पष्टीभविष्यति ।

इति श्रीमहोपाध्यायमैथिलवंशमणेर्विमर्शः ।

अत्र नैयायिकाः प्रत्यवतिष्ठन्ते । मृगपदोत्तरं प्रथमापि न स्यादिति । धावनक्रियाविशिष्टस्य मृगस्य वाक्यार्थत्वेन नामार्थत्वाभावात्प्रातिपदिकाश्रयीभूता प्रथमाऽपि न स्यादित्यर्थः । तत्रोच्यते—मृगो धावतीत्याख्यातोक्तसंख्याके कर्तरि नामार्थे प्रथमा, पश्चात्पश्यतिक्रियान्तरे वाक्यार्थतयान्वयेऽपि प्राथमिकी प्रातिपदिकसंज्ञा निराकर्तुं न शक्येति को नाम प्रथमां निवारयितुमीष्टे इति ।

यत्तु मृगकर्तृकोत्कटधावनस्यैव दृशिक्रियायां कर्मतयान्वयो विवक्षित इति भाष्यकृदाशयवर्णनं, यदपि—

" सुबन्तं हि यथानेकं सुबन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥ "

इति हेलाराजसंमतिप्रदर्शनं तदुभयमपि न विचारचारु । प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति नियमात्, धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतया प्रत्ययजन्योपस्थितिर्हेतुरिति कारणाभावादेकधात्वर्थप्रकारकापरधात्वर्थविशेष्यकान्वयबोध एव न संभवतीति ।

न च 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति यास्कमुनिविशेषवचसा आख्यातस्थले प्रत्ययार्थप्राधान्यं त्यज्यत इति वाच्यम् । आख्यातपदं तिङ्क्ष्वेव निरूढं न तु धातुष्विति । आख्यातार्थेषु संख्यावर्तमानत्वादिषु भावस्यैव संख्याकालातिरिक्ताख्यातार्थस्यैव प्राधान्यमिति तदर्थात् ।

वस्तुतस्तु प्रथमान्तार्थप्राधान्येऽपि मृगकर्तृकोत्कटधावनस्य कर्मतासंबन्धेन दृशिक्रियायां विशेषणतयान्वयो न विरुध्यते। यतो हि विशेष्यान्वयिनान्वयित्वमात्रं विशेषणत्वं धावनक्रियाविशेष्यो मृगस्तदन्वयिनी दर्शनक्रिया तदन्वयित्वरूपं विशेषणत्वं धावनक्रियाया अक्षतमिति न भाष्यकृदुक्तिविरोधो न वा हेलाराजोक्तिविरोध इति तत्त्वम् । स्पष्टं चेदं मीमांसायां सोष्णीषा ऋत्विजः प्रचरन्ति, लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ ।

तथा हि पूर्ववाक्ये उष्णीषाणामपीष्टसाधनत्वे विशेषणतयाऽन्वयः । तत्र विशेषणत्वं विशेष्यान्वयिनान्वयित्वमेव । उष्णीषाणां विशेष्याः ऋत्विजस्तदन्वयि इष्टसाधनत्वं तदन्वयित्वमुष्णीषाणामिति । उत्तरवाक्ये तु पूर्ववाक्यलब्धस्योष्णीषविशिष्टऋत्विक्कर्तृकप्रचरणस्य नेष्टसाधनत्वेऽन्वयः । किं तु लौहित्यमात्रस्य । तत्रापि परंपरया तूष्णीषद्वारा ऋत्विग्रूपविशेष्यान्वयिना इष्टसाधनत्वेन लौहित्यान्वयस्वीकारादिति ।

यत्तु धावन्तं मृगं पश्येत्येव ब्रूयादिति तन्न । पर्यायशब्दानां प्रयोगे वक्तुरिच्छाया एव नियामकत्वेनेष्टापत्तेः । सर्वथातात्पर्याभावे मृगपदं नोच्चारयेत् । किं तु धावति पश्येत्येव ब्रूयादिति न काऽप्यनुपपत्तिरिति ।

यत्तु त्रयः काला इत्यत्र ज्ञायन्ते इति क्रियान्वयसंभवात् क्रियाविनिर्मुक्तवाक्यस्यासंगत्यापत्तेरिति तन्न । ज्ञानक्रियानाकाङ्क्ष्योः कति कालाः त्रयः काला इति प्रश्नोत्तरवाक्ययोः क्रियाविनिर्मुक्तत्वसंभवादिति ।

यत्तु शृणु गर्जति मेघः, नटो गायति शृणु, घटोऽनश्यत्पश्येत्यादावप्यगतेश्चेति । तन्न । 'सविशेषणे हि विधिप्रतिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायाद्विशेष्येषु मेघनटघटेषु श्रवणदर्शनयोर्बाधाद्विशेषणेषु गर्जनगानाभावेषु श्रवणदर्शनान्वयसंक्रमादिति ।

यत्तु शृणु गर्जति मेघः इत्यादौ श्रवणे मेघकर्मकत्वाभावेन प्रथमार्थ एव कर्मत्वमित्यपास्तमिति तन्न । सविशेषणे हीति न्यायेन श्रवणे गर्जनविशिष्टमेघकर्मकत्वबाधेऽपि गर्जनकर्मकत्वस्यान्वयसंभवात्कर्मत्वं प्रथमार्थ इति सम्यगेवोक्तमिति । पदार्थत्वे प्रकारतया भानं विशेषः ।

वस्तुतस्तु सुब्विभक्तौ न लक्षणेति नियमात्कर्मत्वं प्रथमार्थो न भवति । किं च साधुत्वमात्रार्थिकायाः प्रथमायाः शक्याभावाच्छक्यसंबन्धरूपा लक्षणा न संभवत्येवेति तत्त्वम् ।

शङ्खाः श्रूयन्ते भेर्यः श्रूयन्ते इति महाभाष्यकारप्रयोगात्, निष्वान-

(?)मश्रूयत पाञ्चजन्य इत्यभियुक्तप्रयोगाच्च सविशेषणे हीति न्यायस्य सर्वसमतत्वाच्चेति ।

यत्तु किं चैवं मृगे संख्यान्वयो न स्यात्, आख्यातोपस्थाप्यसंख्याप्रकारकान्वयबोधं प्रति मुख्यविशेष्यतया प्रथमान्तपदजन्योपस्थितेर्हेतुत्वात् अन्यथा 'हंसीव धवला कीर्तिः' इत्यत्र हंस्यामपि संख्यान्वयप्रसङ्गः । मृगे संख्यानन्वये इष्टापत्तौ च पश्य धावति मृगा इत्यादेरपि साधुत्वापत्तेरिति तन्न । एवं दर्शने धावनाविशिष्टमृगस्य विशेष्यतयाऽन्वयस्वीकारे इत्यर्थः । मुख्यविशेष्यतया विशेषणत्वाभावे सति विशेष्यत्वं मुख्यविशेष्यत्वं तेनेत्यर्थः । तत्र मुख्येति न वक्तव्यं चैत्र एव पचतीत्यादौ व्यभिचारात् । अन्ययोगव्यवच्छेदकरूपैवकारार्थैकदेशेऽन्वये चैत्रस्य विशेषणत्वेन मुख्यविशेष्यतया प्रथमान्तपदजन्योपस्थितिविषयत्वाभावाच्चैत्रान्यो न पचति चैत्रः पचतीति तदर्थात् । तथाच चैत्र एव पचतीत्यत्र चैत्रे संख्यान्वयार्थमाख्यातोपस्थाप्यसंख्याप्रकारकान्वयबोधं प्रति विशेष्यतया प्रथमान्तपदजन्योपस्थितिर्हेतुरित्येव कार्यकारणभावोऽङ्गीकर्तुमुचितः । अन्यथा 'हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते' इत्याद्युपमाने संख्यान्वयानङ्गीकारे स्वर्गङ्गावगाहनाश्रयत्वस्याख्यातार्थस्य संख्यायाश्च साधारणधर्मत्वानुपपत्तेः ।

हंस्य इव कृष्ण ते कीर्तिरित्यादीनामपि साधुत्वापत्तौ चालङ्कारिकमते वैरस्यापादकलिङ्गवचनभेदस्योपमानोपमेयनिष्ठस्य दुष्टत्वं न स्यात् । संख्याकालातिरिक्ताख्यातार्थे हि भावनान्वयिनि संख्यान्वय इति नियमात् । क्वचिद्विशेष्यस्य क्वचिद्विशेषणस्य परामर्शात्तात्पर्यविषयपरामर्शकत्वं तच्छब्दस्य नियतम् । परं तु पदार्थतावच्छेदकरूपविशेषणस्य क्वचिदपि न परामर्शः ।

इति वाक्यवादः समाप्तः ।

---

श्रीहरियशोमिश्रविरचिता

# वाक्यदीपिका।

( वाक्यवादटीका )

सुप्तिङन्तचयो वाक्यमिति प्रमाणानुसारेण सुबन्तचयत्वे सति तिङन्तचयत्वस्य मिलितस्य प्रत्येकं वा सुबन्तचयत्वादेर्वाक्यलक्षणत्वे परस्परमव्याप्तिः, पदसमूहमित्यस्य गौरश्वः पुरुषो हस्तीत्यादावतिव्याप्तिरित्याशयेन पृच्छति—अथेति। इदं लोके प्रसिद्धं, वाक्यं वाक्यपदवाच्यं, किं जिज्ञासितम्। तथा च लोके प्रसिद्धं वाक्यपदवाच्यं जिज्ञासाविषयीभूतमित्यन्वयबोधः। नामेति वाक्यालङ्कारे। एकतिङ् वाक्यमिति भाष्यादिति। एकत्वे सति तिङ्त्वं वाक्यत्वमित्युक्ते पचतीत्यस्यापि वाक्यत्वापत्तिः। एकः तिङ् यस्मिन्निति बहुव्रीह्याश्रयणे एकतिङ्घटितपदसमुदायत्वं वाक्यत्वमिति पर्यवसन्नं पचति भवतीत्यादावव्याप्तमित्याशयेन तदर्थमाह—एकेति। तेनेति एतादृशार्थकरणेन। अन्वयश्चास्य नैकवाक्यताव्याघात इत्यत्र तन्निषेधे। पचति भवतीत्यत्र विक्लित्त्यनुकूलैकाश्रयवृत्तिभावनाभिन्नैकाश्रयभवनानुकूला भावनेति बोधः। पश्य मृगो धावतीत्यत्र मृगाभिन्नैकाश्रयवृत्त्युत्तरदेशसंयोगानुकूलवेगजन्यविलक्षणव्यापारकर्मकचाक्षुषानुकूलव्यापारस्त्वदभिन्नैकाश्रयवृत्तिरित्यन्वयबोधः। नैकवाक्यतेति तिङन्तभेदप्रयुक्तानेकवाक्यतापत्तिर्नेत्यर्थः।

ननु क्रियाविनिर्मुक्तवाक्यस्यापि सत्त्वेन तत्र तल्लक्षणाव्याप्तिरित्याशङ्क्य तद्वाक्यस्य प्रमाणविरुद्धत्वेनाव्याप्त्यभावादित्याह—नहीत्यादिना। ननु 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यादौ तच्छब्देन पुरुषपरामर्शानुरोधात्प्रथमान्तार्थस्यैव बोधमुख्यविशेष्यत्वस्वीकारेण निरुक्तलक्षणमयुक्तमित्याशयेन शङ्कते—अस्त्वित्यादिना। समाधत्ते—पश्य मृग इत्यादिना। ननु पश्येत्यादौ प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारेऽपि तमितिपदाध्याहारेण धावनानुकूलकृतिमान्मृगो मृगकर्मकदर्शनाश्रयस्त्वमिति बोधो न स्वीक्रियते। येन नानामुख्यविशेष्यकबोधजनकत्वेन वाक्यभेदः स्यात्। अपि तु धावनानुकूलकृतिमन्मृगनिष्ठकर्मतानिरूपकदर्शनाश्रयत्व-

मित्येव बोधस्तज्जनकतयैकवाक्यत्वक्षतेरभावात्कथमगतिस्तत्रेत्याशङ्क्य मृगपदार्थस्य दर्शने कर्मतासंबन्धेनान्वयबोधस्य—नामार्थस्य धात्वर्थेऽभेदातिरिक्तसंबन्धेनान्वयबोधस्वीकारे तण्डुलः पचतीत्यादिप्रयोगस्य साधुत्वापत्त्या नामार्थप्रकारकभेदसंसर्गकबोधे विभक्तिजन्योपस्थितेः कारणत्वेन—अनुपपन्नत्वात् मृगपदार्थस्य कर्मताबोधार्थं मृगपदोत्तरं द्वितीयावश्यकीत्याशयेनाह—मृगस्येत्यादि। तत्र फलितमाह—द्वितीयायां चेत्यादि धावन्तं मृगं पश्येत्येवं स्यादित्यन्तेन। ननु तथा प्रयोगो भवत्येवेति न दोष इत्याशङ्क्य धावन्तं मृगं पश्येत्येवं स्यान्न तु पश्य मृगो धावतीति प्रयोगस्तथा च तस्योच्छेद एवानिष्टकर इत्याह—तथा चेति। ननु तत्र मृगमुख्यविशेष्यताकबोध एव स्वीक्रियते तमित्यध्याहारेण तथा च न तस्योच्छेद इत्यत आह—तमित्यध्याहार इत्यादि।

वाक्यभेदे इष्टापत्तिमाशङ्क्य परिहरति—न चेति। तथा सति वाक्यभेदे सति। अतिङन्तात्परं तिङन्तं निहन्यत इति 'तिङ्ङतिङः' इतिसूत्रार्थः। नन्वेकवाक्यत्वाभावेऽपि तिङन्तात्परस्यातिङ्ग्रहणव्यावर्त्यत्वसंभव इत्याशङ्क्य 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति वचनेन तिङन्तेन सह तिङन्तस्यैकवाक्यतायामेवातिङ्इतिग्रहणाभावे निघातप्रसक्तिस्तद्वारणाय सूत्रे तद्ग्रहणमेकवाक्यत्वाभावे निघातप्रसक्तिरेव नेत्याह—निघातस्वरस्येत्यादि। एकवाक्यत्वाभावे तिङन्तेन सह तिङन्तस्यैकवाक्यत्वाभावे, तदनुपपत्तेः तिङन्तात्परस्य निघातप्रसक्त्यनुपपत्तेः, तथा चातिङ इतिग्रहणस्य वैयर्थ्यमिति भावः। ननु हरेरित्यादाववताराणां भूतभावित्वेन क्रियाध्याहाराभावेन तत्र तल्लक्षणाव्याप्तिरित्याशङ्क्य लडर्थस्याविवक्षितत्वेन भवन्तीत्यध्याहारसंभव इत्याह—भवन्तीत्यवेहीत्यादि अविवक्षितत्वादित्यन्तेन। हरिसंबन्धिदशावताराभिन्नबहुत्वावच्छिन्नाश्रयवृत्तिभवनानुकूला भावनेति बोधः। लडर्थविवक्षायामपि 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वचनेन वर्तमानसमीपान्यतरनिष्ठा तादृशी भावनेति बोध इत्याह—वर्तमानसामीप्ये वेत्यादि। अत एव लडर्थाविवक्षणादेव सामीप्यार्थकत्वादेव वा। जयन्तीति। कृष्णसंबन्धिदशावताराभिन्नबहुत्वावच्छिन्नाश्रयवृत्तिवर्तमानसमीपनिष्ठोत्कर्षानुकूला भावनेति बोधः। अत एवेत्यस्य मिश्रा इत्यनेनाप्यन्वयः। वारिद इति। वारिदाभिन्नैकाश्रयवर्तिनी तृप्तिकर्मकप्राप्त्यनुकूला भावना वर्तमानकालिकीत्यन्वयबोध आश्रयणीयः, स च न संभवति तद्भावनाया भविष्यत्वात्। इह लोके पानीयदातुस्तृषा-

शान्तेः स्वयमुदपानेन विनाऽदर्शनात्तृप्तिः पारलौकिकी वक्तव्या, लडर्थो न विवक्षित इति भावः । अत एवेति ' मधुसूदनठक्कुराः ' इत्यत्राप्यन्वेति । 'अथ शब्दो निरूप्यते' इति चिन्तामणिस्थपदस्य व्याख्यानरूपालोकनामपक्षधरमिश्रकर्तृकग्रन्थस्य व्याख्या कण्टकोद्धार इति मधुसूदनकर्तृको ग्रन्थ इति बोध्यम् ।

त्रयः काला इत्यत्र त्रित्वविशिष्टाभिन्नाः काला इत्यन्वयबोधः । पचति भवतीत्यत्र पाकानुकूलकृतिर्भवनाश्रय इत्यन्वयबोधः । चैत्रः पचतीत्यत्र पाकानुकूलकृतिमांश्चैत्र इत्यन्वयबोधः । स्वार्थनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताशालिबोधजनकपदसमभिव्याहृतपदत्वरूपस्य किंचित्पदार्थनिष्ठप्रकारतानिरूपितस्वार्थनिष्ठमुख्यविशेष्यताशालिबोधजनकतत्पदसमभिव्याहृतपदत्वरूपस्य (वा) वाक्यत्वस्य पश्य मृगो धावतीत्यादावपि सत्त्वेन तमिति पदाध्याहाराभावादेकवाक्यत्वक्षतिविरह इत्याह—पश्य मृगो धावतीत्यादावपीति । तस्य एकवाक्यत्वस्य । ननु नामार्थप्रकारकभेदसंसर्गकबोधे विभक्तिजन्योपस्थितेः कारणत्वेन कथं धावतो मृगस्य कर्मतासंबन्धेन दृशिक्रियायामन्वयस्तत्र तज्जन्योपस्थितेरभावादतस्तदर्थं द्वितीयापेक्षिता, तथा च तादृशवाक्योच्छेद इत्याशङ्क्य वाक्यस्य प्रातिपदिकत्वाभावेन तदर्थप्रकारकबोधस्य तज्जन्यतावच्छेदकानाक्रान्तत्वान्न द्वितीयापत्तिरित्याह—वाक्यस्य चार्थवत्त्वाभावेनेत्यादि । अर्थवत्त्वाभावेन अर्थनिरूपितशक्तिलक्षणान्यतरसंबन्धाभावेनेत्यर्थः । तथा चानुकूलतासंबन्धावच्छिन्नधावननिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्न—समवायसंबन्धावच्छिन्नकृतिनिष्ठप्रकारता-निरूपितविशेष्यत्वाभिन्नकर्मतासंबन्धावच्छिन्नमृगनिष्ठप्रकारता—निरूपितविशेष्यत्वाभिन्ननिरूपितत्वसंबन्धावच्छिन्नदर्शननिष्ठप्रकारता—निरूपितविशेष्यत्वाभिन्नस्वरूपसंबन्धावच्छिन्नाश्रयत्वनिष्ठप्रकारता—निरूपित—त्वंपदार्थनिष्ठमुख्यविशेष्यताशाली बोधः ।

ननु क्रियाविनिर्मुक्तवाक्यस्य प्रमाणविरुद्धत्वेन वाक्यत्रैविध्यमसंगतमित्याशङ्क्याह—किंचेत्यादि ।

क्रियाविनिर्मुक्तवाक्यमेव दर्शयति—तथा हीत्यादिना । सार्वजनीनत्वात् सर्वजनानुभवसिद्धत्वात् । नन्वत्रापि भवन्तीति क्रियाध्याहारः शक्य एव कर्तुमिति चेन्न, भूतभाविकालयोर्वर्तमानभवनाश्रयत्वबाधात् । न च जयन्त्यादाविव वर्तमानसामीप्यार्थकत्वं लट इति वाच्यम् । वर्तमानसामीप्यस्य भूतभविष्यद्रूपस्य भूतभविष्यत्कालसंबन्धिभवना-

न्वयेऽपि वर्तमानसंबन्धिभवने तदन्वयासंभवात्। न च सामीप्यं वर्तमानसाधारणं निर्वक्तुं शक्यं, येन वर्तमानसंबन्धिनोऽपि भवनस्य ग्रहणं स्यात्। न च लटो वर्तमानसामीप्यं वर्तमानत्वं चार्थ इति वाच्यम् । शक्तिलक्षणाभ्यामेकेन शब्देन युगपदनेकार्थाप्रतीतेः । न च गङ्गायां घोषमत्स्यौ स्त इत्यत्र घोषमत्स्यान्वयानुरोधेन गङ्गापदेन प्रवाहतीरयोर्वृत्तिद्वयेनोपस्थितिदर्शनाल्लटा वर्तमानतत्सामीप्ययोस्तथैवोपस्थितिरस्त्विति वाच्यम् । युगपद्वृत्तिद्वयविरोध इति प्राचीनगाथाविरोधादित्येतदभिप्रेत्याह—न ह्यत्रेत्यादि । ननु तत्र लडर्थोऽविवक्षित एवेत्यत आह—अपि चेत्यादि । घटोऽयं तज्जातिरित्यादेः प्रामाण्यापत्तिवारणाय सर्वनाम्नां प्रधानोपस्थापकत्वावश्यकत्वं तथा च पुरुषाभिन्नैकाश्रयवृत्तिप्रयाणानुकूलो व्यापार इति बोधे पुरुषस्य विशेषणतया भानेन तस्य चरणावित्यत्र तच्छब्देन परामर्शो न स्यादतः प्रथमान्तार्थमुख्यविशेष्यकबोध एव स्वीकर्तव्य इत्याह—क्रियाया विशेष्यत्वे इत्यादिना । अन्यथा सर्वनाम्नां विशेषणोपस्थापकत्वे ।

नामार्थप्रकारकभेदसंसर्गकबोधे विभक्तिजन्योपस्थितेः कारणत्वेन तादृशमृगस्य कर्मतया दर्शनेऽन्वयासंभव इत्याह—पश्य मृगो धावतीत्यत्रेत्यादिना । दृशिधातुज्ञानजन्यचाक्षुषज्ञानोपस्थितिकृतो यो "धात्वाख्यातप्रातिपदिकजन्यगतिविशेषकृतिमृगोपस्थितिसहकृत—'धावति मृगः' इति वाक्यज्ञान—जन्य—'धावनानुकूलकृतिमान्मृगः' इत्याकारक"—बोधस्तत्सहकृतेन पश्य मृगो धावतीतिवाक्यज्ञानेन, कर्मतासंबन्धावच्छिन्नधावनकृत्यवच्छिन्नमृगनिष्ठप्रकारतानिरूपितचाक्षुषज्ञाननिष्ठविशेष्यताशालिशाब्दस्य जनने न मृगादिपदजन्योपस्थितिः सहकारिणी । अपि तु तादृशोपस्थितिसहकृत—'धावति मृगः'—इतिसमभिव्याहारजन्यधावनकर्तृमृगविषयकबोधस्य सहकारित्वमिति तादृशमृगस्य नामजन्योपस्थित्यविषयत्वेन तस्य च कर्मतया धात्वर्थेऽन्वये धात्वर्थनामार्थयोरभेदातिरिक्तसंबन्धेन बोधोऽनुपपन्न इति नियमभङ्गरूपदोषो नेत्यभिप्रेत्याह—तत्र धावनेत्यादिना । तथा सति वाक्यार्थस्य धावनकृतिविशिष्टमृगस्य कर्मतया धात्वर्थेऽन्वये सति । प्रथमापीत्यपिना विभक्तिसामान्यप्रतिषेधः । मृगपदोत्तरं कापि विभक्तिर्न स्यादित्यर्थः । तत्र चापादकमप्रातिपदिकत्वादिति पूरणीयं तस्या अपीत्यादिग्रन्थानुरोधात् । यद्यपीदमापादनमसंगतं मृगपदस्य धातुप्रत्ययान्तभिन्नत्वान्मृगत्वावच्छिन्नस्य सत्त्वेनार्थवत्त्वाच्च अप्रातिपदिकत्वादित्यापादकासिद्धेस्तथापि यादृशवाक्यार्थस्य धात्वर्थेऽन्वयस्तादृश-

वाक्योत्तरं विभक्तेरदर्शनेन दृशिधात्वर्थान्वयिनं नीलाभिन्नं घटमिति वाक्योत्तरमिव प्रकृतेऽपि धावनकृतिविशिष्टमृगार्थकमृगपदोत्तरं प्रथमापि न स्यादिति भावः। ननु यादृशसामग्रीसत्त्वे यत्कार्यं दृष्टं तदेव तत्रापाद्यं नीलं घटं पश्येत्यत्र तादृशसमभिव्याहारज्ञानादेव नीलघटकर्मत्वनिरूपकदर्शनान्वयबोधस्य दृष्टत्वेन नीलं घटमिति वाक्योत्तरं विभक्तिर्माभूत् पश्य मृगो धावतीति प्रथमान्तपदसमभिव्याहारज्ञानादेव धावनकर्तृमृगकर्मकदर्शनान्वयबोधो भवति न तु तद्विभक्तिव्यतिरेकत इति प्रथमापि न स्यादिति निर्युक्तिकमत आह—किं चेति। तच्च एकवाक्यत्वं च अनुपपन्नमेवेति धावनकर्तृमृगकर्मकदर्शनाश्रयस्त्वमिति बोधस्वीकारे फणिविवक्षितैकवाक्यत्वानुपपत्तिरिति भावः।

ननु मृगकर्तृकोत्कटधावनस्य दृशिक्रियायामन्वयः फणितात्पर्यविषय इत्येव कुतोऽवगम्यत इत्याशङ्क्य 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्' इत्यभिप्रायेण भाष्यार्थस्पष्टीकर्तृहेलाराजसंमतिमाह—फणिसंमतिस्त्विति। तेन मृग इति सुबन्तं दर्शने विशेषणं न, मृगकर्तृकोत्कटधावनं दर्शने विशेषणमिति हेलाराजेन स्पष्टीकरणेन। एवकारोत्तरं 'कर्मतया दृशिक्रियायामन्वयस्य' इति शेषः। विवक्षायामित्यनन्तरं 'प्रयुक्तस्य पश्य मृगो धावति इति वाक्यस्य' इति शेषः। न प्रतीकारः न निराकरणम्। तथा च तादृशमृगस्य कर्मतया तत्रान्वयस्वीकारे फणिसंमतवाक्यत्वानुपपत्तिरेव दोष इति भावः। ननु 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्' इति नियमाद्धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेनान्वयबुद्धिं प्रति विशेष्यतया प्रत्ययजन्योपस्थितिर्हेतुरिति कार्यकारणभावेन दर्शने प्रत्ययजन्योपस्थितेरभावेन धावनस्य तत्रान्वयो न संभवतीति मृगस्यैव तत्रान्वयेन तार्किकपक्ष एव समीचीन इति चेन्न, निरुक्तनियमादेव प्रकृत्यर्थप्रकारकबोधे विशेष्यतया प्रत्ययजन्योपस्थितेः कारणत्वेन कर्मत्वोपस्थित्यर्थं द्वितीयापेक्षा। तथा च पश्य मृगो धावतीति वाक्योच्छेदापत्तेरित्याह—अन्यथेति। कर्मत्वोपस्थित्यर्थं द्वितीयास्वीकारे इति तदर्थः।

तथा च सुबन्तस्थल एव तादृशन्यायश्चरितार्थस्तिङन्तस्थले धात्वर्थविशेष्यकान्वयबोध एव स्वीकरणीय इति लडर्थविवक्षायामपि भूतभविष्यद्वर्तमानविषयकज्ञाने वर्तमानकालिकत्वान्वयसंभवेन क्रियाविनिर्मुक्तं वाक्यमसंगतमित्याह—किं चेति।

प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे दोषान्तरमाह—किं चेति। 'शृणु गर्जेति मेघः' इत्यत्र गर्जनाश्रयमेघकर्मकश्रवणाश्रयस्त्वमिति नैयायिकमते बोधः। स च न संभवति शब्दस्यैव श्राव्यत्वेन मेघस्याश्राव्यत्वात्। मेघाभिन्नैकाश्रयवृत्तिगर्जनकर्मकश्रवणं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः। स च समीचीन एव। 'नटो गायति शृणु' इत्यत्र गानाश्रयनटकर्मकश्रवणाश्रयस्त्वं इति तार्किकमते बोधः। स च न संभवति नटस्याश्राव्यत्वात्। नटाभिन्नैकाश्रयवृत्तिगानकर्मकश्रवणं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः। स च यथार्थ एव। 'घटोऽनश्यत्पश्य' इत्यत्र चातीतोत्पत्तिकनाशप्रतियोगिघटकर्मकदर्शनाश्रयस्त्वमिति न्यायमते बोधः। स च न संभवति घटस्य नष्टत्वेन तद्दर्शनासंभवात्। घटाभिन्नैकप्रतियोगिकातीतोत्पत्तिकनाशविषयकदर्शनं त्वदभिन्नैकाश्रयकमिति वैयाकरणमते बोधः। स च प्रमैव। तथा च न्यायमते तत्र तत्राव्याप्तिरेवेति भावः। एतेन शृणु गर्जेतीत्यादेरयोग्यत्वापादनेन। प्रथमार्थ इति। तथा च पश्य मृगो धावतीत्यत्र प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारेऽपि नामार्थधात्वर्थयोरभेदातिरिक्तसंबन्धेनान्वयबोधोऽव्युत्पन्न इति नियमभङ्गो नास्ति। धावनकर्तृमृगनिष्ठप्रथमार्थविषयतानिरूपकदर्शनाश्रयस्त्वमित्याकारकान्वयबोधस्वीकारेण कर्मतासंबन्धेन धावनकर्तृमृगस्य दर्शनक्रियायामनन्वयादिति भावः।

ननु क्रियामुख्यविशेष्यकान्वयबोधस्वीकारे 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यादौ तच्छब्देन पुरुषपरामर्शो न स्यात्। प्रथमान्तार्थस्य पुरुषस्याख्यातार्थविशेषणत्वेन मुख्यविशेष्यत्वाभावाद्घटोऽयं तज्जातिरित्यादेः प्रामाण्यापत्तिवारणाय तच्छब्दस्य मुख्यविशेष्योपस्थापकत्वस्वीकारादतः प्रथमान्तार्थमुख्यविशेष्यकबोध एव स्वीकर्तव्य इत्यत आह—किं चेति। एवं धावनकर्तृमृगकर्मकदर्शनाश्रयस्त्वमिति प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे कुतः संख्यान्वयस्तत्र न स्यादित्यत आह—आख्यातोपस्थाप्येत्यादि। तत्रायमभिप्रायः—तार्किकमते कृतेराख्यातार्थतया कर्तुरनभिधानादेवदत्तेन पचतीत्यादिप्रयोगापत्तिवारणायाख्यातार्थभावनान्वय्यन्वयिसंख्यायामनभिहितायामित्यस्य 'कर्तृकरणयोस्तृतीया' इत्यनभिहिताधिकारीयसूत्रार्थत्वेन स्वीकारेणाख्यातोक्तकर्तरि कर्मणि च तदुक्तसंख्याया अन्वय इति वक्तुमशक्यत्वेन विशेष्यतयाख्यातोपस्थाप्यसंख्याप्रकारकान्वयबोधं प्रति प्रथमान्तपदजन्योपस्थितिरितरविशेषणत्वतात्पर्यविषयीभूता-

र्थनिष्ठविशेष्यतालक्षणमुख्यविशेष्यतासंबन्धेन हेतुरिति स्वीकरणीयम्। तथा च पश्य मृगो धावतीत्यत्र मृगे इतरविशेषणत्वतात्पर्यविषयीभूतार्थत्वेन निरुक्तसंबन्धेन तदुपस्थितेरभावान्मृगे संख्यान्वयानुपपत्तिर्दोष इति। ननु वैयाकरणमतेऽपि मृगस्याभेदसंबन्धेन तिङर्थविशेषणत्वेन तदुपस्थाप्यसंख्यान्वयः कथमिति चेन्न। तन्मते तथा कार्यकारणभावानङ्गीकारात्। तन्मते कीदृशः कार्यकारणभाव इति चेदित्थम् 'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः। फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥' इत्यत्र फलं विक्लित्त्यादि व्यापारस्तु भावनाऽभिन्ना साध्यत्वेनाभिधीयमाना क्रिया। धात्वर्थं निरूप्य तिङर्थमाह—आश्रये त्विति। फलाश्रयं कर्म, व्यापाराश्रयः कर्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिः। पदार्थं निरूप्य वाक्यार्थं निरूपयति—फले इत्यादि। विक्लित्त्यादिफलं प्रति व्यापारः प्रधानं विशेष्यमित्यर्थः। तिङर्थाः कर्तृकर्मसंख्याकालास्तत्र कर्ता व्यापारे विशेषणं, कर्म तु फले विशेषणं, संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि विशेषणं, कालस्तु व्यापारे विशेषणं न तु संख्यावत्कर्तृकर्मणोः, अतीतभावनके कर्तरि पचतीत्यापत्तेः, नापि फले फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः। तथा चाख्यातोपस्थाप्यसंख्याप्रकारकबोधं प्रत्याख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः। एवं च चैत्रस्तण्डुलं पचतीत्यत्र चैत्राभिन्नैककर्तृकस्तण्डुलभूतकर्मनिष्ठविक्लित्त्यनुकूलवर्तमानकालिको व्यापार इति बोधः। चैत्रेण तण्डुलः पच्यते इत्यत्र तण्डुलाभिन्नैककर्मनिष्ठविक्लित्त्यनुकूलवर्तमानकालिकचैत्रकर्तृको व्यापार इति बोधः। इत्थं च प्रकृते 'मृगो धावति' इत्यत्र मृगाभिन्ने कर्तरि तदुपस्थितेः सत्त्वेन न तत्र संख्यान्वयानुपपत्तिरिति भावः। ननु मुख्येत्यनिवेश्य प्रथमान्तपदजन्योपस्थितेर्हेतुत्वस्वीकारान्न संख्यान्वयानुपपत्तिरित्यत आह—अन्यथेति। मुख्यविशेष्यतासंबन्धेन तादृशोपस्थितेर्हेतुत्वानङ्गीकारे इति तदर्थः। तथा च तार्किकमते तत्र संख्यान्वयानुपपत्तिरेव। संख्यानन्वये इष्टापत्तिं वारयति—मृगे इत्यादि साधुत्वापत्तेरित्यन्तेन।

ननु 'प्रयाति पुरुषस्तस्य' इत्यत्र तच्छब्देन पुरुषपरामर्शो न स्यादिति दूषणं तु वर्तत एवेति चेन्न, तच्छब्दस्य विशेषणोपस्थापकत्वस्यापि कुत्रचिद्दृष्टत्वेन विशेषणीभूतस्यापि पुरुषस्य तच्छब्देन परामर्शसंभवादित्याह—किं चेति। ननु तर्हि घटोऽयं तज्जातिरित्यादावपि प्रामाण्यं स्यात्तत्रापि तत्पदेन घटत्वपरामर्शसंभवादित्यत आह—परं त्विति। न

परामर्श इति। पदोपस्थितिप्रकारस्य तत्पदेन परामर्शासंभवेऽपि तद्भिन्नविशेषणस्य तत्पदेन परामर्शे बाधकाभावादिति भावः। अथैवं 'दृशैते' इत्यादौ तस्यैवेतितच्छब्देन राजपरामर्शे बाधकाभावेन तत्साधुत्वापत्तिरितिचेदिष्टापत्तिमाह—तेनेति। पदोपस्थितिप्रकारभिन्नस्य विशेषणस्यापि परामर्शसंभवेनेति तदर्थः। ननु पदार्थतावच्छेदकस्य तत्पदेन परामर्शो नास्तीत्युक्तम्। तर्हि 'दृशैते राजमातङ्गाः' इत्यत्र राजपदस्य राजसंबन्धिलाक्षणिकतया राज्ञः पदार्थतावच्छेदकत्वात्तत्पदेन तस्य कथं परामर्श इति चेत्तर्हि 'पटोलपत्रं पित्तघ्नम्' इत्यत्रापि पटोलपदस्य पटोलसंबन्धिलाक्षणिकतया पटोलस्य पदार्थतावच्छेदकत्वेन तस्येतितच्छब्देन परामर्शानुपपत्तिः। न च तत्र विग्रहसमासयोः समानार्थकत्वानुरोधेन षष्ठीतत्पुरुषे पूर्वपदलक्षणाया अस्वीकारेण पटोलपदस्य पटोलमात्रपरतया पदार्थतावच्छेदकत्वाभावात्तच्छब्देन परामर्शः संभवतीति वाच्यम्। प्रकृतेऽपि राजपदस्य राजमात्रपरतया पदार्थतावच्छेदकत्वाभावेन तच्छब्देन परामर्शसंभवात्। ननु पटोलस्य पत्रमिति विग्रहवाक्यात्पटोलसंबन्धप्रकारकबोधो जायते पटोलपत्रमिति समासात्तु तत्र तल्लक्षणाऽस्वीकारे पटोलप्रकारकबोधो जायेत। तथा च विग्रहवाक्यसमासवाक्ययोः समानप्रकारकबोधजनकत्वरूपसमानार्थकत्वभङ्गापत्तिस्तद्वारणाय पटोलपदस्य पटोलसंबन्धे लक्षणा। एवं च पटोलस्य पदार्थतावच्छेदकत्वेन तस्येतितत्पदेन परामर्शो न स्यात्। न च पटोलसंबन्धि पत्रमितिवत्पटोलपत्रमित्यादावपि पटोलपदार्थानन्वयापत्तिर्नामार्थयोरिति व्युत्पत्तेरिति वाच्यम्। घटः पटो न, चैत्र इव मैत्रो गच्छतीत्यादौ नञर्थे पटपदार्थस्य प्रतियोगित्वसंबन्धेन इवार्थे चैत्रपदार्थस्य स्वनिरूपितत्वसंबन्धेनान्वयबोधस्वीकारेण निपातातिरिक्तनामार्थस्याभेदातिरिक्तसंबन्धेन शाब्दबोधोऽव्युत्पन्न इति नियमसंकोचवत्समस्तनिपातातिरिक्तनामार्थस्याभेदातिरिक्तसंबन्धेनान्वयबोधोऽव्युत्पन्न इति नियमसंकोचस्वीकारात्। न च निपातस्थले व्युत्पत्तिसंकोचेऽनुभवो मानं समासस्थले व्युत्पत्तिसंकोचे मानाभाव इति वाच्यम्। अत्रापि व्युत्पत्तिसंकोचे विग्रहसमासयोः समानार्थकत्वप्रवादस्यैव मूलत्वात्। तस्मात्पटोलपदस्य पटोलसंबन्धे लक्षणास्वीकारेण पटोलस्य पदार्थतावच्छेदकतया तस्येति तत्पदेन परामर्शानुपपत्तिर्वर्तत एवेति चेन्न। 'घटमानय' इत्यत्र कर्मतासंबन्धेनानयनोपरि घटोऽप्यन्वेतीत्येकदेशिमते स्वीकारेण पटोलस्य पत्रमित्यत्र पटोलसंबन्धप्रकारकबोध इव पटोलप्रकारकपत्रविशेष्यकोऽप्यन्व-

यबोधो भवति। तथा च विग्रहसमासयोः पटोलप्रकारकपत्रविशेष्यकबोधस्यैव स्वीकारेण पटोलपत्रमित्यादौ पटोलादिपदस्य लक्षणाभावेन पटोलस्य पदार्थतावच्छेदकत्वाभावेन तस्येतितत्पदेन तत्परामर्शानुपपत्तेरभावात्। एवं च 'दृश्यते राजमातङ्गाः' इत्यादौ तस्यैवेतितत्पदेन राज्ञः पदार्थतावच्छेदकत्वाभावेन परामर्शः संभवतीति भावः। अथवा पटोलस्य पत्रं राज्ञो-मातङ्गा इत्यादिव्यासस्थले यथा प्रकृत्यर्थान्वितषष्ठ्यर्थप्रकारकबोधो जायते तथा पटोलपत्रं राजमातङ्गा इत्यादावपि लुप्तषष्ठीस्मरणेन पटोलाद्यन्वितसंबन्धप्रकारकपत्रादिविशेष्यकबोधस्वीकारेऽपि नामार्थयोरभेदेनैवान्वय इति नियमभङ्गो न। एवं च पटोलादेः पदार्थतावच्छेदकत्वाभावेन तत्पदेन परामर्शसंभवः।

वस्तुतस्तु नामार्थयोरभेदेनैवेति व्युत्पत्तेः संकोचे मानाभावेन लुप्तषष्ठीस्मरणस्य नैयत्याभावेन च संबन्धिनि लक्षणाया आवश्यकत्वे समानविषयकबोधजनकत्वमित्येव विग्रहसमासयोः समानार्थकत्वं न तु समानप्रकारकबोधजनकत्वरूपं तत्। आरूढवानरो वृक्ष इत्यत्रारूढो वानरो यमिति विग्रहाद्यत्कर्मकारोहणकर्ता वानर इति बोधः। समासाच्च वानरकर्तृकारोहणकर्मीभूतो वृक्ष इति बोधः। एवं प्राप्तोदको ग्राम इत्यादावपि। तत्र प्राप्तमुदकं यमिति विग्रहाद्यत्कर्मकप्राप्तिकर्तृ उदकमिति बोधः, समासाच्चोदककर्तृकप्राप्तिकर्मीभूतो ग्राम इत्यन्वयबोधस्तथा च तत्र तत्र भिन्नप्रकारकबोधस्यैवोदयेन व्यभिचारात्। अथ बहुव्रीहेरविग्रहतया नास्य विग्रहवाक्यत्वं, चित्रगुरित्यत्र चित्रा गौर्यस्येति हि समासार्थकथनं न तु विग्रहः। समस्यमानपदैरेवार्थकथनस्य विग्रहत्वादिति चेन्न। नहि तत्र विग्रह एव नास्तीति, समासारम्भकवाक्यस्यैव विग्रहत्वात्। किंतु बहुव्रीहौ तस्यासाधुत्वं तत्र समस्यमानपदैरेव विग्रहस्य साधुत्वात्। अत एव बहुव्रीहौ विग्रहस्यासाधुत्वज्ञापनाय तत्र नित्यसमासत्वाभिधानम्, अत एवाविग्रहो नित्यसमासः अस्वपदविग्रहो वा नित्यसमास इति तल्लक्षणम्। तत्र समासघटकीभूतपदसमानार्थकपदान्तरेणार्थप्रतिपत्त्यनुकूलो व्यापारोऽस्वपदविग्रहः। ननु राजपुरुष इत्यादौ राजपदस्य संबन्धिनि लक्षणास्वीकारे विशेषणविशेष्यवाचकपदार्थयोरभेदान्वयबोधेनाभेदे कर्मधारय इत्यनेनाभेदबोधस्थले कर्मधारयविधानात् कर्मधारयापत्तिरिति चेन्न, समासात्पूर्वं विशेषणविशेष्यवाचकपदयोः समानार्थकयोर्यत्राभेदेनान्वयबोधकत्वं तत्रैव कर्मधारयविधानात्। एवं च पदार्थतावच्छेदकरूपविशेषणस्येत्यस्य शक्यतावच्छे-

दकरूपविशेषणस्येत्यर्थः । तेन शक्यतावच्छेदकभिन्नविशेषणस्यापि परामर्शसंभवेन । तथा च राजमातङ्ग इत्यादौ राजपदस्य राजसंबन्धिनि लक्षणायां राज्ञः पदार्थतावच्छेदकत्वेऽपि शक्यतावच्छेदकत्वाभावान्न परामर्शानुपपत्तिरिति भावः । न च वैयाकरणमते राजपुरुष इति समुदायस्य राजसंबन्धिपुरुषे शक्तिरेव । एवं च राज्ञः शक्यतावच्छेदकत्वेन तत्र परामर्शो न स्यादिति वाच्यम्, शक्यतावच्छेदकतापर्याप्त्यधिकरणरूपविशेषणस्येत्यस्य तदर्थत्वेन राज्ञस्तथा विशेषणत्वाभावात्तस्यैवेतितत्पदेन परामर्शानुपपत्तेरभावात् । अत एव उक्तस्थले तत्पदेन विशेषणस्यापि परामर्शादेव । उत्सर्गः असति बाधके प्रवर्तमानो विधिः सति बाधके क्वचित्त्यज्यते । न नियम इति तच्छब्देन मुख्यस्यैव परामर्श इति नियमो नेत्यर्थः । तत्र संमतिमाह—तदुक्तमित्यादिना । अवशिष्टमिति विमर्श इत्यन्तो ग्रन्थः स्पष्टः ।

एवं वैयाकरणमतमुपन्यस्य नैयायिकमते, 'वाक्यार्थस्य दृशिक्रियायां कर्मतयान्वये मृगपदोत्तरं प्रथमापि न स्यात्' इत्युद्भावितदूषणमुद्धर्तुमुपन्यस्यति—मृगपदोत्तरमित्यादि न स्यादित्यर्थ इत्यन्तेन । नैयायिकमते कृतेराख्यातार्थतया कर्तुरनभिधानाद्देवदत्तेन पचतीत्यादिप्रयोगापत्तिवारणाय विशेष्यतासंबन्धेनाख्यातोपस्थाप्यसंख्याप्रकारकान्वयबोधं प्रति प्रथमान्तपदजन्योपस्थितिरितरविशेषणत्वतात्पर्याविषयीभूतार्थनिष्ठविशेष्यतासंबन्धेन हेतुरिति स्वीकरणीयम् । तथा च मृगो धावतीत्यत्र धावनानुकूलकृतिरूपभावनान्वयिनि मृगे धावतीत्याख्याताभिहितसंख्यान्वयानुरोधेन प्रथमान्तपदोपस्थाप्यत्वस्याप्यावश्यकतया मृगपदोत्तरं प्रथमा दुर्निवारेत्याशयेनाह—तत्रोच्यत इत्यादिना ।

मास्तु प्रथमानुपपत्तिरुदाहृतभाष्यकाराशयविरोधो हेलाराजसंमतिविरोधश्च दुष्परिहर इत्यत आह—यत्त्विति ।

ननु 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इत्ययं न्यायः सुबन्तस्थल एव तण्डुलमित्यादौ द्वितीयार्थकर्मत्वे प्रकृत्यर्थतण्डुलप्रकारकान्वयबोधस्य विशेष्यतासंबन्धेनोत्पादस्तत्र प्रत्ययभूतद्वितीयाजन्योपस्थितेः सत्त्वाच्चरितार्थ इति तिङन्तस्थले धात्वर्थविशेष्यकान्वयबोध एव स्वीकरणीयः, भावप्रधानमाख्यातमिति धात्वर्थभावनामुख्यविशेष्यकान्वयबोधतात्पर्यकयास्कमुनिवचनानुरोधादित्याशयेनाह—न चेति । भावप्रधानमाख्यातमित्यत्राख्यातपदं न तिङन्ते रूढं शास्त्रकारैस्तत्राप्रयोगात्, प्रयोगे च तत्र गौणत्वात्, तिङ्क्षेव शास्त्रकाराणां प्रसिद्धप्रयोगदर्शनात्, धात्वर्थभावनामुख्यविशेष्य-

कान्वयबोधजनकमाख्यातान्तमितिं वचनं भ्रान्तप्रलपितमिति मन्वानः सिद्धान्ती भावप्रधानमाख्यातमित्यस्य संख्याकालातिरिक्ताख्यातार्थस्यैव भावतया तादृशार्थविशेष्यकान्वयबोधं प्रत्याख्यातं कारणमित्येवंविधकार्यकारणभावपरत्वात् 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्' इत्यस्य प्रत्ययार्थविशेष्यकशाब्दबोधं प्रति प्रत्ययः कारणमित्येवंविधकार्यकारणभावपरतया यास्कवचनगतस्याख्यातपदस्य तिङ्-सुप्साधारणरूपेण प्रत्ययत्वेन पर्यवसानमेव युक्तम्। तण्डुलं पचतीत्यादौ द्वितीयार्थकर्मत्वविशेष्यकबोधस्य प्रत्ययार्थभावनाविशेष्यकबोधस्य च दर्शनादित्याशयवानाह—आख्यातपदमिति।

नन्वेवमप्युत्कटधावनस्यैव दृशिक्रियायां कर्मत्वं फणितात्पर्यविषयीभूतमिति तन्मतविरोध इत्यत आह—वस्तुतस्त्विति। नन्वेवं विशेष्यान्वयिनाऽन्वयित्वरूपं विशेषणत्वं न भाष्यसंमतमपि तूत्कटधावनस्य साक्षाद्दर्शनक्रियायां विशेषणत्वमित्याशङ्क्य तादृशविशेषणत्वस्यापि तान्त्रिकैः स्वीकारादित्याशयेन तान्त्रिकसंमतिमाह—स्पष्टं चेदमिति।

पार्थसारथिमिश्रमते विध्यर्थस्येष्टसाधनत्वरूपत्वात् 'यजेत' इत्यादिस्थले याग इष्टसाधनमित्यन्वयबोधस्वीकारेण 'दध्ना जुहोति' इत्यत्र गुणविधौ दधीष्टसाधनमित्यन्वयबोधः, धात्वर्थांशेऽनुवादः; होमनिष्ठं दधिकरणकत्वमिष्टसाधनमिति वान्वयबोधः। तथा च प्रकृते 'सोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र प्रचरणाङ्गभूताः सोष्णीषा ऋत्विज इष्टसाधनमित्यन्वयबोधस्वीकारे उष्णीषविशिष्टर्त्विजामिष्टसाधनत्वान्वये उष्णीषस्यापीष्टसाधनत्वान्वयः। एवं 'लोहितोष्णीषा' इत्यत्रापि प्रचरणाङ्गभूता लोहितोष्णीषविशिष्टर्त्विज इष्टसाधनमित्यन्वयबोधस्वीकारे लौहित्यविशिष्टोष्णीषस्य ऋत्विग्द्वारेष्टसाधनतान्वये लौहित्यस्यापीष्टसाधनत्वान्वय इत्यङ्गीकारः। तथा च प्रकृतेऽपि धावनक्रियाविशिष्टमृगस्य दृशिक्रियाकर्मत्वे धावनस्यापि दृशिक्रियाकर्मत्वं भाष्यसंमतमक्षतमेवेति भावः। भट्टमतेऽपि 'सोमेन यजेत' इत्यत्र सोमवता योगेनेष्टं भावयेदिति वाक्यार्थस्वीकारे सोमविशिष्टयागस्य भावनायां करणत्वेनान्वये यागद्वारा सोमस्यापि करणत्वेनान्वये बाधकाभावेन विशेष्यान्वय्यन्वयित्वरूपं विशेषणत्वमेषामपीष्टमेवेत्युदाहृतस्थले द्वयोरपि सोष्णीषैः ऋत्विग्भिः प्रचरणं भावयेल्लोहितोष्णीषैर्ऋत्विग्भिः प्रचरणं भावयेदित्यन्वयबोधस्वीकारेण विशेषणीभूतोष्णीषस्य ऋत्विग्द्वारा लोहितस्य चोष्णीषद्वारा भावनाकरणत्वस्येष्टत्वेन विशेष्यान्व-

य्यन्वयित्वरूपविशेषणत्वमव्याहतमिति । धावनस्यापि मृगद्वारा दृशिक्रियायां कर्मतासंबन्धेनान्वयित्वमव्याहतमिति न विरोधः । न च भट्टमते सोमेन यजेतेत्यादौ यागस्यैव करणत्वं न तु सोमस्यापि, अन्यथा यागस्य सोमवत्त्वं सोमेन यजेतेति वाक्यान्तरं विना नोपपद्यत इत्यर्थाक्षिप्तवाक्येन 'सोमेन यागं भावयेत्' इत्यन्वयबोधस्वीकारोऽनुपपन्नः स्यादिति वाच्यम्।

'विधाने वानुवादे वा यागः करणमिष्यते'

इति वार्तिकेन 'दध्ना जुहोति' इत्यादिस्थलेऽपि केवलगुणविधौ दधिमता होमेनेष्टं भावयेदिति वाक्यार्थबोधस्य स्वीकारस्तथा चात्रापि दधिमत्त्वं होमे दध्ना जुहोतीति वाक्यान्तरमन्तरेण नोपपद्यत इत्यर्थाक्षिप्तवाक्येनान्वयबोधेऽपि वार्तिकोक्तन्यायानुसारेण धात्वर्थस्यैव करणत्वेन दध्यादिकरणकभावनाया अलाभेन श्रूयमाणगुणविध्यनुपपत्तिरिति विशिष्टस्य यागस्य भावनायां करणत्वेनान्वये विशेषणस्यापि करणत्वेनान्वय इत्यङ्गीकारस्यैव युक्तत्वाद्वाक्यान्तरकल्पने गौरवाच्चेति विशेष्यान्वय्यन्वयित्वरूपं विशेषणत्वं मीमांसायां स्पष्टमित्यभिप्रेत्य विशेष्यान्वय्यन्वयित्वरूपं विशेषणत्वमाह—तथा हीत्यादि स्वीकारादित्यन्तेन । तत्रापि उत्तरवाक्येऽपि, परंपरया स्वाश्रयाश्रयत्वसंबन्धेन, अन्वयश्चास्य उष्णीषद्वारा ऋत्विग्रूपविशेष्ये । तथा च लौहित्यस्य स्वाश्रयाश्रयत्वसंबन्धेन स्वविशेष्यः ऋत्विक्पदार्थस्तदन्वयिनेष्टसाधनत्वेनान्वय इति फलितम् ।

ननु धावनाश्रयमृगस्य दृशिक्रियायां कर्मत्वेनान्वये 'पश्य मृगो धावति' इति न ब्रूयाद्धावन्तं मृगं पश्येत्येव ब्रूयादित्याशयेनाक्षिपति—यत्त्विति । नीलं घटं पश्य नीलघटं पश्येति व्याससमासयोः प्रयोगे वक्तृतात्पर्यस्यैव नियामकताया दृष्टत्वात्पश्य मृगो धावति धावन्तं मृगं पश्येति प्रयोगद्वैविध्येऽपि वाक्यार्थभेदस्य नियामकत्वाभावेन वक्तुरिच्छाया एव नियामकत्वमित्याशयेन समाधत्ते—तन्न पर्यायेत्यादिना । सति वक्तुस्तात्पर्ये धावन्तं मृगं पश्येत्यत्रापि प्रयोगे इष्टापत्तेर्नैतावता पश्य मृगो धावतीत्यस्य हानिर्नह्यभेदार्थकपर्यायाणां मध्ये एकप्रयोगे सत्यपरः प्रयोगः केनचिन्निषेद्धुं शक्यत इति भावः । ननु धावन्तं मृगं पश्य, पश्य मृगो धावतीत्यनयोरेकत्र मृगान्वितकर्मत्वस्यापरत्र कर्मत्वसंबन्धेन मृगस्य दर्शनक्रियायामन्वयविवक्षेत्यर्थभेदोऽस्त्येवेति धावनक्रियायाः कर्मत्वेन दृशिक्रियायामन्वयविवक्षायां पश्य मृगो धावतीत्येव प्रयोगः कर्तव्य इत्यत आह—सर्वथेति । न काप्यनुपपत्तिरिति । धावनक्रियाविशिष्टमृगस्य कर्मत्वेनान्वये भाष्यकारा-

दिविवक्षाविरोधो धावतीत्यत्र शत्रापत्तिर्मृगपदोत्तरं द्वितीयापत्तिरित्येवमः- द्यनुपपत्तिः कापि नास्तीति भावः।

नन्वेकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमुदायत्वं वाक्यत्वमित्य- त्र तान्त्रिकैस्तिङन्तसमूहः सुबन्तसमूह इत्यादिक्रमेण वाक्यं त्रिधा विभ- ज्य त्रयः काला इत्यादिक्रमेणोदाहृत्य त्रयः काला इत्यत्र तिङन्तपदाभावे- नाव्याप्तावभिहितायां ज्ञायन्त इति पदाध्याहारेण त्रित्वविशिष्टाभिन्नकाला- भिन्नाश्रयवृत्ति(?विषयक)ज्ञानमित्यन्वयबोधस्वीकारेण वैयाकरणोक्तवा- क्यलक्षणस्य निर्दुष्टत्वात् 'पश्य मृगो धावति' इत्यत्रापि क्रियायाः कर्मतया दृशिक्रियायामन्वयेऽपि बाधकाभाव इत्याशङ्क्य समाधातुमनुवदति—य- त्त्विति। 'त्रयः काला ज्ञायन्ते' इत्यत्र त्वदुक्तलक्षणस्याव्याप्त्यभावेऽपि कति काला इति प्रश्ने त्रयः काला इत्युत्तरं दृश्यते। तत्र क्रियाध्याहारे प्रयोज- नाभावाल्लक्षणमव्याप्तमित्याशयेनाह—तन्नेति। क्रियाविनिर्मुक्तत्वसंभवा- दिति। न च कति कालास्त्रयः काला इति प्रश्नोत्तरवाक्ययोरपि भवन्ति ज्ञायन्त इति पदाध्याहारसंभवान्नोक्तलक्षणमव्याप्तमिति वाच्यम्। कति काला इति कालत्वव्याप्यप्रकारविशेषजिज्ञासया प्रश्नकरणे तज्जिज्ञा- सानिवर्तनाय प्रकारविशेषज्ञानजनकोत्तरवाक्यस्यैवाकाङ्क्षितत्वेनानाकाङ्क्षि- तक्रियाध्याहारस्यानुचितत्वादिति भावः।

ननु क्रियामुख्यविशेष्यकान्वयबोधमङ्गीकृत्य प्रथमान्तार्थमुख्यविशेष्य- कबोधस्वीकारे 'शृणु गर्जति मेघः' 'नटो गायति शृणु' 'घटोऽनश्यत्पश्य' इत्यादौ गर्जनाश्रयमेघस्य गानकर्तृनटस्य श्रावणकर्मत्वासंभवात्, वर्त- माननाशप्रतियोग्युत्पत्तिकनाशप्रतियोगिघटस्य दृश्यर्थकर्मत्वासंभवाच्च क्रि- यामुख्यविशेष्यकान्वयबोध एव स्वीकर्तव्य इतीमां शङ्कां समाधातुमनुव- दति—यत्तु शृण्विति। 'सविशेषणे हि विधिनिषेधौ प्रवर्तमानौ' इति न्यायेन गर्जनस्य गानस्य नाशस्य च श्रुदृश्यर्थान्वयसंभवेन न काप्य- नुपपत्तिरित्याह—तन्न, सविशेषणे हीत्यादिना। न च सविशेषणे हीति न्यायमाश्रित्य समाधानं न संभवति तादृशन्याये प्रमाणाभावादिति वाच्यम्। स्वर्गी ध्वस्तः, शिखी ध्वस्तः, इत्यादि प्रयोगदर्शनाद्ध्वस्त इत्यत्र क्त-

१ श्रावणं श्रवणेन्द्रियजन्यप्रत्यक्षं श्रुधात्वर्थः। २ वर्तमानः वर्तमानकालिकः यो नाशः ध्वंसः तत्प्रतियोगिनी उत्पत्तिर्यस्य सः वर्तमाननाशप्रतियोग्युत्पत्तिकः अतीतोत्पत्तिक इतियावत्। इदं नाशविशेषणम्। अनेन वर्तमानध्वंसप्रतियोग्युत्पत्तिकत्वमतीतत्वमिति दर्शितम्। अतीतत्वं भूतत्वमित्यनर्थान्तरम्।

६

प्रत्ययार्थध्वंसप्रतियोगिनः शिखिनः स्वर्गिणश्चाविनाशेन तत्रान्वयासंभवेन शिखास्वर्गयोस्तदन्वयस्वीकारात् । नच ध्वंसप्रतियोगिनः प्रथमान्तार्थस्य शिखायां स्वर्गे चापदार्थे कथमन्वयः, यत्किंचित्पदार्थनिष्ठप्रकारतानिरूपित-विशेष्यतासंबन्धेनान्वयबोधं प्रति पदजन्यपदार्थोपस्थितिर्मुख्यविशेष्यतासंबन्धेन कारणमित्येतादृशार्थक—'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'-इति न्यायादिति वाच्यम् । एकदेशान्वयस्यापि क्वचिद्दृष्टत्वात् । ननु क्व दृष्टमितिचेत्—शरैः शातितपत्रश्चैत्रस्य गुरुकुलमित्यादौ दर्शनात् । ननु घटो नित्यः पशुरपशुरित्यादावपि नित्यत्वाश्रयघटत्ववान्, पशुभिन्नपशुत्ववानित्याद्यन्वयबोधे बाधकाभावेन तेषामपि प्रामाण्यं स्यादिति चेन्न । शरैरित्यादेः साकाङ्क्षत्वादेकदेशान्वयसंभवेऽपि घटो नित्य इत्यादेर्नित्यसाकाङ्क्षत्वाभावेनाप्रामाण्यात् । ननु स्वर्गी ध्वस्त इत्यादौ नित्यसाकाङ्क्षत्वाभावात्कथमेकदेशान्वय इति चेन्न । अन्वयबोधस्य तात्पर्याधीनत्वेन प्रकृते एकदेशान्वयतात्पर्यस्य, प्रामाण्यान्यथानुपपत्त्या स्वीकारात् । न च घटो नित्य इत्यादेरपि तात्पर्यसद्भावे एकदेशान्वयसंभवे प्रामाण्यापत्तिरिति वाच्यम् । सति तात्पर्ये इष्टत्वात् । अत एव हि यत्र पदार्थेऽन्वयासंभवस्तत्र भावप्रधाननिर्देशपरतयापि निर्वाहो ग्रन्थकृतां संगच्छते, सर्वतो बलवती ह्यन्यथानुपपत्तिरिति न्यायात् । नच शिखी ध्वस्त इत्यादौ शिख्यादिपदस्य शिखामात्रलाक्षणिकत्वेन शिखा ध्वंसप्रतियोग्यभिन्नेत्यन्वयबोधस्वीकारे 'शिखा ध्वस्ता' 'स्वर्गो ध्वस्त' इत्यादिवाचकशब्दप्रयोगस्यैव 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्ज्महे' इति न्यायेन संभव इति वाच्यम् । लाक्षणिकमात्रस्यैव विलयप्रसङ्गात् । न च लाक्षणिकं द्विविधं निरूढं प्रयोजनवच्च । निरूढं कुशलादि । प्रयोजनवद्गङ्गायां घोष इत्यादि । तत्र 'स्वर्गी ध्वस्तः' इत्यादिकं न प्रयोजनवत्, प्रयोजनस्य शैत्यपावनत्वादिप्रतीतेरिवात्र प्रयोजनप्रतीतेरभावात्; नापि निरूढमनादितात्पर्यकल्पनागौरवापत्तेरिति वाच्यम् । स्वर्गी ध्वस्त इत्यादिप्रामाणिकप्रयोगदर्शनेनानादितात्पर्यकल्पनायाः प्रामाणिकत्वेन गौरवस्यादोषत्वात् । ननु शिख्यादिपदस्य शिखामात्रलक्षणास्वीकारे तत्पदजन्यपदार्थोपस्थितिमुख्यविशेष्यत्वेन शिखाया विशेषणत्वाभावात् सविशेषणे हीति न्यायानुसारेणोदाहरणत्वं तत्र न संगतमिति शिख्यादिपदस्य शिखादिविशिष्टधर्मिबोधकत्वमित्येव स्वीकरणीयम् । तथा च पदार्थैकदेशीभूतायां शिखायां ध्वंसप्रतियोगिरूपपदार्थान्वये पदार्थः पदा-

र्थेनान्वेतीति नियमस्य व्यभिचारो दुर्वार एवेति चेन्न । चैत्रस्य गुरुकुलमित्यादौ व्यभिचारवारणायासत्यामाकाङ्क्षायामिति विशेषणवत्स्वर्गी ध्वस्त इत्यादावेकदेशान्वयानुरोधेनासत्येकदेशान्वयप्रयोजकानादितात्पर्ये इति विशेषणस्य पदार्थः पदार्थेनेत्यत्रावश्यकत्वात् । नन्वत्र बोधः कीदृशः ध्वंसप्रतियोगिस्वर्गवान्पुरुष इत्येतादृश इति चेत्स्वर्गशालिन्यपि स्वर्गी ध्वस्त इत्यादिप्रयोगापत्तेः । वर्तमानध्वंसप्रतियोग्युत्पत्तिकस्वर्गवानित्यन्वयबोध इति चेत्स्वर्गोत्पत्तिद्वितीयक्षणेऽपि स्वर्गी ध्वस्त इति प्रयोगापत्तेः । पुरुषवृत्तिः स्वर्गो वर्तमानध्वंसप्रतियोगीति बोध इति चेत्पदार्थोपस्थितावुपसर्जनस्य विशेष्यत्वे विशेष्यस्य च विशेषणत्वे घटो नित्य इत्यादेरपि घटवृत्तिघटत्वं नित्यमित्याद्यन्वयबोधसंभवेन प्रामाणिकत्वापत्तेः । स्वर्गविशिष्टो ध्वंसप्रतियोगीति चेद्विशेष्ये ध्वंसप्रतियोगित्वस्य बाधेनाप्रामाण्यापत्तेः । विशिष्टवैशिष्ट्यबोधस्थले विशेषणतावच्छेदकस्य परंपरासंबन्धेन विशेष्यान्वयवद्विशिष्टे वैशिष्ट्यमिति बोधे वर्तमानध्वंसप्रतियोगिनो विशेषणे साक्षात्संबन्धेन विशेष्ये परंपरासंबन्धेनान्वये बाधकाभावान्नायोग्यतेति चेत्स एव संबन्धो न ज्ञायते येन विशेष्येऽन्वयः स्यात् । अत्रोच्यते—स्वाभिन्नाश्रयत्वं विशेष्यसंबन्धः । न च घटो नित्य इत्यादेरपि स्वाभिन्नाश्रयत्वसंबन्धेन नित्यस्यापि घटेऽन्वये बाधकाभावेन प्रामाण्यं स्यादिति वाच्यम् । 'नहि निमित्तमस्तीत्यारोप आरोपे सति निमित्तानुसरणम्' इति न्यायेन प्रामाणिक—'स्वर्गी ध्वस्तः'—इत्यादिप्रयोगनिर्वाहमात्रस्यैवाश्रयणीयत्वात् । अन्यथा लोहितः स्फटिक इत्यादौ लौहित्यस्य स्फटिके परंपरासंबन्धेन भानवत्स्वाश्रयसंयोगित्वेन तस्याकाशे सत्त्वेन लोहित आकाश इत्यादेरपि प्रामाण्यापत्तिः । अतः स्फटिकत्वविशिष्टानुयोगिकत्वविशिष्टपरंपरायाः लौहित्यनिरूपितसंसर्गत्वं स्वीक्रियते न त्वाकाशाद्यनुयोगिकत्वविशिष्टपरंपरायाः, लोहित आकाश इत्याद्यभियुक्तप्रयोगाभावात् । तथा च प्रकृते पुरुषानुयोगिकत्वविशिष्टस्वाभिन्नाश्रयत्वस्य ध्वंसप्रतियोगिनिरूपितसंसर्गत्वं 'स्वर्गी ध्वस्तः' इत्याद्यभियुक्तप्रयोगात्, न तु घटाद्यनुयोगिकत्वविशिष्टस्वाभिन्नाश्रयत्वस्य नित्यनिरूपितसंसर्गत्वं

---

१ अत्र शिखिपदार्थे शिखाविशिष्टे ध्वस्तपदार्थस्य वर्तमानध्वंसप्रतियोगिनः वैशिष्ट्यं बुध्यते । तत्र विशेषणे शिखायां ध्वस्तपदार्थस्य साक्षात्संबन्धेन अभेदेनान्वयः; विशेष्ये शिखाविशिष्टे परंपरया स्वाभिन्नाश्रयत्वसंबन्धेन । तत्र स्वं ध्वस्तपदार्थः वर्तमानध्वंसप्रतियोगी, स्वाभिन्ना शिखा, तदाश्रयत्वस्य शिखाविशिष्टे देवदत्तादौ सत्त्वान्न काचिदनुपपत्तिरित्यर्थः ।

'घटो नित्यः' इत्याद्यभियुक्तप्रयोगाभावात् । एवं च सविशेषणे हीत्यादिन्यायस्य विशेष्ये विधिनिषेधयोः साक्षात्संबन्धेन बाधे सति विशेषणे साक्षात्संबन्धेन, विशेष्ये परंपरासंबन्धेन पर्यवसानमित्यर्थः । इत्थं च शृणु गर्जति मेघ इत्यादावपि गर्जनाश्रयमेघकर्मकश्रावणाश्रयस्त्वमिति बोधस्वीकारे मेघस्य साक्षात्संबन्धेन श्रावणेऽन्वयासंभवेन गर्जने विशेषणे साक्षात्संबन्धेन श्रावणकर्मत्वं, गर्जनविशिष्टमेघे विशेष्ये स्वाश्रयाश्रयत्वसंबन्धेनेति गर्जनविशिष्टमेघस्य कर्मत्वसंबन्धेन श्रावणेऽन्वयसंभवेन नायोग्यता, न वा गर्जनकर्मकश्रावणानन्वयापत्तिः । नन्वेवमपि स्वाभिन्नाश्रयत्वसंबन्धेन ध्वंसप्रतियोगिनो नामार्थस्य स्वर्गिणि नामार्थेऽन्वयस्वीकारे नामार्थयोरिति व्युत्पत्तिभङ्ग इति चेन्न । निपातस्थल इवात्रापि व्युत्पत्तिसंकोचात् । न च निपातस्थले व्युत्पत्तिसंकोच उभयवादिसिद्धो नात्र तथेति वाच्यम् । गत्यन्तराभावेनैतत्संकोचस्याप्युभयवादिसिद्धत्वात् । न च सविशेषणे हीति न्यायस्य, स्वर्गी ध्वस्त इत्यादौ धर्मिवाचकशब्दस्य धर्ममात्रतात्पर्यग्राहकत्वेन, स्वर्गो ध्वंसप्रतियोगीत्यन्वयबोधस्वीकारेण, नामार्थयोरिति व्युत्पत्तेः, पदार्थः पदार्थेनेति व्युत्पत्तेश्चासंकोचसंभवे, संकोचाश्रयणेन परंपरासंबन्धेनान्वयबोधस्वीकरणमन्याय्यमिति वाच्यम् । स्वर्गी ध्वस्त इत्यादौ धर्मिग्रहणवैयर्थ्यापत्तेः । तथा च स्वाभिन्नाश्रयत्वसंबन्धेन ध्वंसप्रतियोगिनो धर्मिण्यन्वयविवक्षास्थले स्वर्गी ध्वस्त इति, स्वर्गमात्रे ध्वंसप्रतियोग्यन्वयविवक्षास्थले च स्वर्गो ध्वस्त इति प्रयोगः लौकिकानां शास्त्रकाराणां च विवक्षाभेदेन । अथ शब्दो निरूप्यते, श्रुतोऽयमर्थः, शङ्खः श्रूयते इत्यादिप्रयोगदर्शनात् तत्र शब्दो निरूपणविषय इत्यन्वयबोधे निरूपणस्य ज्ञानानुकूलव्यापारतया तस्य निर्विषयत्वेऽपि तज्जन्यं ज्ञानविषयत्वमादायैव शब्दे निरूपणविषयत्वं स्वीक्रियते, श्रुतोऽयमर्थ इत्यत्रार्थे श्रु—धात्वर्थकर्मत्वाभावेऽपि श्रावणविषयशब्दजन्यज्ञानविषयत्वमादायैवार्थे श्रु—धात्वर्थकर्मता, शङ्खः श्रूयत इत्यत्र शङ्खस्य तत्कर्मत्वाभावेऽपि शङ्खध्मानस्य तत्कर्मतया तदवच्छेदकशङ्खस्यापि तत्कर्मत्वमभ्युपगम्यते । इत्थं च शृणु गर्जति मेघ इत्यादौ गर्जनविशिष्टमेघस्यापि श्रावणविषयीभूतगर्जनाश्रयतया श्रावणकर्मत्वाभ्युपगमे गर्जनस्य मुख्यकर्मत्वं मेघस्य तु गौणकर्मत्वमिति विवक्षयैतादृशप्रयोगे, गर्जनादेरेव श्रावणविषयत्वरूपविवक्षितार्थलाभे बाधकाभाव इत्यभिप्रेत्य 'विशेषणेषु गर्जनगानाभावेषु श्रवणदर्शनान्वयसंभवात्'

इत्युक्तं, न तु गर्जनादेरेव श्रु—धात्वर्थकर्मत्वाभिप्रायेण। तथा सति वैयाकरणमतप्रवेशापत्तेः। ननु मेघगर्जनं शृणु, मृगधावनं पश्येत्यादिप्रयोगेऽपि च गर्जनादेः श्रावणकर्मत्वं, तत्कर्मीभूतगर्जनाश्रयतया मेघस्य परंपरया श्रावणकर्मत्वं विवक्षितं संभवति, एवं धावनस्य मृगादेश्च दर्शनविषयत्वं संभवतीति, शृणु गर्जति मेघः पश्य मृगो धावतीत्येवंविधवक्रप्रयोगाश्रयणमृजुबुद्धीनां न शोभावहमिति चेन्न। साहित्यशास्त्रवासनावासितहृदयानां कुटिलमार्गगमनेनैव चमत्कारोदयदर्शनात्।

ननु पश्य मृगो धावतीत्यत्र धात्वर्थनामार्थयोरभेदातिरिक्तसंबन्धेनान्वयबोधस्य तण्डुलः पचतीत्यादिप्रयोगप्रामाण्यवारणायाव्युत्पन्नतया मृगस्य कर्मतासंबन्धेन दर्शनेऽन्वयो न संभवतीत्याशङ्क्य केनचिन्मृगपदोत्तरप्रथमायाः कर्मत्वमर्थस्तत्र मृगस्याधेयतासंबन्धेनान्वयः, कर्मत्वस्य निरूपकत्वसंबन्धेन दर्शनेऽन्वय इत्युक्तम्; तद्दूषयितुं शृणु गर्जति मेघ इत्यादौ श्रवणे मेघपदोत्तरप्रथमार्थकर्मत्वस्यायोग्यतयान्वयासंभवादित्युपाध्यायवंशमण्युक्तमनुवदति—यत्त्विति। अपास्तमित्यत्र हेतुभूतस्यैतेनेत्यस्य श्रवणे मेघकर्मत्वाभावेनेति व्याख्यानभूतं द्रष्टव्यम्। खले कपोतन्यायेन राजपुरुषप्रवेशन्यायेन वा शाब्दबोधाभ्युपगमेन गर्जनस्याश्रयत्वे आश्रयत्वस्य मेघे मेघस्य कर्मत्वे कर्मत्वस्य च श्रुधात्वर्थे अन्वयेन गर्जनाश्रयत्वविशिष्टमेघस्य कर्मत्वे तादृशमेघनिष्ठकर्मत्वस्य च श्रु—धात्वर्थेऽन्वये वा सविशेषणे हीति न्यायेन विशेषणांश एव विवक्षाभ्युपगमेन, गौणकर्मत्वस्य मेघेऽप्यबाधितत्वादित्याशयेन दूषयति—तन्नेति। कर्मत्वबाधेऽपीति गर्जनविशिष्टमेघे मुख्यकर्मत्वबाधेऽपीत्यर्थः। गर्जनकर्मत्वस्याप्यन्वयसंभवादिति गर्जनविशिष्टमेघस्य श्रु—धात्वर्थगौणकर्मत्वमपि गर्जनस्य तत्कर्मत्वविवक्षायामेवोपपद्यते इति गर्जनकर्मत्वस्य श्रु—धात्वर्थे बोधसंभवादित्यर्थः। श्रावणे मेघकर्मत्वबाधेऽपि गर्जनकर्मत्वस्यान्वयसंभवादिति यथाश्रुते, प्रथमार्थकर्मत्वे गर्जनस्यान्वयो न तु गर्जनविशिष्टमेघस्येत्यर्थो भासते स चानुपपन्नः, प्रथमार्थे प्रातिपदिकार्थस्य मेघस्यैवान्वयस्य युक्ततया गर्जनस्याप्रातिपदिकार्थत्वेनान्वयायोग्यत्वात् प्रत्ययानामिति व्युत्पत्तेः। एवं च मृगो धावतीत्यत्र धात्वर्थनामार्थयोरभेदातिरिक्तकर्मत्वरूपसंबन्धेनान्वयानुपपत्त्या मृगपदोत्तरं प्रथमायाः कर्मत्वार्थकत्वस्वीकरणं शृणु गर्जति मेघ इत्यादौ मेघादेः श्रु—धात्वर्थकर्मत्वासंभवेन न समीचीनमिति 'भक्षितेऽपि लशुने न शान्तो व्याधिः'

इति न्यायेन वंशमणिदूषणं न सम्यगेवेत्यभिप्रायेणाह—कर्मत्वं प्रथमार्थ इति सम्यगेवोक्तमिति। सम्यक्त्वं चेह वंशमण्युक्तदूषणाग्रस्तत्वमेव, न तु सर्वथा निर्दुष्टत्वं सुविभक्ताविति वक्ष्यमाणदूषणग्रासात्। 'कर्तृकर्मणोः कृति' इति षष्ठ्याः कर्मत्वेनानुशासनवत्प्रथमायाः कर्मत्वेनानुशासनाभावात्। अन्यथानुपपत्त्या च स्वारसिकलक्षणाश्रयस्य प्रथमायाः कुत्रचिदशक्तत्वेन स्वीकर्तुमशक्यत्वात्। न च 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यनुशासनेन प्रथमाविभक्तेरपि लिङ्गादौ शक्तत्वमस्त्येवेति वाच्यम्। तत्सूत्रस्य प्रथमाव्यञ्जकत्वमात्राभिप्रायकत्वादिति। ननु पश्य मृगो धावतीत्यत्र कर्मत्वसंबन्धेन मृगस्य दर्शनक्रियान्वयापेक्षया कर्मत्वस्य प्रथमार्थत्वे को विशेषः। न च नामार्थधात्वर्थयोरभेदातिरिक्तसंबन्धेनान्वयोऽनुपपन्न इति व्युत्पत्तिविरोधवारणं, तस्य तदर्थत्वे विशेष इति वाच्यम्। यादृशसामग्रीसत्त्वे यादृशान्वयबोधोऽनुभवसिद्धस्तादृशसामग्र्यां तद्बोधस्यापादनीयतया तण्डुलः पचतीति समभिव्याहारे तण्डुलकर्मकपाकविशेष्यकान्वयबोधस्याननुभूतत्वेनातिप्रसङ्गाभावात्। पश्य मृगो धावतीत्यत्र मृगकर्मकदर्शनविशेष्यकान्वयबोधस्यानुभवसिद्धत्वेन कर्मतासंबन्धेन मृगप्रकारकान्वयबोध एव स्वीकरणीय इति तादृशव्युत्पत्त्यस्वीकारेऽपि दोषाभावादित्यत आह—पदार्थत्व इति। निरुक्तस्थले मृगकर्मकदर्शनविशेष्यकान्वयबोधस्य मृगकर्मत्वप्रकारकदर्शनविशेष्यकत्वेनाप्युपपत्तौ प्रथमान्तार्थस्य कर्मतासंबन्धेन दर्शनेऽन्वयस्य व्युत्पत्तिविरुद्धस्यापि स्वीकारासंभवादिति भावः।

ननु विशेषानुशासनं विनान्यविभक्त्यर्थेऽन्यविभक्तिलक्षणास्वीकारे तण्डुलं पचतीति(वत्)तण्डुलः पचतीत्यत्रापि लक्षणया प्रथमायाः कर्मत्वार्थकत्वसंभवेन तण्डुलकर्मत्वप्रकारकपाकविशेष्यकान्वयबोधः संभवतीति। तथा च भारतस्य श्रवणं व्यासस्य कृतिरित्यत्रापि कर्तृकर्मणोः कृतीत्यनुशासनं विनापि भारतकर्मकश्रवणं व्यासकर्तृककृतिरिति कर्मत्वादिप्रकारकान्वयबोधानुरोधेन षष्ठ्याः कर्मत्वाद्यर्थे लक्षणासंभवेनानुशासनं व्यर्थं स्यादित्यभिप्रायेणाह—वस्तुतस्तु विभक्ताविति। नन्वन्वयानुरोधेनैव विभक्तेर्लक्षणा, कर्तृकर्मणोः कृतीत्यनुशासनं तु द्वितीयातृतीययोर्निवृत्त्यर्थमिति न वैयर्थ्यमित्यत आह—किं चेति। शक्याभावादिति। प्रातिपदिकार्थमात्र इत्यादिष्वर्थेषु निरुक्तसूत्रस्य प्रातिपदिकादिकस्य तात्पर्यग्राहकतया प्रथमाया अर्थविशेषाशक्ततया शक्यसंबन्धरूपलक्षणा न संभवतीति भावः।

ननु शृणु गर्जति मेघ इत्यादौ मेघकर्तृकगर्जनस्य साक्षात्कर्मतासंबन्धेन श्रु-धात्वर्थान्वयसंभवेन प्रथमतो गर्जनस्य मेघेऽन्वयमङ्गीकृत्य तद्द्वारा धात्वर्थान्वयस्वीकारः 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन दूरतस्त्याज्य एवेत्यत आह—शङ्खाः श्रूयन्त इत्यादि। ध्मायमानाः शङ्खाः श्रूयन्त इत्यर्थः। भेर्यः श्रूयन्ते शब्दायमाना भेर्यः श्रूयन्त इत्यर्थः। तथा च ध्मानविशिष्टाः शङ्खाः श्रवणकर्मत्वाश्रयीभूताः, ध्मानविशिष्टशङ्खाभिन्नबहुत्वावच्छिन्नकर्मवृत्तिश्रवणानुकूलो व्यापारः; शब्दविशिष्टभेर्यः श्रवणकर्मत्वाश्रयीभूताः, शब्दविशिष्टभेर्यभिन्नबहुत्वावच्छिन्नकर्मवृत्तिश्रवणानुकूलो व्यापार इत्याद्यन्वयबोधस्वीकारे सविशेषणे हीति न्यायेन शङ्खविशेषणीभूतशब्दे श्रु-धात्वर्थकर्मत्वस्यान्वयस्वीकारस्यावश्यकतया शृणु गर्जति मेघ इत्यादावप्युक्तन्यायेनान्वयबोधस्वीकारे बाधकाभाव इति भावः। ननु शङ्खाः श्रूयन्त इत्यादौ शङ्खादिपदस्य ध्मायमानशङ्खादौ लक्षणाया आवश्यकत्वे शङ्खादिशब्दे शङ्खादिपदस्य लक्षणास्वीकारेणापि तत्र साक्षाच्छ्रु-धात्वर्थकर्मत्वान्वयसंभवेन सविशेषणे हीतिन्यायो नावतरतीति कथं तन्न्यायेन प्रकृते निर्वाह इत्यत आह—निध्वानमश्रूयत पाञ्चजन्य इत्यादि। तत्र हि निरुक्तविशेषणविशिष्टनिध्वानाश्रयीभूतपाञ्चजन्याभिन्नैककर्मवृत्त्यतीतोत्पत्तिकश्रवणानुकूलो व्यापार इति, जनकर्तृकातीतोत्पत्तिकश्रवणकर्मत्वाश्रयीभूतो निरुक्तविशेषणविशिष्टनिध्वानाश्रयीभूतः पाञ्चजन्यः, इत्येवंप्रकारेणान्वयबोधस्यावश्यकतया सविशेषणे पाञ्चजन्ये श्रवणकर्मत्वबाधेन तद्विशेषणे निध्वाने तत्कर्मत्वपर्यवसानमिति सविशेषणे हीति न्यायस्वीकार आवश्यक इति, शृणु गर्जति मेघ इत्यादावपि प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारेऽपि तन्न्यायेन निर्वाह इति भावः।

ननु पश्य मृगो धावतीत्यत्र धावनानुकूलकृतिनिष्ठ-समवायसंबन्धावच्छिन्नप्रकारता-निरूपितविशेष्यत्वाभिन्नमृगनिष्ठ-कर्मतासंबन्धावच्छिन्नप्रकारता-निरूपितविशेष्यत्वाभिन्न-स्वविशिष्टकर्मत्वसंबन्धावच्छिन्नधावननिष्ठप्रकारतानिरूपितविशेष्यत्वा-ऽभिन्नदृश्यर्थनिष्ठस्वनिरूपितत्वसंबन्धावच्छिन्नप्रकारता-निरूपितविशेष्यत्वाभिन्नाश्रयत्वनिष्ठ-स्वरूपसंबन्धावच्छिन्नप्रकारता-निरूपितयुष्मत्पदार्थनिष्ठमुख्यविशेष्यताशाली धा-

---

१ स्वं धावनम्। अनेन धावनस्य धर्मिपारतन्त्र्येण दृश्यर्थे भानमुक्तम्।

वनकर्तृमृगकर्मकदर्शनाश्रयस्त्वमिति बोधो जायत इत्युक्तम् । शृणु गर्जति मेघ इत्यादावपि' गर्जनाश्रयत्वनिष्ठस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितमेघनिष्ठविशेष्यताभिन्नकर्मतासंबन्धावच्छिन्नप्रकरतानिरूपितविशेष्यत्वाभिन्नस्वविशिष्टकर्मत्वसंबन्धावच्छिन्नगर्जननिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नस्वनिरूपितत्वसंबन्धावच्छिन्नश्रु—धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नस्वरूपसंबन्धावच्छिन्नाश्रयत्वनिष्ठप्रकारतानिरूपितत्वंपदार्थनिष्ठमुख्यविशेष्यताशाली बोधो गर्जनविशिष्टमेघकर्मकश्रवणाश्रयस्त्वमिति, निध्वानाश्रयशङ्खोऽतीतोत्पत्तिकश्रवणकर्मत्वाश्रय इत्याद्यन्वयबोधः स्वीकर्तव्यः । स च 'वह्निना सिञ्चेत्' इत्यादौ सेके वह्निकरणकत्वान्वय इव बाधितः, श्रवणे स्वविशिष्टमेघविषयकत्वबाधेन गर्जनस्य धर्मिपारतन्त्र्येण श्रवणेऽन्वयासंभवादिति चेन्न । साक्षात्संबन्धेन गर्जनविशिष्टमेघस्य श्रु—धात्वर्थकर्मत्वबाधेऽपि स्वाश्रयगर्जनवत्त्वसंबन्धेन मेघे. कर्मत्वान्वये बाधकाभाव इति गर्जनविशिष्टं मेघं धर्मिणं द्वारीकृत्य तद्विशेषणगर्जनस्य निरुक्तसंबन्धेन श्रुधात्वर्थेऽन्वयसंभवात् । ननु शृणु गर्जति मेघ इत्यादौ तार्किकमतेऽपि सविशेषणे हीति न्यायेन योग्यत्वव्यवस्थापनेऽपि मेघादौ गर्जतीत्येकवचनोपस्थाप्यसंख्याया अन्वयो न स्यात् । पचति चैत्र इत्यादावाख्यातार्थकृतिभूतभावनामुख्यविशेष्य एव चैत्रे तदुपस्थाप्यसंख्यान्वयस्य दृष्टतया गर्जनाश्रयमेघस्येह श्रवणक्रियायां विशेषणतया मुख्यविशेष्यत्वाभावात् । इतराविशेषणस्यैव मुख्यविशेष्यत्वात् । अन्यथा चैत्रो मैत्र इव गच्छतीत्यत्र मैत्रनिरूपितसादृश्याश्रयचैत्रो गमनानुकूलकृतिमानेक इत्यन्वयबोधे आख्यातोपात्तसंख्यायाश्चैत्र इव मैत्रेऽप्यन्वयः स्यात्, प्रथमान्तपदोपस्थाप्यत्वस्य तत्र सत्त्वात् । न चेतराविशेषणनिष्ठविशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितिर्विशेष्यतासंबन्धेनाख्यातार्थसंख्यान्वयबोधं प्रति हेतुरिति स्वीकारेण प्रकृते मैत्रे निरुक्तसंबन्धेन तादृशोपस्थितेरभावान्न तत्र तदन्वयापत्तिरिति वाच्यम् । शृणु गर्जति इत्यादावपि मेघादौ तदुपस्थितेर्निरुक्तसंबन्धेनाभावेन तदुपात्तसंख्यानन्वयापत्तेर्दुर्वारत्वात् । न च देवदत्तेन सुप्यत इत्येकवचनोपात्तैकत्वस्योपस्थितस्याप्यन्वयाभाववद् गर्जतीत्येकवचनोपस्थाप्यैकत्वान्वयो मेघे नेष्यत एवाविवक्षितत्वादिति वाच्यम्, 'शृणु गर्जति मेघाः' इत्यादिप्रयोगापत्तेरित्याशयवाननुवदति—यत्त्वित्यादि साधुत्वापत्तेरित्यन्तेन । कीर्तिरित्यत्र भातीति क्रिया-

ध्याहारः । साधुत्वापत्तेरिति । धावति मृगा इत्याख्यातोपस्थाप्यसंख्याया अविवक्षितत्वेनैकवचनोपस्थाप्यैकत्वस्य मृगेष्वन्वयाभावेन तादृशवाक्यस्यायोग्यत्वाभावादित्यर्थः । मुख्यविशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितिर्विशेष्यतासंबन्धेनाख्यातार्थसंख्यान्वयबोधं प्रति हेतुरिति न स्वीक्रियते, येन मृगादेः कर्मतया दृशिक्रियायां विशेषणत्वेन यत्र तादृशसंबन्धेन तदुपस्थितेरभावात्संख्यान्वयो न स्यात्, तदनन्वये धावति मृगा इत्यादेरापत्तिश्च स्यात् । अपि तु विशेष्यतासंबन्धेन तदुपस्थितिस्तदन्वयबोधे कारणमित्यभ्युपगम्यते । तथा च विशेष्यता संबन्धेन तदुपस्थितेर्मृगे सत्त्वेन न पश्य मृगो धावतीत्यादावेकत्वान्वयानुपपत्तिः, धावतीत्येकवचनोपात्तस्यैकत्वस्य विवक्षितस्य मृगेषु बाधेन न वा धावति मृगा इत्यादेरयोग्यस्य योग्यत्वापत्तिरित्यभिप्रायेण समाधत्ते । तत्र तत्र मुख्येति न वक्तव्यमिति । ननु निरुक्तकार्यकारणभावे विशेष्यतायां मुख्यत्वानिवेशे 'हंसीव धवला' इत्यत्र हंस्यामपि संख्यान्वयप्रसङ्ग इत्युक्तमिदानीं कथमुच्यते तत्र मुख्येति न वक्तव्यमितीतिचेन्न, तत्र हंस्यां संख्यान्वयस्वीकारे इष्टापत्तेः । चैत्र एव पचतीत्यादौ विशेष्यतायां मुख्यत्वनिवेशे व्यभिचाराच्च । तथा च मुख्येति न वक्तव्यमिति समीचीनमेवोक्तमित्यभिप्रायेणाह—चैत्र एव पचतीत्यादौ व्यभिचारादिति । मुख्यविशेष्यतासंबन्धेन तदुपस्थितेस्तत्र हेतुत्वस्वीकारे तत्र प्रतिज्ञातव्यभिचारं स्फुटयति—अन्ययोगव्यवच्छेदेत्यादिना । तत्रान्यस्मिन्योगस्तादात्म्यं तस्य व्यवच्छेदोऽत्यन्ताभावः । यत्र यस्य तादात्म्याभावस्तत्र तद्भेद इति नियमेन भेदवन्निष्ठभेद इति प्राप्तम् । तथा च भेद आश्रयो भेदः प्रतियोगितावच्छेदकत्वमेवकारार्थः । यथा 'पार्थ एव धनुर्धरः' इत्यादौ पार्थशब्दोत्तरैवकारार्थो भेद आश्रयो भेदः प्रतियोगितावच्छेदकत्वं, तत्र प्रतियोगितासंबन्धेन पार्थस्य भेदे, विशेषणताविशेषसंबन्धेन भेदस्याश्रये, आधेयतासंबन्धेनाश्रयस्य भेदे, स्वनिरूपितत्वसंबन्धेन भेदस्य प्रतियोगित्वे, स्वरूपसंबन्धेन प्रतियोगितावच्छेदकत्वस्य विशेषणतावच्छेदके धनुर्धरत्वे, तादात्म्यसंबन्धेन धनुर्धरत्वावच्छिन्नस्य पार्थेऽन्वयः । तथाच प्रतियोगित्वसंसर्गावच्छिन्नपार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नविशेषणताविशेषसंसर्गावछिन्नभेदनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नाधेयतासंसर्गावच्छिन्नाश्रयनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नस्वनिरूपितत्वसंसर्गावच्छिन्नभेदनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रतियोगित्वनिष्ठप्रका-

रतानिरूपितविशेष्यत्वाभिन्नस्वरूपसंसर्गावच्छिन्नप्रतियोगितावच्छेदकत्व-निष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नधनुर्धरत्वनिष्ठप्रकारतानिरूपितविशे-ष्यत्वाभिन्नतादात्म्यसंसर्गावच्छिन्नधनुर्धरनिष्ठप्रकारतानिरूपितपार्थनिष्ठमु-ख्यविशेष्यताशाली पार्थान्यनिष्ठभेदप्रतियोगितावच्छेदकधनुर्धरत्वाव-च्छिन्नाभिन्नः पार्थ इत्यन्वयबोधो निष्पन्नः। एवं चैत्र एव पचतीत्यादावपि चैत्रान्यनिष्ठभेदप्रतियोगितावच्छेदकपाकानुकूलकृतिमानेकश्चैत्र इत्यन्वय-बोधो द्रष्टव्यः। इत्थं च चैत्रस्य भेदे विशेषणत्वेनेतराविशेषणनिष्ठविशे-ष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितेस्तत्राभावेनैकत्वान्वयबोधोदयात्तत्र व्यभिचारः स्फुट एवेत्येतदभिप्रेत्याह—एवकारार्थैकदेशे इत्यादि। एक-देशे भेदे। प्रथमान्तपदजन्योपस्थितिविषयत्वाभावात् इतराविशेषणनिष्ठा-विशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितेरभावात्। कथं चैत्रस्य भेदे विशेषणत्वमित्यत आह—चैत्रान्यो न पचतीत्यादि। चैत्रान्यनिष्ठभेद—प्र-तियोगितावच्छेदक—पाकानुकूलकृति—मानेकश्चैत्र इत्येव चैत्रान्यो न पचति चैत्रः पचतीत्यस्यार्थः, न तु चैत्रान्यः पाकानुकूलकृत्यभाववान्पाकानुकूल-कृतिमांश्चैत्र इति, नातो विशेष्यभेदेन वाक्यभेदापत्तिः। तदर्थात् चैत्र एव पचतीत्यस्यार्थात्। मुख्यविशेष्यतासंबन्धेन तदुपस्थितेस्तत्र कारणत्वानङ्गी-कारे केन संबन्धेन तत्र तस्याः कारणत्वमित्याशङ्क्य मुख्यामुख्यसाधा-रणविशेष्यतासंबन्धेन तस्याः कारणत्वमित्याह—तथा चेति।

अन्यथा मुख्यविशेष्यतासंबन्धेन तदुपस्थितेः कारणत्वाङ्गीकारे। 'हंसीव कृष्ण ते कीर्तिः' इत्यत्रैकत्वाश्रयहंसीनिरूपितसादृश्याश्रयत्वसंबन्धिनी स्वर्गङ्गाकर्मकावगाहनाश्रयत्ववतीत्यन्वयबोधस्तथा च संख्यावगाहनाश्रय-त्वयोरुपमानोपमेयसाधारणधर्मत्वेन हंसीव कृष्णेत्यादेः साधुत्वं, हंस्यां सं-ख्यान्वयानङ्गीकारेऽसाधुत्वम्[1]। इत्थं चोपमानोपमेयनिष्ठलिङ्गवचनभेदे-ऽसत्यपि तद्वाक्यासाधुत्वेन व्यतिरेकव्यभिचाराद्दूरस्यापादकालिङ्गवचन-भेदस्योपमानोपमेयनिष्ठस्यालङ्कारिकमते दुष्टतानियामकत्ववर्णनं न स्यादि-त्याह—इत्याद्युपमान इत्यादि दुष्टत्वं न स्यादित्यन्तेन। उपमाने हंस्यां, संख्यान्वयानङ्गीकारे आख्यातार्थसंख्यान्वयानङ्गीकारे, साधारणधर्मत्वा-नुपपत्तेरिति अङ्गीकर्तुमुचित इत्यत्र हेतुः।

ननु संख्यायास्तत्साधारणधर्मत्वाभावे को दोष इत्यत आह—हंसीवे-

१ उपमानोपमेयवाचकपदयोर्लिङ्गवचनभेदे असाधुत्वमित्यन्वयतः, भेदाभावे असाधुत्वा-भाव इति व्यतिरेकतश्च सहचारो बोध्यः।

स्यादि । असाधुत्वापत्तावित्यतः पूर्वमुपमानोपमेयवाचकपदयोर्लिङ्गवचनै-क्येऽपि इति शेषः । तथा च लिङ्गवचनैक्येऽसाधुत्वापादनेन व्यतिरे-कव्यभिचारो दर्शितः । दुष्टत्वं दुष्टतानियामकत्वं न स्यादिति । तथा च संख्यायास्तत्साधारणधर्मत्वाभावेऽयमेव दोष इति मुख्यामुख्यसाधा-रणविशेष्यतासंबन्धेन तस्यास्तत्र कारणत्वमुचितमिति भावः । विशे-ष्यतायां मुख्यत्वानिवेशे हंस्यामपि संख्यान्वयप्रसङ्गो यो दत्तस्तस्य तत्र मुख्येति न वक्तव्यमित्यर्थाक्षिप्तेष्टापत्त्या वारणं, विशेष्यतायां मुख्यत्व-निवेशे व्यभिचारापादनं, प्रत्युतोपमाने संख्यान्वयानङ्गीकारे दुष्टत्वं न स्यादित्यनिष्टापादनं च कृत्वा मुख्यामुख्यसाधारणविशेष्यतासंबन्धेन तस्यास्तत्कारणत्वं स्थापितम् ।

अधुना तेनैव संबन्धेन तत्कारणत्वे मानान्तरमाह—संख्याकालातिरि-क्ताख्यातार्थो हीत्यादिना । भावनान्वयिनि संख्यान्वय इति नियमा-द्वेति । कर्तृप्रत्ययस्थले कर्ता भावनान्वयी, कर्मप्रत्ययस्थले कर्म भावना-न्वयि, उभयोरप्युभयत्र प्रथमान्तपदोपात्तत्वम्, इति विशेष्यतासंबन्धेनैव तस्यास्तत्कारणत्वं लभ्यते नतु मुख्यविशेष्यतयापि, भावनान्वयिमात्र एव संख्यान्वयाभिधानात् । तथा च पश्य मृगो धावतीत्यादौ मृगादेः कर्मतया दर्शनविशेषणत्वेऽपि विशेष्यतया तदुपस्थितेस्तत्र सत्त्वेन न संख्यान्वया-नुपपत्तिरिति भावः ।

यद्वा ननु विशेष्यतासंबन्धेन तदुपस्थितेस्तत्र कारणत्वे तण्डुलः पचती-त्यादिलाक्षणिकप्रयोगे तदुपस्थितेस्तेन संबन्धेन तण्डुले सत्त्वेन संख्या-न्वयापत्तिरित्यत आह—संख्याकालातिरिक्तेत्यादि । भावनान्वयिनि संख्यान्वय इति मूलस्य, यो वस्तुगत्या भावनान्वयी तन्निष्ठविशेष्यतासं-बन्धेन प्रथमान्तपदजन्योपस्थितिः संख्यान्वयबोधे कारणमित्यत्र तात्प-र्यम्, तथाच तण्डुले भावनान्वयाभावेन तादृशसंबन्धेन तदुपस्थितेर-भावान्न तत्र संख्यान्वयापत्तिरिति भावः । ननु—निरुक्तसंबन्धेन तदुप-स्थितेस्तत्र कारणत्वाङ्गीकारे भूतले घटो नास्तीत्यत्र भूतलवृत्तिघटाभा-वोऽस्तित्वाश्रय इति बोधेऽभावस्य भावनान्वयित्वेनाभावे संख्यान्वयो वक्तव्यस्तथा सति भूतले घटौ नास्तीत्येतस्यापत्तिः, अस्तीत्येकवचनोपात्तै-कत्वस्याभावेऽबाधात् । न चाभावस्य भावनान्वयित्वेऽपि प्रथमान्तपदोपस्था-प्यत्वाभावान्न तत्रैकत्वान्वयापत्तिरिति वाच्यं, नञुत्तरविभक्तेर्लुप्तायाः स्म-रणेन तदर्थस्यापि प्रथमान्तपदोपस्थाप्यत्वात्, अन्यथा घटो नास्तीत्यत्राप्य-

भावे एकत्वान्वयानुपपत्तेः। न च तत्र भूतलवृत्त्यभावप्रतियोगिघटोऽस्तीति बोधस्तथाच घटस्य भावनान्वयित्वेन तत्रैव तदुक्तसंख्यान्वय इति भूतले घटौ नास्तीत्यत्र तदुक्तैकत्वस्य भावनान्वयिघटद्वये बाधेनायोग्यत्वमिति वाच्य, के इत्यधिकरणाकाङ्क्षापत्तेः—इति चेन्न। नञ्समभिव्याहारस्थले यो भावनान्वय्यभावप्रतियोगी तन्निष्ठविशेष्यतासंबन्धेन तदुपस्थितेः संख्यान्वयबोधे कारणत्वं,नञसमभिव्याहारस्थले यो वस्तुगत्या भावनान्वयी तन्निष्ठविशेष्यतासंबन्धेन तदुपस्थितेः संख्यान्वयबोधे कारणत्वम्। एवं च घटो नास्तीत्यत्र घटाभावोऽस्तीति बोधेऽपि भावनान्वय्यभावप्रतियोगिनि घटे एकत्वान्वयसंभवेन योग्यत्वं, घटौ नास्तीत्यत्र तादृशे घटद्वये एकत्वा-न्वयासंभवेनायोग्यत्वं, घटौ न स्त इत्यत्र तादृशे घटद्वये स्त इति द्विवचनोपात्तद्वित्वान्वयसंभवेन योग्यत्वमिति निरुक्तदोषाभावात्।

यद्वा भूतले घटो नास्तीत्यत्र निरूपितत्वं सप्तम्यर्थो विद्यमानत्वमस-धातोरर्थ आश्रयत्वमाख्यातार्थः। तथा च भूतलनिरूपितविद्यमानत्वाश्र-यत्वाभाववानेको घट इति बोधे आख्यातोपस्थाप्यैकत्वस्य घटेऽन्वयेन तद्वाक्यस्य योग्यत्वं, घटौ नास्तीत्यत्र विद्यमानत्वाश्रयत्वाभाववति घटद्वयेऽस्तीत्येकवचनोपात्तैकत्वस्य बाधेनायोग्यत्वम्। न चाख्यातार्थस्य निषेधेऽन्वयो न दृष्टचर इति वाच्यम्। न पचति चैत्र इत्यादावेव निषेधे आख्यातार्थकृतेरन्वयस्य दृष्टत्वात्। ननु तत्र घटस्य भाव-नान्वयित्वाभावेन भावनान्वय्यभावप्रतियोगित्वाभावेन च कथमाख्या-तोपस्थाप्यसंख्यान्वय इति चेन्न। यः साक्षात्परंपरासाधारणभाव-नाविशेष्यस्तन्निष्ठविशेष्यतासंबन्धेन प्रथमान्तजन्योपस्थितेराख्यातार्थ-संख्यान्वयबोधे कारणत्वस्वीकारेण तत्र घटस्य साक्षाद्भावनाविशेष्य-त्वाभावेऽपि स्वाश्रयाश्रयत्वसंबन्धेन भावनाविशेष्यत्वात्तत्र संख्यान्वया-नुपपत्तेरभावात्। न चैवमपि द्वित्ववद्घटत्वावच्छेदेन भूतलनिरू-पितवर्तमानत्वाश्रयत्वाभावस्यान्वये एकघटवति भूतले घटौ न स्त इति न स्यात्, घटवृत्तिद्वित्वसामानाधिकरण्येन तादृशनञर्थान्वये तु घट-द्वयवत्यपि घटौ न स्त इति स्यादधिकरणान्तरीयघटे भूतलास्तित्वा-भावादिति वाच्यम्, घटवृत्तिद्वित्वत्वावच्छेदेन नञर्थस्य सामानाधि-करण्यान्वयात्। अधिकरणान्तरीयद्वित्वे नञर्थसामानाधिकरण्येऽप्ये-

१ भूतलवृत्त्यभावप्रतियोगिघटोस्तीतिवाक्यार्थबोधाङ्गीकारे इति शेषः।

तद्भूतलवृत्तिघटवृत्तिद्वित्वे भूतलास्तित्वाभावसामानाधिकरण्याभावान्न घटद्वयवति घटौ न स्त इत्यापत्तिरिति।

ननु भूतले घटो नास्तीत्यत्रानुयोगिवृत्तित्वाभावस्य प्रतियोगिन्यन्वयस्वीकारे जातौ सत्ता नास्तीत्यत्र जातिनिरूपितवृत्तित्वाश्रयत्वाभाववती सत्तेति तदन्वयबोधो वक्तव्यः। स च न संभवति। जातिनिरूपितैकार्थसमवायावच्छिन्नवृत्तित्वस्य सत्तायां सत्त्वेन तदभावबोधनासंभवाज्जातिसमवेतत्वस्य चाप्रसिद्ध्या निषेद्धुमशक्यत्वादिति चेन्न। भूतले घटो नास्तीत्यत्र 'भूतलवृत्तिघटाभावोऽस्तित्वाश्रयः' इतिबोधस्वीकर्तृनये जातौ न सत्तेत्यत्र जातिवृत्तिसत्ताभाव इत्युपपत्तावपि जातिर्न सत्तावृत्तिरित्यत्र संबन्धसामान्यावच्छिन्नसत्तावृत्तित्वाभावस्य जातावसंभवेन समवायसंबन्धावच्छिन्नसत्तावृत्तित्वस्य चाप्रसिद्ध्या निषेधासंभवेन तत्पूर्वपक्षस्य तुल्यत्वात्।

ननु जातिर्न सत्तावृत्तिरिति वाक्यमयोग्यमेव, वृत्तिपदं वा साक्षात्संबन्धावच्छिन्नवृत्तिपरम्। तथा च तत्र सत्तानिरूपितसाक्षात्संबन्धावच्छिन्नवृत्तित्वाभावः प्रतीयते। सत्तानिरूपितसाक्षात्संबन्धावच्छिन्नवृत्तित्वं च स्वरूपसंबन्धमादाय प्रमेयत्वादौ प्रसिद्धमिति नोक्तदोष इति चेन्न। जातौ सत्ता नास्तीत्यपि वाक्यमयोग्यमेवेत्यस्यासधातोः साक्षात्संबन्धावच्छिन्नवृत्तित्वे लक्षणास्वीकारेण तत्र जातिनिरूपितसाक्षात्संबन्धावच्छिन्नवृत्तित्वाश्रयत्वाभाववती सत्तेति बोध इत्यस्य वाऽनुयोगिवृत्तित्वाभावस्य प्रतियोगिन्यन्वय इति स्वीकर्त्रा मयापि वक्तुं शक्यत्वादिति दिक्।

क्रियाया विशेष्यत्वे 'प्रयाति पुरुषस्तस्य चरणावभिवादये' इत्यादौ तच्छब्देन पुरुषपरामर्शो न स्यादित्याशङ्क्य 'पटोलपत्रं पित्तघ्नं नाडी तस्य कफावहा' इत्यादि प्रयोगदर्शनात्तच्छब्देन विशेषणस्यापि परामर्श इति यत्समाहितं तदयुक्तम्। तत्र तच्छब्देन विशेषणस्यापि मरामर्श इति तु सत्यम्। परंतु यावत्कालं तच्छब्दस्य प्रधानपरामर्शित्वं तावत्कालं विशेषणपरामर्शित्वं नोचितमिति 'प्रयाति पुरुषः' इत्यादौ प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे तस्येतितच्छब्देन प्रधानीभूतस्यैव परामर्श इति तथैव स्वीकारादित्यभिप्रेत्याह—क्वचिद्विशेष्यस्य क्वचिद्विशेषणस्य परामर्शादित्यादि। क्वचित्प्रयाति पुरुष इत्यादौ विशेष्यस्य। क्वचिद्विशेषणस्य 'पटोलपत्रं पित्तघ्नम्' इत्यादौ।

नन्तु तच्छब्दस्य विशेषणपरामर्शित्वे घटोऽयं तज्जातिरित्यादौ तच्छब्देन घटत्वपरामर्शः स्यादित्यत आह—परं त्विति। पदार्थतावच्छेदकरूपविशेषणस्य पदशक्यतावच्छेदकरूपविशेषणस्य। नातः पटोलपत्रमित्यादौ पटोलादिपदस्य पटोलादिसंबन्धिनि लक्षणास्वीकारे पटोलादेः पदार्थतावच्छेदकत्वेऽपि तत्परामर्शानुपपत्तिरिति भावः ॥

स्वविलक्षणत्वव्यापकाविद्यातत्प्रयुक्तदृश्याश्रयकालपूर्वत्वाभावकशुद्धचिज्ज्ञाननिरस्तविपरीतभावनीभूतश्रीमदुदयसिंहप्रभुवर्यलब्धजीवकहरियशोमिश्रनिर्मिता वाक्यदीपिका समाप्तिमगमत्।

---